सारदाविनोदे

# सिद्धान्तकौमुद्याः

Vol. 2, Pt. 2

## समासप्रकरणम्

Sa4V
Dik/Ray

SECOND EDITION

REVISED AND ENLARGED

BY

**KUMUDRANJAN RAY,** M. A., Ph. D (H).,
Bhishagacharyya.

मूल्यं सार्द्धं रूप्यकत्रयम् ] [ Rs. 5/8/-



CENTRAL ARCHAEOLOGICAL
LIBRARY NEW DELHI.
Acc. No. 447.
13/10/53.
Call No. Sa 4 V/Sik/Ray.
Vol. II - Pt. II.
447.

# समासप्रकरणम्

## अथ सुपसुपा

६४७। **समर्थः पदविधिः** ॥ २।१।१ ॥

**दीक्षितः।** पदसम्बन्धो यो विधिः स समर्थाश्रितो बोध्यः।

It is to be understood that injunctions regarding inflected words have to be carried out without alteration of sense.

**मितभाषिणी।** पदानां विधिः 'पदविधिः' पदसम्बन्धी विधिः। शेषषष्ठ्या समासः॥ 'समर्थः' इत्यत्र अर्थशब्दः प्रयोजनवचनः। समासे 'सम्' इति तुल्यार्थे वर्तते। सम् तुल्यः अर्थः, यद्वा समः तुल्यः अर्थः, प्रयोजनमेषां समर्थाः अभिप्रायबोधनं प्रति तुल्यप्रयोजनाः। 'राज्ञः पुरुषः' इति राजस्वामिकं पुरुषं बोधयति। तत्र बोधे 'राज्ञः' इति यथा सप्रयोजनं 'पुरुषः' इत्यपि तथा। तावपीह तुल्यप्रयोजनौ शब्दौ परस्परसापेक्षौ। एवं 'समर्थः' सापेक्षः। इह तु लक्षणया समर्थशब्दः समर्थाश्रिते वर्तते। 'पदविधिः समर्थाश्रितः' समर्थमाश्रित इति बोध्यः। सापेक्षान् शब्दानाश्रित्य पदविधिः प्रवर्त्तते इति भावः॥ प्रवृत्तेः पूर्वं यः सापेक्षशब्दानां समुदायः वाक्यमिति विग्रह इति विग्रहवाक्यमिति च कथ्यते। प्रवृत्ते विधौ जातं रूपं वृत्तिरित्यभिधीयते। सामर्थ्य सापेक्षता व्यपेक्षा इति पर्यायवचनानि॥ किञ्च—अर्थशब्दः अभिधेयवचनः। संसृष्टः एकीभूतः अर्थः अस्मिन् विधौ इति 'समर्थः पदविधिः'। तस्यां वृत्तौ घटकपदयोस्तुल्यार्थता जायते इत्यर्थः। राजपुरुषशब्दे राजशब्दः पुरुषयुक्तं राजानमाह न राजमात्रम्। एवं पुरुषशब्दोऽपि राजयुक्तं पुरुषमाह न पुरुषमात्रम्। इत्थं राजशब्दस्य पुरुषशब्दस्य च अर्थः संसृष्टो जातः। सति संसर्गे सामर्थ्यं, तच्च एकार्थीभाव इत्यपि कथ्यते॥ इत्थं समर्थशब्दस्य इह द्वावर्थौ—समर्थः सापेक्षः, समर्थः संसृष्टार्थः एकार्थीभूत इति। तत्र सापेक्षता वाक्ये एकार्थीभावो वृत्तावेव॥ अन्यच्च विधिप्रवृत्तेः प्रागपि वाक्ये योऽर्थः परमपि वृत्तौ स एव। 'राज्ञः पुरुषः' इति

च 'राजपुरुषः' इति च तुल्यमेव राजस्वामिकं पुरुषं गमयतः । इयमेव पदविधिर्गमकता नाम । सत्यामस्यामसमर्थोऽपि क्वचित् प्रवर्तते विधिः, यथा 'असूर्यम्पश्या राजदाराः' इत्यत्र । असति तु गमकत्वे अप्रवृत्तिरेव विधेः ॥ समासः, एकशेषः ( सविभक्तिक पक्षे ), तद्धितः, सनाद्यन्तधातुः, कृत् इति पदविधयः पञ्च ॥

६४८ । प्राक् कडारात् समासः ॥ २।१।३ ॥

दी— । "कडाराः कर्मधारये" ( ७५१—२।२।३८ ) इत्यतः प्राक् 'समासः' इत्यधिक्रियते ।

The name समास attaches itself to all injunctions up to "कडाराः—" ( 751 ).

मित— । इह प्रागिति द्विरावर्त्तनीयम् । 'कडारात् प्राक् प्राक् समासः' इत्यन्वयः । 'कडारात् प्राक्' कडारशब्दोच्चारणात् पूर्वं 'प्राक्' प्रथमं समाससंज्ञा जायते ततः अव्ययीभावादयः इत्यर्थः । अव्ययीभावादिभिः संज्ञाभिः समाससंज्ञा न प्रतिषिध्यते इत्याशयः । यथा कारकमिति सामान्यतो नाम अपादानादयस्तद्विशेषाः तथा समास इति सामान्यमव्ययीभावादयो विशेषाः इत्यर्थः ॥ समासो हि वृत्तिभेदः । समसनम् एकत्र निक्षेपः एकस्यां वृत्तौ अन्तर्भावः समासः ॥

६४९ । सह सुपा ॥ २।१।४ ॥

दी— । 'सह' इति योगो विभज्यते । सुबन्तं समर्थेन सह समस्यते । योगविभागस्य इष्टसिद्ध्यर्थत्वात् कतिपयतिङन्तोत्तरपदोऽयं समासः, स च छन्दस्येव । पर्यभूषयत् । अनुव्यचलत् ॥ 'सुपा' । सुप्सुपा सह समस्यते । समासत्वात् प्रातिपदिकत्वम् ।

The word सह has to be separated from its connection in this rule. This gives सुबन्तं &c.—A सुबन्त word may be compounded with any word having syntactical relation with it. But a योगविभाग is made to serve some special purpose only ; hence this समास is but with a few तिङन्त words and appears in

the Vedas only. Thus पर्य्यभूषयत्। अनुव्यचलत्। Next comes सुपा। This gives सुप्सुपा &c.—A सुबन्त word may be compounded with another सुबन्त word. After the compounding the name समास is attached and hence the whole becomes a प्रातिपदिक।

मित—। "सुपामन्त्रिते—" ( २६५६—२।१।२ ) इत्यतः 'सुप्' इत्यनुवर्त्तते। पूर्वसूत्रात् 'समासः' इति च। समास इति संपूर्वस्य असतेः रूपमात्रस्योपलक्षणम्। इह तु 'समस्यते' इति रूपं गृह्यते। तेन 'सुप् सह समस्यते' इति जातम्॥ सुबिति सुबन्तम्। केन सह तत् समस्यते इत्याकाङ्क्षायाम्—'व्यपेक्षावता येन केनचित्' इत्युत्तरम्। तदाह—'सुबन्त' समर्थेन व्यपेक्षावता शब्देन 'सह समस्यते' लब्धस्य शब्दस्य च समास-संज्ञा॥ नायं योगविभागः सार्वत्रिकः। 'इष्टानाम्' अभिमतानां, प्रयोगाणां 'सिद्धिरेव' अस्य 'अर्थः' प्रयोजनम्। कानि इह इष्टानि इत्याह—'अयं समासः कतिपये तिङन्ताः' शब्दाः 'उत्तरपदं यस्य तादृशः। कुत्र तथा दृश्यते ? 'सं च छन्दस्येव' न भाषायाम्। 'पर्य्यभूषयत्' इति परिशब्दस्य अभूषयत् इत्यनेन समासः। 'अनु-व्यचलत्' इति विशब्दस्य 'अचलत्' इत्यनेन, ततोऽनुशब्दस्य व्यचलत् इत्यनेन॥ इतं योगविभागे 'सुपा' इति शिष्यते। ततोऽनुवृत्त्या सह जातं 'सुप् सुपा समस्यते' इति। सुबन्तं पदं समर्थेन सुबन्तेन सह समस्यते इत्यर्थः॥ 'सुप्' इत्येकवचनं 'सुपा' इति च। एकत्वं विवक्षितं, तेन एकमेव पदमेकेनैव पदेन समस्यते इति प्रायेण बहूनां समासो न भवति। द्वन्द्वबहुव्रीह्योस्तु 'अनेकम्' इति विशिष्योक्तेर्बहुपदत्वं न दोषाय॥ समसनान्तम् परं समाससंज्ञा॥ 'पूर्वं भूतः' इति विग्रहे "सुप्सुपा" इति समासः। ततः "कृत्तद्धित-समासाश्च" ( १७९—१।२।४६ ) इति प्रातिपदिकसंज्ञायाम्—.

६५०। सुपो धातुप्रातिपदिकयोः॥ २।४।७१॥

टी—। एतयोरवयवस्य सुपो लुक् स्यात्। "भूतपूर्वे चरट्" ( १९९८—५।३।५३ ) इति निर्देशात् भूतशब्दस्य पूर्वनिपातः। पूर्वं भूतो भूतपूर्वः।

A case-affix forming part of a धातु or a प्रातिपदिक disappears. Now पूर्वं भूतः when compounded becomes a प्रातिपदिक ; hence

dropping the case-affixes the form is पूर्वं भूत। But Panini himself writes भूतपूर्व in the rule "भूतपूर्वे—" ( 1999 ); hence the form of the प्रातिपदिक is भूतपूर्व with the word भूत leading in it.

मित—। "ण्यक्षत्रियार्ष—" ( १२६७—२।४।५८ ) इत्यतो 'लुक्' इत्यनुवर्तते। तदपेक्षया 'सुपः' इति षष्ठी। 'सुपो लुक्' सुप् लुप्यते इत्यर्थः। सुबपेक्षया धातु-प्रातिपदिकयोरिति अवयवावयविभावसम्बन्धे षष्ठी। धात्ववयवः सुप् प्रातिपदिकावयवश्च सुप् लुप्यत इत्यर्थः। 'पूर्वं भूतः' पदसमुदायस्य प्रातिपदिकसंज्ञा। विभक्ति-लोपे 'पूर्वभूते' इति प्राप्ते "भूतपूर्वे—" इति निर्देशात् ज्ञापकात् 'भूतपूर्व' इति प्राति-पदिकम्। ततः प्रातिपदिकार्थे प्रथमा—भूतपूर्वः। समुदायस्य प्रातिपदिकसंज्ञा, घटकपदयोस्तु लुकेऽपि प्रत्यये "प्रत्ययलोपे—" ( २६३—१।१।६२ ) इति पदसंज्ञा प्राप्ता न क्षीयते॥

**दी—। "इवेन समासो विभक्त्यलोपश्च"(वार्त्तिक)। जीमूतस्येव।**

A word having syntactical relation with इव is compounded with it and leads in the compound retaining its विभक्ति। Thus जीमूतस्येव—As of the cloud.

मित—। इह 'पूर्वपदप्रकृतिस्वरत्वञ्च' इत्यधिकं भाष्ये। 'सुप् इवेन सहस्यते स च सुप् न लुप्यते' इत्यर्थः। 'सुप् सुपा' इति समासः 'इवेन' इति तृतीयान्तत्वात् इवशब्दस्य परनिपातः। इवशब्दे तु अव्ययत्वात् समासात् प्रागपि लुप्ता विभक्तिः। 'जीमूतस्य' इति "सुपो धातु—" ( ६५०—२।४।७१ ) इत्यनेन प्राप्तो लोपः 'विभक्त्यलोपः' इति प्रतिषिध्यते॥ इवार्थस्य प्राधान्यात् समुदायस्यापि अव्ययत्वम्। इदं तत्पुरुषप्रकरणेऽपि पठितम्॥

---

## अथाव्ययीभावः

६५१। अव्ययीभावः॥ २।१।५॥

दी—। अधिकारोऽयम्।

What follows comes under the jurisdiction of अव्ययीभाव, *i. e.*, this संज्ञा attaches to what follows.

६५२। अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु ॥ २।१।६ ॥

दो—। 'अव्ययम्' इति योगो विभज्यते। अव्ययं समर्थेन सह समस्यते। सोऽव्ययीभावः।

Here अव्ययम् has to be separated from its context and forms a rule by itself. The sense then is—An अव्यय may be compounded with anything syntactically connected with it, and the compound is an अव्ययीभाव। The object of this योगविभाग is to compound अप, in the sense मध्य, with दिशयोः, for the compound अपदिशम्।

मित—। 'सुप् सुपा' इति वर्त्तते। यस्य यस्य अव्ययस्य विभक्त्यादिरर्थः तत्तत् समर्थेन सुबन्तेन सह समस्यते इति सूत्रार्थः॥ नन्विह 'विभक्ति—' इत्यादिषु मध्यार्थो न गृह्यते, तत् 'अपदिशम्' इत्यादिषु मध्यार्थे वर्त्तमानस्य 'अप' इत्यव्ययस्य कथं समासः? एतदर्थम् 'अव्ययम्' इति योगविभागः। ततः दिशयोर्मध्ये इत्यर्थे 'दिशयोः अप' इति समासे "सुपो धातु—" (६५०—२।४।७१) इति सुब्लुकि 'दिशा अप' इति जाते, 'अप दिशा' इति 'दिशा अप' इति वा विन्यासः स्यात् इति सन्देहे—

६५३। प्रथमानिर्दिष्टं समास उपसर्जनम् ॥ १।२।४३ ॥

दो—। समासशास्त्रे प्रथमानिर्दिष्टमुपसर्जनसंज्ञं स्यात्।

In the rules under समास the word that occurs in the प्रथमा विभक्ति is called an उपसर्जन। Here the rule is 'अव्ययम्' and प्रथमा is in the word अव्यय; so the अव्यय in an अव्ययीभाव is an उपसर्जन।

मित—। इह समास इति लक्षणया समासशास्त्रम् समासप्रकरणोक्तानि सूत्राणि। तदाह—'समासशास्त्रे' इति। "अव्ययं विभक्ति—" इति सूत्रे अव्ययमिति प्रथमानिर्दिष्टम्। तदिहाव्ययीभावे उपसर्जनम्। उदाहरणे 'अप' इत्युपसर्जनम्॥ भवतु, तस्य किम् ?

## ६५४। उपसर्जनं पूर्वम्॥ २।२।३०॥

दी—। समासे उपसर्जनं प्राक् प्रयोज्यम्।

In a compound, it is the उपसर्जन that leads. Thus अपदिशा is the order of the constituents.

मित—। समासे कृते यदुपसर्जनं तत् प्राक् पतति। इह 'अप' इत्यस्य पूर्वनिपाते 'अप दिशा' इति जातम्॥ प्रसङ्गात् उपसर्जनस्य लक्षणान्तरमाह—

## ६५५। एकविभक्ति चापूर्वनिपाते॥ १।२।४४॥

दी—। विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं न तु तस्य पूर्वनिपातः।

In the two words that are being compounded, that which does not change its विभक्ति while that of the other changes, is also an उपसर्जन but will not lead in the compound. Here, in the samasa अप ( मध्यं ) दिशयोः the विभक्ति in दिशयोः, does not change while that in अप ( मध्य ) changes according to the context. Thus अप ( मध्यं ) दिशयोः पश्यामि, अप ( मध्येन ) दिशयोः गच्छामि, अप ( मध्यात् ) दिशयोः आगच्छति, अप ( मध्यं ) दिशयोः निश्चीयते। Hence दिशा also is an उपसर्जन here but not in the matter of leading in the compound.

मित—। 'समासे' इति पूर्वसूत्रादनुवर्तते। समासयं इह समाससंश्रितं सविभक्तिकं पदद्वयम्, तदाह 'विग्रहे' इति। एका नियता विभक्तिर्यस्मिन् तदेकविभक्ति। भिन्नेष्वपि वाक्येषु प्रविष्टे पदद्वये यस्य विभक्तिर्न भिद्यते तदित्यर्थः। 'समासे एकविभक्ति

च अपूर्वनिपाते विषये उपसर्जनम् इत्यन्वयः। पूर्वनिपाते कर्तव्ये तु यदेकविभक्ति तस्य उपसर्जनसंज्ञा न भवति। अतएव 'राज्ञः पुरुषः' इत्यस्य पूर्वमेव संज्ञा नानेन॥ उदाहरणे दिशयोर्मध्यं पश्यामि, दिशयोर्मध्येन गच्छामि, दिशयोर्मध्यादागच्छति इत्यादिषु प्रकरणवशात् मध्यशब्दादनेकविभक्तिरुत्पद्यते, दिशाशब्दे तु एकैव षष्ठी-विभक्तिः स्थिता। यदेव अप इति तदेव मध्यमिति। एवमिह दिशा इत्युपसर्जनम्, तस्य तु पूर्वनिपातो न। यद्येवं किं संज्ञया इत्याह—

६५६। गोस्त्रियोरुपसर्जनस्य॥ १।२।४८॥

टी—। उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तश्च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात्। "अव्ययीभावश्च" (४५१—१।१।४१) इत्यव्ययत्वम्।

The word गौ and a word with a feminine affix, if an उपसर्जन and at the end of a प्रातिपदिक, will have its final vowel shortened. Thus दिशा which has the feminine affix टाप् becomes दिश। The compound now is अपदिश, and it is an अव्ययीभाव; also it is an अव्यय by the rule "अव्ययीभावश्च" (451—I. I. 41).

मित—। "ह्रस्वो नपुंसके प्रातिपदिकस्य" (३१८—१।२।४७) इत्यतो 'ह्रस्वः प्रातिपदिकस्य' इत्यनुवर्त्तते। तदन्तविधिः। प्रातिपदिकस्य अन्ते यदि उपसर्जनगोशब्दः यदि वा उपसर्जनस्त्रीप्रत्ययान्तशब्दः तदा तस्य ह्रस्वादेशः स्यात् इति सरलार्थः। गोशब्दस्य उदाहरणं चित्रगुः। "एच इग्—" (३१२—१।१।४८) इति ओकारस्य ह्रस्व उकारः। स्त्रीप्रत्ययान्तेषु दिशा इति टाबन्तः। दिश् इत्येव स्त्रियां वर्त्तते ततः "वष्टि भागुरि-रल्लोपमवाप्योरुपसर्गयोः। आपञ्चापि हलन्तानां यथा वाचा निशा दिशा॥" इति पुन-ष्टाप्। अन्ते चैतत् प्रातिपदिकस्य। ततो ह्रस्वे 'अपदिश' इति जातम्। समास-घटकवाक्यं तु 'दिशयोर्मध्ये' इति अधिकरणप्रधानम्, तेन 'अपदिशे' इति "अव्ययीभावश्च" इत्यव्ययत्वम् (४५१—१।१।४१)। प्राप्ते "अव्ययादाप्सुपः" (४५२—२।४।८२) इति सुब्लुका भाव्यम्। तदाह—

६५७। नाव्ययीभावादतोऽम्त्वपञ्चम्याः॥ २।४।८३।

टी—। अदन्तादव्ययीभावात् सुपो न लुक्। तस्य तु पञ्चमीं

विना अमादेशश्च स्यात्। दिशयोर्मध्ये अपदिशम्। "क्लीबा-व्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम्" इत्यमरः।

An अव्ययीभाव ending in अ does not drop its सुप्, but, except in पञ्चमी, the सुप् becomes अम्। Thus finally दिशयोर्मध्ये gives अपदिशम् in the सप्तमी। Amara confirms this sense by "क्लीब—" &c.

मित—। 'अत्' इत्यवर्णो ह्रस्वः। 'लुक्' 'सुपः' इत्यनुवृत्तम्। 'अतः अव्ययीभावात् सुपो लुक् न, अपञ्चम्यास्तु अम्' इत्यन्वयः। सुप् न लुप्यते किन्तु तस्य सुपः अमादेशः स्यात्, पञ्चम्यां तु सुप् स्वरूपेव तिष्ठति॥ इह सप्तम्याः अमादेशे अपदिशमिति रूपम्॥ 'अपञ्चम्याः' किम्? अपदिशात् अपदिशाभ्यामपदिशेभ्यः॥ अमरोक्तं दिशोर्मध्ये इत्यर्थे निर्देशः न विग्रहः॥

६५८। तृतीयासप्तम्योर्बहुलम्॥ २।४।८४॥

दी—। अदन्तादव्ययीभावात् तृतीयासप्तम्योर्बहुलमम्भावः स्यात्। अपदिशम्—अपदिशेन। अपदिशम्—अपदिशे। बहुल-ग्रहणात् 'सुमद्रम्' 'उन्मत्तगङ्गम्' इत्यादौ सप्तम्या नित्यमम्भावः।

There is diversity in the change into अम् in the तृतीया and सप्तमी after an अव्ययीभाव ending in अ। Thus both अपदिशम् and अपदिशेन in the तृतीया, also अपदिशम् and अपदिशे in the सप्तमी are seen; while after सुमद्र, उन्मत्तगङ्ग, &c, the सप्तमी is invariably changed giving सुमद्रम् and उन्मत्तगङ्गम् and not सुमद्रे and उन्मत्तगङ्गे also.

मित—। बहुलमिति अनित्यद्योतकं न विकल्पार्थकम्। "क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विकल्पः क्वचिदन्यदेव। विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥" द्विबहुवचनयोरपि अपदिशमित्येव। अमभावे—अपदिशेन अपदिशाभ्याम् अपदिशेभ्यः इति तृतीयायाम्, अपदिशे अपदिशयोः अपदिशेषु इति सप्तम्याम्॥ सम्प्रति "अव्ययम्—" इति सूत्रस्य शिष्टमंशं व्याचष्टे—

दी—। "विभक्ति—" इत्यादेरयमर्थः—विभक्त्यर्थादिषु

वर्त्तमानमव्ययं सुबन्तेन सह समस्यते सोऽव्ययीभावः। विभक्तौ तावत्—हरौ इत्यधिहरि। सप्तम्यर्थस्यैवात्र द्योतकोऽधिः। हरि ङि अधि इत्यलौकिकं विग्रहवाक्यम्। अत्र निपातेन अभिहितेऽप्यधिकरणे वचनसामर्थ्यात् सप्तमी।

After the योगविभाग of अव्ययम्, the part that remains means this—An अव्यय having the sense of some विभक्ति or meaning समीप, समृद्धि etc, is compounded with a सुबन्त word syntactically connected with it and the compound is called an अव्ययीभाव। Thus—( विभक्ति ) अधिहरि in the sense of हरौ। Here अधि merely expresses the sense of सप्तमी। The विग्रहवाक्य is हरि ङि अधि which exists on paper only and cannot be used in ordinary language. Here though the अव्यय indicates the अधिकरण, there is still ङि because the rule wants to have a समास।

मित—। 'हरौ' इत्यर्थे 'अधिहरि' इत्यव्ययीभावो नित्यसमासः। हरिरित्यधिकरणम्। अधिरिति सप्तम्यर्थमात्रं वक्ति, तेन तत्र प्रातिपदिकार्थे प्रथमा, अव्ययत्वात् लुप्ता। तदिह 'हरौ अधि' इति समासघटकं पदद्वयम्। सूत्रे च अव्ययमिति प्रथमान्तम्। तत उपसर्जनत्वात् अव्ययपूर्वनिपातः तेन च 'अधि हरौ' इति विन्यासः। समाससंज्ञा, सुब्लोपः—'अधिहरि' इति प्रातिपदिकम्। अव्ययीभावसंज्ञायामव्ययत्वम्। अधिकरणार्थे सप्तमी। "अव्ययात्—" (४५२—२।४।८२) इति पुनः सुब्लोपः। अम् तु न भवति अदन्तत्वाभावात्॥ नित्यसमासत्वाल्लौकिकं प्रयोगार्हं विग्रहवाक्यं नास्ति। अलौकिकं शास्त्रीयन्तु हरि ङि अधि इति॥ इह ङिरिति अधिरिति च तुल्यार्थौ, तदनयोरन्यतरो मास्तु। नैवम्। अधिरित्यसति 'हरि ङि' इत्येकमेवेह पदं कुतः समासः? असति च ङौ 'हरि' इति प्रातिपदिकमात्रं न सुबन्तम्। 'सुप्सुपा' इति च वर्त्तते, तत्रथैव असमासः। इष्यते च विभक्त्यर्थे समासः यतोऽयं 'अव्ययं विभक्ति' इति शास्ति। तत् सूत्रकारवचनसामर्थ्यादिह अधिना उक्तमप्यर्थं ङिः पुनर्वक्ति॥

६५८। अव्ययीभावश्च ॥ २।४।१८ ॥

टी—। अयं नपुंसकं स्यात्। "ह्रस्वो नपुंसके प्रातिपदिकस्य"

( ३१८—१।२।४७ )। गोपायतीति, गाः पातीति वा, गोपाः। तस्मिन्—अधिगोपम्।

An अव्ययीभाव compound is in the neuter. Hence with the exposition गोपायति—guards, or गाः पाति—preserves the earth, we have गोपाः। Compounding with अधि in the sense of ङि ( विभक्त्यर्थे ) we have अधि गोपि or अधि गोपे। Dropping the सुप् the result is अधिगोपा। This is to be in the neuter. Hence by "ह्रस्वो नपुंसके—" (318) we have अधिगोप as the final form of the प्रातिपदिक। In the सप्तमी this yields अधिगोपम् with अम् attached by "नाव्ययी—" (675—2. 4. 83).

मित—। गोपायतीति क्विपि—"अतो लोपः" (२३०८—६।४।४८), "लोपो व्योः—" (८७३—६।१।६६), "वेरपृक्तस्य" (३०५—६।१।६७)—गोपाः। यद्वा गाः पातीति क्विपि विचि वा गोपाः। तस्मिन् इति "आतो धातोः" (२४०—६।४।१४०) इत्याकारलोपे 'गोपि'। गोपि इत्यर्थे अधिना समासे सुब्लुकि अधिगोपा। अव्ययत्वे नपुंसकत्वम्। "ह्रस्वो नपुं—" (३१८) इति ह्रस्वत्वम्। अधिगोप। ततः सप्तम्यां "नाव्ययी—" (६५७) इत्यभावे अधिगोपम्।

टी—। समीपे—कृष्णस्य समीपमुपकृष्णम्। समया ग्रामम्, निकषा लङ्काम्, आराद्वनात्, इत्यत्र तु नाव्ययीभावः "अभितः परितः—" (५४४, वा—) "अन्यारात्—" (५९५—२।३।२९) इति द्वितीयापञ्चम्योर्विधानसामर्थ्यात्॥

In the sense of समीप—neighbourhood—उपकृष्णम् is an example, the meaning being 'neighbourhood of Krishna.' समया ग्रामम् etc., are uncompounded and not instances of अव्ययीभाव, the reason being that the declaration of द्वितीया and पञ्चमी by "अभितः—" and "अन्यारात्—" then becomes meaningless.

मित—। समीपमिति सन्निधिमात्रम्। उप इति समीपार्थकमव्ययं प्रथमान्तम्। कृष्णस्य समीपमित्यर्थनिर्देशः न विग्रहः। प्राग्वत् सुब्लुगादौ उपकृष्णम्। प्रथमाया अम्भावः॥ समया ग्रामम् इत्यादिषु भिन्ने पदे, न समासः। सति समासे "अभितः—" (५४४) इति, "अन्तरान्त—" (५८५) इति च व्यर्थं स्यात्। द्वितीयायां सत्यामसत्याञ्च समयाग्राममित्येव समासे रूपम् किं कृतं द्वितीयया? किञ्च नित्योऽयं समासः, तेन ग्रामं समया इत्यादि व्यस्तनिर्देशं परिकल्प्य विधिसमर्थनमप्ययुक्तमेव। तदाह 'विधानसामर्थ्यात् नाव्ययीभावः' इति। नागेशस्तु—'समया' इत्यादीनां 'समीपे' इत्याद्यधिकरणप्रधान एवार्थः। ततः 'समीपम्' इत्यर्थे असति, समासस्य प्राप्तिरेव नास्ति—इत्याह॥

**टी—। मद्राणां समृद्धिः सुमद्रम्। यवनानां व्यृद्धिर्दुर्यवनम्। विगता ऋद्धिर्व्यृद्धिः। मक्षिकाणामभावो निर्मक्षिकम्। हिमस्य अत्ययः अतिहिमम्। अत्ययो ध्वंसः। निद्रा सम्प्रति न युज्यते इत्यतिनिद्रम्। हरिशब्दस्य प्रकाशः इतिहरि।**

समृद्धि prosperity—सुमद्रम् prosperity of the *Madras*. व्यृद्धि adversity—दुर्यवनम्। अर्थाभाव absence of a substance—निर्मक्षिकम् absence of flies. अत्यय dis-appearance, destruction—अतिहिमम् absence of cold. असम्प्रति unsuitability—अतिनिद्रम् unsuitability of sleep. शब्दप्रादुर्भाव notoriety, spread of fame—इतिहरि spread of Hari's fame.

मित—। सुमद्रमिति समृद्ध्यर्थकसुशब्देन अव्ययेन समासः। सु इति प्रथमान्तम्। मद्राणामिति षष्ठ्यन्तेन समासः॥ विगता ऋद्धिरिति प्रादितत्पुरुषः॥ दुरित्यव्ययम् इह ऋद्धिनाशे वर्तते। तस्य प्रथमान्तस्य यवनानामिति षष्ठ्यन्तेन समासः। एवमुत्तरत्रापि षष्ठ्या एव समासः॥ निरित्यभावार्थकमव्ययम्। 'अर्थाभाव' इति उत्तरपदवाच्यस्य अर्थस्य अभावः। तेन दुर्यवनमित्यादौ नानेन प्रसङ्गः, तत्र हि अभावो यवनानामृद्धेर्न तु उत्तरपदवाच्यानां यवनानामेव। निर्मक्षिकमिति उपसर्जनह्रस्वो नपुंसकत्वाद्ध्रस्वो वा। एवमतिनिद्रमित्यपि॥ असम्प्रति इत्यस्य सम्प्रति न युज्यते

इत्यर्थः । प्रथमान्तस्य प्रथमान्तेन समासः ॥ प्रादुर्भावः प्रकाशः । इतिशब्द इह शब्दप्रादुर्भाववचनः ॥ सर्वत्र नित्यः समासः । अव्ययीभावे अव्ययार्थस्य प्राधान्यम् । पूर्वपदार्थप्रधानोऽव्ययीभावः ॥

**दी—। विष्णोः पश्चादनुविष्णु । पश्चाच्छब्दस्य तु नायं समासः, "ततः पश्चात् स्रंस्यते" इति भाष्यप्रयोगात् ।**

In अनुविष्णु, अनु means पश्चात् । पश्चात् itself cannot be compounded by this rule as is evident from ततः पश्चात् used uncompounded in the भाष्य ।

मित—।पश्चाच्छब्दस्य समासे तु नित्यत्वात् समासस्य 'ततः पश्चात्' इति वाक्यं "तासाञ्च पश्चात् कनकप्रभाणाम्" इत्यादि च दुर्लभम् । ज्ञापितञ्चेदमनेन यत् सूत्रेऽस्मिन् तत्तदर्थनिर्देशे गृहीतानि अव्ययानि तेषु तेषु अर्थेषु नानेन समस्यन्ते इति । तेन अतिहिममित्युक्तमत्ययस्योदाहरणम्, अत्ययशब्दे अतेर्ग्रहणात् । निर्हिममिति तस्य त्वनेव न्याय इति नागेशः ॥

**दी—। योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । अनुरूपम्—रूपस्य योग्यमित्यर्थः । अर्थमर्थं प्रति प्रत्यर्थम् । प्रतिशब्दस्य वीप्सायां कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात् तद्योगे द्वितीयागर्भं वाक्यमपि । शक्तिमनतिक्रम्य यथाशक्ति । हरेः सादृश्यं सहरि । वक्ष्यमाणेन सहस्य सः ।**

The senses of यथा are—Suitability, Repetition, Non-transgression, Similitude. Thus (योग्यता) अनुरूपम् which means 'befitting the looks.' (वीप्सा) प्रत्यर्थम् towards all. प्रति has been declared a कर्मप्रवचनीय in the matter of वीप्सा, hence in connection with it a वाक्य with the द्वितीया is also allowable—अर्थमर्थं प्रति । ( पदार्थानतिवृत्ति ) यथाशक्ति, again, in the sense 'not going beyond one's powers.' ( सादृश्य ) सहरि in the sense resemblance with हरि

is a compound of सह and हरि where सह implies सादृश्य and is changed into स in the compound by the rule following.

मित—। योग्यता साम‌ञ्जस्यम्। पदार्थस्य अनतिवृत्तिरनतिक्रमः॥ अनुरूपमित्यत्र योग्यता अनुशब्दस्य मुख्योऽर्थः, योग्य इति गौणः। अथवा मुख्यार्थे एव समासः। क्रिया काचिदध्याहर्त्तव्या। तथा हि रूपस्य योग्यता अनुरूपम्। तत् यथा भवति यथा करोति अनुरूपं करोति॥ अर्थमर्थं प्रति इति साकाङ्क्षं वाक्यम्। अर्थमर्थं प्रति शब्दः प्रयुज्यते इत्याकाङ्क्षानिवृत्तिः। इह द्विरुक्तेन वीप्सा गम्यते प्रतिना च वीप्सायुक्तस्य शब्दप्रयोगस्य अर्थेन सम्बन्धः। समासे तु प्रतिना एव द्योतिता वीप्सा, तत् तदर्थं पुनरर्थशब्दो न द्विरुच्यते॥ ननु नित्यसमासे कथमर्थमर्थं प्रति इति स्वपदविग्रहो दर्शितः? उच्यते—"लक्षणेत्थम्भूत—" (५५२—१।४।९०) इति वीप्सायां प्रतेः कर्मप्रवचनीयता उक्ता। तस्याः सार्थकता वाक्ये एव स्यात्। नित्ये तु समासे प्रत्यर्थमित्यम्भावो यथा द्वितीयायां तथा षष्ठ्यामपि तुल्य एवेति निष्फला कर्मप्रवचनीयद्वितीया। तत् कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात् इह समासो वैकल्पिको न नित्यः। वस्तुतस्तु अर्थमर्थंप्रति इत्यत्र प्रतेर्वीप्सार्थत्वाभावात् व्याख्यानमात्रमेतन्न विग्रहः। तेन निर्बाधा समासस्य नित्यता॥ शक्तिमनतिक्रम्य इत्यपि साकाङ्क्षम्। शक्तिमनतिक्रम्य यतते इत्यादि पूरणीयम्। इह शक्तेरनतिक्रमः यथाशक्ति, तत् यथा तथा यतते इत्याद्यर्थः। शक्तिमनतिक्रम्य यतते इति स एवार्थः॥ आस्तामेतत्, परं यथा पदार्थानतिवृत्तौ यथाशब्दस्य नायं समासः इति प्रागुक्तं, तथा मन्ये यथाशब्दस्यापि न, तत् कथं यथाशक्ति? सत्यं न, अतएव हि "यथाऽसादृश्ये" (६६१—२।१।७) इत्यनुपदमेव वक्ष्यते॥ सहरीति मुख्यतः सदृशवाचिनो गौण्या वृत्त्या सादृश्यार्थकस्य सहशब्दस्य प्रथमान्तस्य 'हरेः' इति षष्ठ्यन्तेन समासः। "अव्ययी—" (६६०—६।३।८१) इति सहस्य स आदेशः॥

दो—। ज्येष्ठस्यानुपूर्व्येण इत्यनुज्येष्ठम्। चक्रेण युगपत् इति विग्रहे—

आनुपूर्व्य precedence. Thus अनु etc., which means—In order of seniority. यौगपद्य is simultaneity. With the exposition

चक्रेण युगपत् we compound सह in the sense युगपत् with चक्रेण and look forward.

मित—। अनुगतः पूर्वम् अनुपूर्वः प्रादिसमासः। तस्य भावः आनुपूर्व्यम् अनुक्रमः। ब्राह्मणादित्वात् ष्यञ्। अनुज्येष्ठं प्रविशन्तु भवन्तः इत्यादि पूरणीयम्। क्रियाविशेषणे द्वितीया। अभावः॥ यौगपद्यवाचिनः सहशब्दस्य 'चक्रेण' इत्यनेन समासे—

६६०। अव्ययीभावे चाकाले ॥ ६।३।८१ ॥

**दी—। सहस्य सः स्यात् अव्ययीभावे न तु काले। सचक्रम्। काले तु सहपूर्वाह्णम्॥ सदृशः सख्या ससखि। यथार्थत्वेनैव सिद्धे पुनः सादृश्यग्रहणं गुणभूतेऽपि सादृश्ये यथा स्यादित्येवमर्थम्।**

In an अव्ययीभाव, सह is changed into स but not if the परपद means some 'time'. Thus सह चक्रेण in the sense simultaneously with the discus, becomes सचक्रम् with अभाव of तृतीया। But witness सहपूर्वाह्णम् where the उत्तरपद is a काल and सह is retained. सादृश्य is illustrated by ससखि which is a compound of सह and सख्या with सह changed into स as above. This समास is already enjoined and is available because सादृश्य is one of the meanings of यथा, yet सादृश्य is separately mentioned only to ensure समास even when the सादृश्य is indirectly stated.

मित—। पूर्वाह्णमप्यपरित्यज्य इत्यर्थे सहपूर्वाह्णम्, साकल्येऽव्ययीभावः। ससखि इति सदृशार्थकसहशब्दस्य 'सख्या' इत्यनेन समासः। ननु सूत्रे सादृश्यमित्यस्ति न सदृशमिति, तत् कुतः सदृशार्थकस्य समासः? तदाह "यथार्थत्वेनैव—"इत्यादि। अयमाशयः—सादृश्यवान् खलु सदृश इत्युच्यते। सदृश इत्युक्ते साक्षादनुक्तमपि सादृश्यं गम्यते एव। सादृश्यं तत्र गौणम्, सादृश्यवान् मुख्यः। सादृश्यस्य यथार्थः। तस्मिन् विहित एव समासः। इह पुनर्विधिस्तु गौणेऽपि सादृश्ये सदृशार्थे समासार्थम्। यथाकथञ्चित् सादृश्ये प्रतीयमानेऽपि समास इति भावः एतेन अनुरूपमित्यादिषु सर्वत्र मुख्यार्थे समास एव न्याय्यः प्रतिभाति॥

दी—। चत्राणां सम्पत्तिः सचत्रम्। ऋद्धेराधिक्यं समृद्धिः, अनुरूप आत्मभावः सम्पत्तिरिति भेदः। तृणमप्यपरित्यज्य सतृणमत्ति, साकल्येन इत्यर्थः। न त्वत्र तृणमक्षणे तात्पर्य्यम्॥ अन्ते— अग्निग्रन्थपर्य्यन्तमधीते साग्नि॥

सम्पत्ति development. सह in this sense is compounded with चत्राणाम् yielding सचत्रम्। सम्पत्ति is different from समृद्धि। The latter means "exuberance of wealth" while सम्पत्ति is only "proper development." As an instance of साकल्य—thoroughness—we have सतृणम् which is a compound of सह and तृणेन। सतृणमत्ति does not imply that grass was actually eaten, but that *all* that was offered was eaten up. अन्त completion—साग्नि a compound of सह and अग्निना, is an illustration. अग्नि stands here for *the section relating to fire*. साग्नि अधीते means—reads to the end of the section dealing with अग्न्याधान।

मित—। इह सर्वत्र सहशब्दस्य समासः। "अव्ययी—" इति सः॥ समृद्धी समासः प्राग्विहितः। सम्पत्तिस्तु न समृद्धिरिति भेदं दर्शयति—आत्मनो भावः आत्मभावः निजपरिणतिः। अनुरूप इति प्रादिसमासः, नाव्ययीभावः। अनुरूप आत्मभावो यथायथं निजपरिणतिः। यादृशो विपरिणामो युक्तस्तादृश इत्यर्थः। तत् सम्पत्तेः पृथक् निर्देशो युक्त एव॥ सतृणमत्ति इति वाक्यस्य तृणभक्षणं न तात्पर्य्यम् इत्याह नत्वत्रेति॥ अन्त इति एतावदध्येतव्यमद्य इति प्रक्रान्तस्य अध्ययनस्य अन्तः, न तु तावतो ग्रन्थस्य। तत् साकल्यात् पृथक् अन्त इत्युच्यते। अग्निरिति लक्षणया अग्निसम्बन्धी ग्रन्थः॥

६६१　यथाऽसादृश्ये॥ २।१।७॥

दी—। असादृश्ये एव यथाशब्दः समस्यते। तेन इह न —यथा हरिस्तथा हरः। हरेरुपमानत्वं यथाशब्दो द्योतयति, तेन 'सादृश्ये' इति वा 'यथार्थे' इति वा प्राप्तं प्रतिषिध्यते।

The word यथा is compounded only when it does not imply resemblance. Thus there is no समास in यथा etc. Here यथा implies resemblance with हरि, hence the समास which comes in either through सादृश्य or through यथार्थ is prohibited.

मित—। यथा इत्यव्ययं सुपा सह समस्यते. सादृश्यार्थे तु न, इत्यर्थः। यथा हरिस्तथा हरः इत्यत्र यथाशब्दः हरिनिष्ठस्य सादृश्यस्य अनुवादकः। तथाशब्दस्तु तस्यैव सादृश्यस्य हरे विधायकः। विधानात् प्राक् हरौ एव सादृश्यस्य सत्ता, तदाह हरेरुपमानत्वमित्यादि। एतेन 'यथा हरिः' इत्यत्रैव समासप्रसङ्गः न 'तथा हरः' इत्यत्र। स च समासो निषिध्यते॥ ननु प्राप्तस्यैव प्रतिषेधो भवति, कुत इह प्राप्तिः? आह च "सादृश्ये इति वा" इत्यादि। "यथार्थे" इति तु न युक्तम्। यथाशब्दस्य सूत्रे ग्रहीतत्वात् तदर्थे तस्य समासो न। भाष्यकार आह "सादृश्यसम्पत्ति—" इति प्राप्नोति। एतेन योग्यता वीप्सा पदार्थानतिवृत्तिरिति त्रिष्वर्थेषु यथाशब्दस्य अप्राप्तः समासो विधीयते इति फलितम्। तत्र 'यथाशक्ति' इति प्रागुक्तम् अस्यैवोदाहरणम्॥

## ६६२। यावदवधारणे॥ २।१।८॥

### दी—। यावन्तः श्लोकास्तावन्तोऽच्युतप्रणामाः, यावच्छ्लोकम्।

अवधारण is 'estimate or determination of amount'; यावत् should be compounded when meaning अवधारण। Thus यावच्छ्लोकमच्युतप्रणामाः which means that the prostrations were as many as the number of verses recited.

मिते—। अवधारणमियत्तापरिच्छेदः। तस्मिन् द्योत्ये यावदित्यव्ययं नित्यं समस्यते। ननु कथं नित्ये समासे यावन्तः श्लोकाः इति स्वपदविग्रहः? अर्थनिर्देशोऽयं न विग्रहः। यावदित्यव्ययेन तुल्यार्थको यावदिति तद्धितान्तोऽप्यस्ति "यत्तदेतेभ्यः परिमाणे वतुप्"। (१८४०—५।२।३९) इति वतुपा सिद्धः। इह अव्ययस्य समासः, तद्धितान्तेन अस्वपदविग्रहः। 'अवधारणे' किम्? यावद्दत्तं तावद्भुक्तम्, कियद्भुक्तं नावधारयामि इत्यत्र न समासः॥

६६२। सुप् प्रतिना मात्रार्थे ॥ २।१।९ ॥

दी—। शाकस्य लेशः शाकप्रति। 'मात्रार्थे' किम्? वृक्षं प्रति विद्योतते विद्युत्।

A सुबन्त word should be compounded with प्रति in the sense 'a little', 'a trace.' Thus शाकप्रति—a trace of vegetables. Why मात्रार्थे? Witness वृक्षं प्रति etc. where वृक्षम् is uncompounded'

मित—। सुबिति प्रथमान्तं समासे पूर्वं पतति। मात्रा इत्यल्पार्थे। प्रतीत्यव्ययमपि अल्पार्थकमस्ति। 'मात्रार्थे' अल्पार्थे वर्त्तमानेन 'प्रतिना' अव्ययेन सह अनव्ययं 'सुबन्तं' समस्यते अव्ययीभावश्च समासो भवति इत्यर्थः॥ 'सुप्' इति वर्त्तमाने पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थम्॥ वृक्षं प्रति इत्यत्र प्रतिर्लक्षणे न मात्रार्थे, अतो न समासः॥

६६३। अक्षशलाकासंख्याः परिणा ॥ २।१।१० ॥

दी—। द्यूतव्यवहारे पराजये एवायं समासः। अक्षेण विपरीतं वृत्तम् अक्षपरि। शलाकापरि। एकपरि।

Numerals and the words अक्ष and शलाका are compounded with परि। This समास is allowed in gambling parlance and to imply loss only. Thus अक्षपरि etc., meaning 'reverse caused by an अक्ष etc.'

N. B.—It is not clear what अक्ष and शलाका are here. It seems these are small bodies of metal or bone shaped so as to have a face and a back only. When a cast is made with them they fall either face or back upwards like ordinary shells.

मित—। अक्षशब्दः शलाकाशब्दः संख्यावाचकशब्दश्च अन्यथाभावार्थे वर्त्तमानेन परिणा अव्ययेन समस्यते अव्ययीभावश्च समासो भवति। द्यूते यो व्यवहारः अक्षपातः शलाकापातो वा, तस्मिन्, तत्रापि पराजयवर्णनायामेवायं समास इष्यते॥ वृत्तमिति भावे क्तः। अक्षेणेति अनुक्ते कर्त्तरि तृतीया। विपरीतं विरुद्धं यथा तथा

वृत्तं, जयविरुद्धतया अक्षो वा शलाका वा वर्त्तते इति भावः। परि इति पर्य्यायवर्जने अव्ययम्। प्रथमान्तेन तेन सह 'अक्षेण' इत्यस्य समासः। पञ्चभिरक्षैः शलाकाभिर्वा द्यूतव्यवहारः। तत्र सर्वेषामेव अवाक्‌पाते उत्तानपाते वा जयः, एकस्यापि विपर्य्यये पराजय इति जयादिव्यः। 'एकपरि' इति एकस्य अक्षस्य अन्यथापातात् पराजय इत्यर्थः॥

६६५। विभाषा॥ २।१।११॥

**टी—। अधिकारोऽयम्। एतत्सामर्थ्यादेव प्राचीनानां नित्यसमासत्वम्। 'सुप् सुपा' इति तु न नित्यसमासः, 'अव्ययम्' इत्यादि समासविधानात् ज्ञापकात्।**

Hence-forward all that is ordained is optional. On the strength of this very statement those here-in-before mentioned are obligatory. सुप् सुपा is not obligatory, for then समाससंज्ञा by "अव्ययम्—" (652—2-1-6) etc., would be unnecessary, the संज्ञा having been already attached by सुप्सुपा।

मित—। 'अधिकारोऽयम्' इत्यस्य विभाषा इत्यधिक्रियते आ समासपरिसमाप्तेः इत्यर्थः। इत उत्तरं यद्यदुच्यते तत्तत् वैकल्पिकमिति भावः। 'प्राचीनानां' प्रागुक्तानाम्॥ भाष्यकारेण विस्पष्टपटुरिति 'सुप् सुपा' समासे विस्पष्टं पटुः इति स्वपदविग्रहो दर्शितः। तत् 'सुप् सुपा' इति न नित्यः समासः। अत्र युक्तिमाह— 'सुप् सुपा' इत्यस्यैव विशेषा अव्ययीभावादयः। तत् सुप्सुपा इत्यस्य समाससंज्ञायां सत्यां अव्ययीभावादीनामपि प्राप्ता एव। तथापि यत् सूत्रकारः अतुष्यन् "प्राक् कडारात् समासः" (६४८—२।१।३) इति प्रत्येकमव्ययीभावादीनां पृथक् संज्ञा करोति तत् ज्ञापयति 'सुप् सुपा' इत्यत्र न नित्या समाससंज्ञा। अत एवाह 'समासविधानात् ज्ञापकात्' इति, समाससंज्ञाविधानादित्यर्थः॥ अन्यच्च "समर्थः पदविधिः" इत्यत आरभ्य "सह सुपा" इति यावत् उपक्रममात्रम्। "अव्ययीभावः" इत्येव शास्त्रारम्भः। सूत्रकारेण हि "सह सुपा" इति अधिकारसूत्रदर्पितैवोपन्यस्तं

न लक्षणरूपेण। सूत्रकाररीत्या "अव्ययम्—" (६५२) इत्यत एव लक्षणमुपारभ्यः। नित्यता वा अनित्यता वा लक्षणेष्वेव प्रसज्यते। तत् कथं "सह सुपा" इत्यत्र तस्याः प्रसङ्गः? सत्यं, भगवान् भाष्यकारः सूत्रमिदं विभज्य "सुप् सुपा" इत्यधिकारं लक्षणञ्च कृतवान्। परं तेनापि स्वपदविग्रहं वदता विकल्पता एवास्य दर्शिता॥ किञ्च "सुप् सुपा" इति भाष्यकारस्य वचनं न सूत्रकारस्य। तदिह विभाषां वदन् सूत्रकारस्तस्यापि नित्यतां नैवोत्पश्यन्ति। अतएव भाष्यकारेण विस्पष्टं पटुरिति स्वपदविग्रहो दर्शितः॥

६६६। अपपरिबहिरञ्चवः पञ्चम्या॥ २।१।१२॥

टी—। अपविष्णु संसारः—अप विष्णोः। परिविष्णु—परि विष्णोः। बहिर्वनम्—बहिर्वनात्। प्राग्वनम्—प्राग्वनात्।

The indeclinables, अप, परि, बहिस् and those that are derivatives of the root अञ्चु to go, are optionally compounded with पञ्चम्यन्त words with which they are syntactically connected. Thus अपविष्णु compounded, or अप विष्णोः uncompounded etc.

मित—। 'अञ्चु' इति अञ्चूत्तरपदः शब्दो लक्ष्यते। अपादीनि अञ्चूत्तरपदानि च अव्ययानि पञ्चम्यन्तेन वा समस्यन्ते अव्ययीभावश्च समासो भवति॥ "अपपरी वर्जने" (५९६—१।४।८८) इति कर्मप्रवचनीयसंज्ञा। "पञ्चम्यपाङ्—" (५९८—२।३।१०) इति पञ्चमी॥ अस्मादेव सूत्रात् ज्ञापकात् बहिर्योगे पञ्चमी॥ "अन्यारात्—" (५९५—२।३।२९) इत्यञ्चूत्तरपदयोगे पञ्चमी। प्राच्यां दिशि इति "दिक्शब्देभ्यः—" (१९७८—५।३।२७) इति स्वार्थे अस्तातिः। 'प्राची अस्तात्' इति स्थिते "अञ्चेर्लुक्" (१९८०—५।३।३०)। प्राची इति जाते "लुक् तद्धितलुकि" (१४०८—१।२।४९)। प्राक्। "तद्धितश्चासर्वविभक्तिः" (४४८—१।१।३८) इत्यव्ययत्वम्॥

६६७। आङ् मर्य्यादाभिविध्योः॥ २।१।१३॥

टी—। एतयोराङ् पञ्चम्यन्तेन वा समस्यते सोऽव्ययीभावः। आमुक्ति संसारः—आमुक्तेः। आबालं हरिभक्तिः—आ बालेभ्यः।

The indeclinable आङ् implying 'inclusion' or 'exclusion' is optionally compounded with the पञ्चम्यन्त word syntactically connected with it. Thus आमुक्ति &c., implying exclusion, आबालं &c. implying inclusion.

मित—। 'पञ्चम्या' इत्यस्ति। 'एतयोः' मर्य्यादायामभिविधौ च वर्त्तमानम् 'आङ्' इत्यव्ययं 'पञ्चम्या' समस्यते इत्यन्वयः॥ मुक्तौ सत्यां न संसारः, तेन 'आमुक्ति' इति मर्य्यादा। बाला अपि हरिभक्ताः, तत् 'आबालम्' इति अभिविधिः। उभयत्र "आङ् मर्य्यादावचने" इति कर्मप्रवचनीयता। ततश्च "पञ्चम्यपाङ्परिभिः" इति पञ्चमी॥

६६८। लक्षणेनाभिप्रती आभिमुख्ये ॥ २।१।१४ ॥

दी—। आभिमुख्यद्योतकौ अभिप्रती चिह्नवाचिना सह प्राग्वत्। अभ्यग्नि शलभाः पतन्ति—अग्निमभि। प्रत्यग्नि—अग्निं प्रति।

When अभि and प्रति imply 'facing towards' they are optionally compounded with the indicator of that facing. Thus अभ्यग्नि &c,—Locusts rush towards fire; also uncompounded अग्निमभि &c.

मित—। लक्ष्यं चिह्नम्। 'प्राग्वत्' इत्यस्य 'वा समस्यते' इत्यादिरर्थः॥ "लक्षणेत्थम्भूत—" (५५२—१।४।९०) इति प्रतेः कर्मप्रवचनीयता, "अभिरभागे" (५५३—१।४।९१) इति च अभेः॥ इह अग्निर्लक्षणम् तदभिमुखत्वञ्च शलभपातस्य प्रसिद्धमेव॥

६६९। अनुर्यत् समया ॥ २।१।१५ ॥

दी—। यं पदार्थं समया द्योत्यते तेन लक्षणभूतेन अनुः समस्यते सोऽव्ययीभावः। अनुवनमशनिर्गतः। वनस्य समीपं गत इत्यर्थः।

अनु is optionally compounded into an अव्ययीभाव with that indicator whose neighbourhood is implied. Thus अनुवनम् &c.—

the meaning being 'the thunder-bolt passed close to the forest.'

मित—। समया समीपे। 'यत्' इति सामान्ये नपुंसकं समयायोगे द्वितीयान्तम्। 'लक्षणेन' इत्यनुवर्त्तते। वनस्य समीपे अशनिर्गत इत्यनेन वनं लक्षणमित्युच्यते। सामीप्यकृतं लक्षणत्वम्। ईदृशस्थले एतल्लक्षणमित्युक्ते तस्य पदार्थस्य समीपे किञ्चिज्जातमिति प्रतीयते। तादृशस्य पदार्थस्य वाचकशब्देन अनुर्वा समस्यते इत्यर्थः॥ "अव्ययं विभक्तिसमीप—" (६५२) इति न सिद्धिः। इह तु 'वनस्य समीपे' इति विग्रह न हि 'वनस्य समीपम्' इति। अतो न प्राप्तिः॥ वृत्तौ "वनस्य समीपं गतः" इति अर्थप्रदर्शनमात्रं न विग्रहः। विग्रहे समीपमिति प्रथमान्तं स्यात् इह च द्वितीयान्तम्॥ समासाभावे वनमनु इति कर्मप्रवचनीययोगे द्वितीया। यद्वा 'यत् समया' इत्यस्य द्योत्यत्वात् लक्ष्यलक्षणभावद्योतनं नास्ति तेन कर्मप्रवचनीयता न, अतो वनस्य अनु इति युक्तम्॥

६७०। यस्य चायामः॥ २।१।१६॥

दी—। यस्यदैर्घ्यमनुना द्योत्यते तेन लक्षणभूतेन अनुः समस्यते। अनुगङ्गं वाराणसी। गङ्गाया अनु। गङ्गादैर्घ्यसदृशदैर्घ्योपलक्षिता इत्यर्थः।

अनु is optionally compounded with the indicator whose length is expressed by it. Thus अनुगङ्गम् etc., which means—Varanasi is like Ganga in length. Optionally uncompounded—गङ्गाया अनु।

मित—। 'लक्षणेन' इत्यस्ति 'अनुः' इति च। अनुः समस्यते लक्षणेन यस्य आयामश्च इत्यन्वयः। यस्य लक्षणस्य आयामो दैर्घ्यं द्योत्यते तेन लक्षणेन अनुः समस्यते इत्यर्थः। तदाह—यस्य दैर्घ्यमित्यादि॥ उदाहरणे अनुगङ्गमिति वाराणसीति च समानाधिकरणे पदे। समानाधिकरणता च उपमानोपमेयभावाल्लभ्यते। उपमानमिह पुनर्न गङ्गा किन्तु गङ्गाया दैर्घ्यम्। तदेव अनुना द्योत्यते। दैर्घ्यविषये गङ्गासदृशी वाराणसी। तदाह—गङ्गादैर्घ्येत्यादि। गङ्गेव उत्तरदक्षिणतो दीर्घा वाराणसी इत्यर्थः। इहापि लक्ष्यलक्षणभावद्योतनं नास्तीति गङ्गाया अनु इति भवति॥

६७१। तिष्ठद्गुप्रभृतीनि च ॥ २।१।१७ ॥

**टी— एतानि निपात्यन्ते। तिष्ठन्ति गावो यस्मिन् काले स तिष्ठद्गु दोहनकालः। आयतीगवम्। इह शत्रादेशः पुंवद्भाव-विरहः समासान्तश्च निपात्यते। खलेयवम्। इत्यादि।**

तिष्ठद्गु and similar words that are listed together are obtained irregularly and are treated as अव्ययीभाव compounds. Thus तिष्ठद्गु, the time when cows stand still—time for milking, *i. e*, dawn. Similarly आयती etc., the time when cows return—dusk. Here the substitution of शतृ for लट्, absence of the masculine form, and the attachment of the समासान्त affix are irregularities. In खलेयवम्, which means the time when wheat is placed in the mortar for husking, the सप्तमी is irregularly retained.

मित—। तिष्ठन्ति गावो यस्मिन् काले सः इति स्थिते, लटः स्थाने शत्रादेशे, तिष्ठन्त्यः गावो यस्मिन् इति। इहैव निपातनात् प्रथमासमानाधिकरणेऽपि शतृ। ततः समासे पुंवद्भावे "गोस्त्रियोः—" (६५९—१।२।४८) इत्युपसर्जनह्रस्वे, अव्ययीभाव-त्वादव्ययत्वे तिष्ठद्गु॥ एवम् आयन्ति गावो यस्मिन् काले स इति स्थिते, निपातनात् शत्रादेशे, ततः समासे निपातनादेव पुंवद्भावाभावे, आयती गो इति जाते, निपातनात् अव्ययीभावेऽपि तत्पुरुषाधिकारोक्तः समासान्तष्टच्। तेन आयतीगव इति रूपम्। ततः प्रथमाया अम्भावः॥ खले उलूखले यवा क्षिप्यन्ते यस्मिन् काले स खलेयवम्॥ चकार इह अवधारणार्थः। तिष्ठद्गुप्रभृतीन्येव, अन्यः समासो मा भूत, परमतिष्ठद्गुः इति॥

६७२। पारे मध्ये षष्ठ्या वा ॥ २।१।१८ ॥

**टी—। पारमध्यशब्दौ षष्ठ्यन्तेन वा समस्येते। एदन्तत्व-स्थानयोर्निपात्यते। पक्षे षष्ठीतत्पुरुषः। पारेगङ्गादानय—गङ्गा-**

पारात्। मध्यं गङ्गात्—गङ्गामध्यात्। महाविभाषया वाक्यमपि—गङ्गायाः पारात्, गङ्गाया मध्यात्।

This words पार and मध्य are optionally compounded into an अव्ययीभाव with the syntactically connected षष्ठ्यन्त word. When an अव्ययीभाव, the words end in ए, otherwise there is a षष्ठीतत्पुरुष। Thus (अव्ययी—) पारेगङ्गात् etc., (षष्ठीतत्—) गङ्गापारात् etc., From the original optionality that pervades the whole subject, वाक्य is also allowed ; thus गङ्गायाः पारात् etc.

मित—। इह गङ्गायाः पारम् इति वाक्ये विभाषा समासः। एतच्च "विभाषा" (६६५—२।१।११) इति प्रकान्तया 'महाविभाषया'—व्यापिन्या विभाषया। समासपक्षे पुनरनेन अव्ययीभावो वा षष्ठीतत्पुरुषो वा। तत् त्रैरूप्यं भवति—(असमासे) गङ्गायाः पारम्, (षष्ठीतत्पुरुषे) गङ्गापारम्, (अव्ययीभावे) पारेगङ्गमिति॥ पारेगङ्गादित्यत्र नपुंसकत्वं पारेगङ्ग इति प्रातिपदिकम्। "नाव्ययी—" (६५०—२।४।८३) इति पञ्चम्या अम्भावाभावे पारेगङ्गात्॥ एवं पारेमध्यात्॥

६७२। संख्या वंश्येन॥ २।१।१८॥

दो—। वंशो द्विधा—विद्यया जन्मना च। तत्र भवो वंश्यः। तद्वाचिना सह संख्या वा समस्यते। द्वौ मुनी वंश्यौ द्विमुनि व्याकरणस्य। विद्यातद्वतामभेदविवक्षायां त्रिमुनि व्याकरणम्॥ एकविंशतिभारद्वाजम्।

Succession is of two kinds—that by birth and that by initiation. A descendant is one coming in through succession. A numeral is compounded into an अव्ययीभाव with a descendant. Thus द्विमुनि means two sages as descendants by initiation, as in the case of Grammar which has the first sage Panini and then Katyayana. Similarly त्रिमुनि counting पतञ्जलि as the third

descendant. Taking the sage as indentical with his science, we may also say त्रिमुनि व्याकरणम्—three sages constituting Grammar. For descent by birth, witness एकविंशति etc.,—twenty one descendants of Bharadvaja.

मित—। वंशः सन्तानपरम्परा। स च जन्मना पुत्रपरम्परा, विद्यया शिष्यपरम्परा। वंशे भवः वंश्यः "दिगादिभ्यो यत्" ( १४२०—४।३।५४ ) इति यत्। वंश्यस्य संख्या वंश्येन समानाधिकरणेन समस्यते अव्ययीभावश्च समासो भवति॥ व्याकरणमिति विद्या। तत्र पाणिनिः, कात्यायनः, पतञ्जलिरिति त्रयो मुनयो वंश्याः शिष्यपरम्परा। द्वौ मुनी पाणिनिकात्यायनौ द्विमुनि वंश्यौ व्याकरणस्य॥ पाणिनिरेव व्याकरणम्, कात्यायन एव व्याकरणम्, पतञ्जलिरेव व्याकरणम्, इत्यभेदे विवक्षिते त्रिमुनि व्याकरणम् त्रिमुनि व्याकरणम्॥ भरद्वाजस्य गोत्रापत्यानि भरद्वाजाः वंश्याः पुत्रपरम्पराः। भरद्वाजशब्दाद्गोत्रे अञ्। "यञञोश्च" ( ११०८=२।४।६४ ) इति बहुषु लुक्। एकविंशतिः भरद्वाजा एकविंशतिभारद्वाजम्। समासे तु लुगभावः, "तृतीयासप्तम्योर्बहुलम्" ( ६५८—२।४।८४ ) इति सूत्रे 'एकविंशतिभारद्वाजम्' इति भाष्यप्रयोगात्॥ नागेशस्तु वाक्ये लुकि सति समासे लुगभावं नाद्रियते, तेन एकविंशतिर्भरद्वाजवंश्या इत्येव वाक्यमाह। किञ्च अस्मादेव भाष्यप्रयोगात् भरद्वाजशब्दस्य उपकादिषु ( ११५१=२।४।६९ ) पाठं कल्पयति। तथा सति वैकल्पिके लोपाभावे भरद्वाजस्य गोत्रापत्यानि भारद्वाजा इत्यपि भवति। तत् एकविंशतिर्भारद्वाजा इति वाक्ये एकविंशतिभारद्वाजम्॥

६७४। नदीभिश्च॥ २।१।२०॥

दी—। नदीभिः संख्या प्राग्वत्।

Numerals are optionally compounded into an अव्ययीभाव with words designating rivers.

मित—। 'संख्या' इति पूर्वसूत्रादनुवर्तते। नदीवाचकशब्देन सह संख्या वा समस्यते अव्ययीभावश्च समासो भवति॥ इह बहुवचनेन नदीति न नदीविशेषः नापि

नदीशब्दमात्रम् इत्यनुमीयते। तेन नदीति यस्य अर्थः तेन समासो लभ्यते। नदी-शब्देनापि भवति॥

दी—। "समाहारे चायमिष्यते" (वार्त्तिक)। सप्तगङ्गम्। द्वियमुनम्।

This applies only in case of समाहारे। Thus सप्तगङ्गम् etc.

मित—। चकारोऽवधारणार्थः समाहारे एवेति। सप्तानां गङ्गानां समाहारः सप्तगङ्गम्। नपुंसकह्रस्वः। अम्भावः॥ इह लक्षणया 'गङ्गा', 'यमुना' इत्यादि नदीमात्रस्य वाचकम्॥ समाहारेऽपि अव्ययीभाव एव द्विगुर्न। यदा तु न समाहारः तदा एका नदी एकनदी, "पूर्वकालैक—" (७२६—२।१।४९) इति समासः॥

६७५। अन्यपदार्थे च संज्ञायाम्॥ २।१।२१॥

दी—। अन्यपदार्थे विद्यमानं सुबन्तं नदीभिः सह नित्यं समस्यते संज्ञायाम्। विभाषाधिकारेऽपि वाक्येन संज्ञानवगमादिह नित्यसमासः। उन्मत्तगङ्गं नाम देशः। लोहितगङ्गम्।

Any सुबन्त word is compounded into an अव्ययीभाव with words designating rivers when the whole is a proper name of something not denoted by the constituents of the compound. Such compounds are obligatory, though enunciated in the section of optional compounds, because the वाक्य does not give the impression of a proper name. Thus उन्मत्त etc., which is the name of a country. Similarly लोहित etc.

मित—। संज्ञा इति निरुक्तम्। पूर्वसूत्रात् नदीभिरित्यनुवर्त्तते। अव्ययीभावश्च समासो भवति बहुव्रीहेरपवादः॥ उन्मत्ता गङ्गा अस्मिन् इति विग्रहः। परन्तु विग्रहेण देशो नाभिधीयते। अत आह—नित्यसमास इति। इह वाक्यं नास्ति इति न, वाक्यार्थो भिन्न इत्येव। समासस्तु वैकल्पिक एव इति "द्वितीयतृतीय—" (७१४—२।२।३) इत्यत्र भाष्यम्॥

६७६ । समासान्ताः ॥ ५।४।६८ ॥

टी—। इत्यधिकृत्य—

Having taken up this subject, viz, समासान्त affixes—

मित—। समासस्य अन्ताः अन्तावयवाः समासान्ताः तद्धिता एते स्वार्थिकाः ॥ एतैः सह समुदायस्य समाससंज्ञा ॥

६७७। अव्ययीभावे शरत्प्रभृतिभ्यः ॥ ५।४।१०७ ॥

टी—। शरदादिभ्यष्टच् स्यात् समासान्तः अव्ययीभावे। शरदः समीपम् उपशरदम्। प्रतिविपाशम्। शरद्। विपाश्। अनस्। मनस्। उपानह्। दिव्। हिमवत्। अनडुह्। दिश्। दृश्। विश्। चेतस्। चतुर्। त्यद्। तद्। यद्। कियत्।

In an अव्ययीभाव the समासान्त affix टच् comes in after words listed with शरद् leading. Thus उपशरदम् proximity of शरद्। प्रतिविपाशम् towards the river Vipasa. The list is शरद् etc.

मित—। शरदः समीपम् इति समीपार्थेऽव्ययीभावः। "झयः" ( ६८२—५।४।१११ ) इति विकल्पे प्राप्ते इह पाठान्नित्यष्टच्। उपशरद् टच् इति समुदायस्य अव्ययीभावसंज्ञा। तेन 'उपशरद' इति अदन्ते प्रातिपदिके "नाव्ययी—" ( ६५७—२।४।८३ ) इत्यम् ॥ प्रतिविपाशमिति "लक्षणेनाभि—" (६६८—२।१।१४ ) इत्यव्ययीभावः। प्राग्वत् प्रक्रिया। अथ शरत्प्रभृतयो निर्दिश्यन्ते—शरदिति ॥

टी—। "जराया जरस् च" (गणसूत्र)। उपजरसम्।

जरा is शरदादि and is changed into जरस् when टच् follows. Thus उपजरसम् proximity of old age.

मित—। टचि परे जराशब्दस्य जरसादेशः स्यादित्यर्थः। जरायाः समीपमिति विग्रहः। प्रक्रिया प्राग्वत् ॥

टी—। "प्रतिपरसमनुभ्योऽक्ष्ण:" (गणसूत्र)। "यस्येति च" (२११—६।४।१४८)। प्रत्यक्षम्। अक्ष्ण: परमिति विग्रहे समासान्तविधानसामर्थ्यादव्ययीभाव:। "परोक्षे लिट्" (२२७१—३।२।११५) इति निपातनात् परस्य ओकारादेश:। परोक्षम्। 'परोक्षा क्रिया' इत्यादि तु अर्शआद्यचि। समक्षम्। अन्वक्षम्।

अक्षि directs टच् when coming after प्रति, पर, सम् and अनु। Thus अक्षि प्रति when compounded gives प्रति अक्षि टच्, *i. e.* प्रत्यक्षि अ। Now the इ of अक्षि disappears by the rule "यस्येति च"। Hence प्रत्यक्षम् with अम् by "नाव्ययी—" (657—2. 4. 83)। Again अक्ष्ण: परम्—beyond the range of vision—cannot be compounded into an अव्ययीभाव, there being no rule for it. Yet the समास is allowed, because otherwise this rule to attach टच् becomes meaningless in the case of पर। Hence we have पर अक्षि टच्। Dropping इ by "यस्येति च" पराक्ष is expected, but परोक्ष follows by निपातन in the rule "परोक्षे लिट्"। With अम्, the form is परोक्षम्। Statements like परोक्षा क्रिया are defended by attaching अच् in the sense of मतुप्। समक्षम् means अक्ष्णोर्योग्यम्, and अन्वक्षम् means अक्ष्णो: पश्चात्।

मित—। प्रति, पर, सम्, अनु इत्येतेभ्य: परो य: अक्षिशब्द: ततष्टच् स्यात् अव्ययीभावचरमावयव: ॥ अक्षि प्रति इति वाक्ये, लक्षणेनाभि—" (६६८—२।१।१४) इति समासे, प्रति अक्षि टच् इति स्थिते, "यस्येति च" (२११) इति इकार-लोपे प्रत्यक्षम् ॥ अक्ष्ण: परमिति वाक्ये अव्ययीभावविधेरभावादाह समासान्तविधाने-त्यादि। असति समासे कुत: समासान्त:? तदिह समासोऽस्ति इत्यत्र टज्विधिरेव ज्ञापक:। कृते समासे पर अक्षि टच् इत्यादि प्राग्वत्। 'पराक्ष' इति प्राप्ते "परोक्षे लिट्" इति निपातनात् परशब्दस्य परो भाव:। तत: परो अक्ष परोक्ष। "एक:

पदान्तादति" ( ८६—६।१।१०९ ) इति पूर्वरूपम् ॥ भवतु, कथं 'परोक्षा क्रिया' इति ? अव्ययीभावे तु 'परोक्षं क्रिया' इत्यापद्यते। उच्यते—'परोक्ष' इति 'परोक्षता' इत्यर्थे लक्षणा। ततः परोक्षं परोक्षता अस्ति अस्या इति मत्वर्थीये अचि परोक्षा अक्षोरगोचरा इति। वस्तुतस्तु परशब्द इह गणसूत्रे प्रक्षिप्त इति नागेशः॥ समक्षमिति यथार्थेऽव्ययीभावः अक्ष्णोर्योग्यमित्यर्थः॥ अन्वक्षमिति अक्ष्णोः पश्चादिति वाक्यं पश्चादर्थेऽव्ययीभावः॥

६७८। अनश्च॥ ५।४।१०८॥

दी—। अन्नन्तादव्ययीभावात् टच् स्यात्।

टच् is attached after the second member of an अव्ययीभाव ending in अन्।

मित—। अव्ययीभावस्य द्वितीये पदे अन्नन्ते सति ततष्टच् स्यात्। टचा सहितस्य समुदायस्य अव्ययीभावसंज्ञा, न तु टचः पूर्वस्य अन्नन्तस्य अव्ययीभावस्य केवलस्य। तेन अव्ययीभावादिति अव्ययीभावद्वितीयपदादित्यर्थे लक्षणा॥ पूर्वसूत्रात् 'अव्ययीभावे' इत्यनुवर्त्य—अव्ययीभावे कर्त्तव्ये अनः परं टच् स्यात् समासान्त इति व्याख्यानं युक्ततरं प्रतिभाति॥

६७९। नस्तद्धिते॥ ६।४।१४४॥

दी—। नान्तस्य भस्य टेर्लोपः स्यात् तद्धिते। उपराजम्। अध्यात्मम्।

When a तद्धित affix beginning with य or a vowel follows, the stem drops the whole of its portion beginning with its last vowel. Thus उपराजन् टच gives उपराजन् अ which drops अन् from the stem, the result being उपराज and then अम् is substituted for सु। Similarly अध्यात्मन् टच् etc.

मित—। इह समीपार्थे अव्ययीभावे उपराजन् टच् इति स्थिते उपराजन् अ इति जाते उपराजन् इत्यस्य भसंज्ञा। ततष्टिलोपार्थम् "अव्ययानां भमात्रे टिलोपः"

इति न प्रवर्त्तते, अव्ययसंज्ञाभावात् । टच्सहितस्य समुदायस्यैव संज्ञा इत्युक्तं प्राक् । तेन "नस्तद्धिते" इति टिलोपः ॥ एवम् विभक्त्यर्थेऽव्ययीभावे अध्यात्मम् ॥

६८० । नपुंसकादन्यतरस्याम् ॥ ५।४।१०९ ॥

दी— । अन्नन्तं यत् क्लीवं तदन्तादव्ययीभावात् टच् वा स्यात् । उपचर्मम्—उपचर्म ।

If the अन्नन्त word is neuter, टच् is optional. Thus उपचर्मम् with टच् and उपचर्म without it.

मित— । इहापि अव्ययीभावादिति अव्ययीभावोत्तरपदादित्यर्थे लक्षणा । यद्वा—अव्ययीभावे कर्त्तव्ये नपुंसकादुत्तरपदात् टच् वा इति प्राग्वत् व्याख्येयम् ॥ टचि—टिलोपे उपचर्मम् । टजभावे उपचर्म इति अदन्तत्वाभावादम् न ॥

६८१ । नदीपौर्णमास्याग्रहायणीभ्यः ॥ ५।४।११० ॥

दी— । वा टच् स्यात् । उपनदम्—उपनदि । उपपौर्णमासम्—उपपौर्णमासि । उपाग्रहायणम्—उपाग्रहायणि ।

टच् is attached optionally after the words नदी, पौर्णमासी and अग्रहायणी final in an अव्ययीभाव । Thus उपनदम् with टच् and उपनदि without it, the vowel being shortened by "ह्रस्वो नपुंसके—" ( 318—1. 2. 47 ). Similarly उपपौर्ण etc.

मित— । अव्ययीभावे इति वर्त्तते । नद्यन्तस्य पौर्णमास्यन्तस्य आग्रहायण्यन्तस्य च अव्ययीभावस्य टच् अन्तावयवो वा स्यात् ॥ उपनदि इत्यादि नपुंसकह्रस्वे न ॥ इह नदीति न "युस्त्र्याख्यौ—" (२६६—१।४।३) इति नदीसंज्ञकशब्दः । तथा सति पौर्णमास्याग्रहायण्योरीकारान्तयोः स्त्र्याख्ययोः नदीसंज्ञयोः पृथगुपादानं न स्यात् ॥

६८२ । झयः ॥ ५।४।१११ ॥

दी— । झयन्तादव्ययीभावात् टच् वा स्यात् । उपसमिधम्—उपसमित् ।

टच् is optionally attached after the second member in an अव्ययीभाव if it ends in a वर्गीय वर्ण except the nasals. Thus उपसमिधम् with टच् and उपसमित् without it.

मित—। झय इत्यपञ्चमवर्गीयाः। अव्ययीभावादिति प्राग्वल्लक्षणा। यद्वा—अव्ययीभावे इत्यनुवर्त्तते। झयः इति झयन्तादित्यर्थः।

९८३। गिरेश्च सेनकस्य ॥ ५।४।११२ ॥

टी—। गिर्यन्तादव्ययीभावात् टच् वा स्यात्। सेनकग्रहणं पूजार्थम्। उपगिरम्—उपगिरि ॥

The worthy teacher सेनक wants टच् to be optionally attached to गिरि when it is the second member in an अव्ययीभाव। सेनक is mentioned out of respect. Thus उपगिरम् with टच् and उपगिरि without it.

मित—। अव्ययीभावादिति प्राग्वल्लक्षणा। यद्वा—अव्ययीभावे इति वर्त्तते। अव्ययीभावे गिरिः परं टच् समासान्तः स्यात् इत्यन्वयः॥ पूजार्थं न विकल्पार्थम्। विकल्पस्तु अन्यतरस्यांग्रहणानुवृत्तेरेव लभ्यते॥

---

# अथ तत्पुरुषः

९८४। तत्पुरुषः ॥ २।१।२२ ॥

टी—। अधिकारोऽयं प्राग्बहुव्रीहेः।

The designation तत्पुरुष continues so long as the word बहुव्रीहि is not pronounced (829—2.2.23).

मित—। 'शेषो बहुव्रीहिः" (८२९—२।२।२३) इत्यतः प्राक् तत्पुरुषप्रकरणमित्यर्थः॥

६८५ । द्विगुश्च ॥ २।१।२३ ॥

दी—। द्विगुरपि तत्पुरुषसंज्ञः स्यात् । इदं सूत्रं त्यक्तुं शक्यम्, "संख्यापूर्वो द्विगुश्च" ( ७३०—२।१।५२ ) इति पठित्वा चकारबलेन संज्ञाद्वयसमावेशस्य सुवचत्वात् । समासान्तः प्रयोजनम् । पञ्चराजम् ।

द्विगु compounds also are deemed as तत्पुरुष । The rule for द्विगु is "संख्यापूर्वो द्विगुः" which supplants the name तत्पुरुष । If we add a च the sense becomes "द्विगु *also.*" The 'also' secures तत्पुरुष संज्ञा too ; and then the present rule becomes superfluous. The object of giving तत्पुरुषसंज्ञा to द्विगु compounds is to have समासान्त affixes that are enjoined after तत्पुरुष compounds. Thus पञ्चानां राज्ञां समाहारः gives द्विगुसंज्ञा to 'पञ्चराजन्' । If this is to be a तत्पुरुष the समासान्त affix टच् comes in by "राजाहः—" ( 788—5.4.91 ). Thus पञ्चराजन् टच् *i. e.*, पञ्चराज । Now this is in the neuter by "स नपुंसकम्" ( 821—2.4. 17 ). Hence पञ्चराजम् ।

मित—। सूत्रेणैतेन यो द्विगुः स तत्पुरुषोऽपि इति संज्ञाद्वयसमावेश उच्यते । एतत्तु लघुतरेण प्रयत्नेन कर्तुं शक्यमिति दर्शयति संख्यापूर्वेति । "तद्धितार्थ—" ( ७२८—२।१।५१ ) इत्यत्र यः संख्यापूर्वस्तत्पुरुषः तस्य द्विगुसंज्ञा क्रियते । सूत्रञ्च "संख्यापूर्वो द्विगुः" (७३०—२।१।५२) इति । एतेन तत्पुरुषसंज्ञा निवर्त्तते । यदि तु सूत्रे चकारः क्रियते, "संख्यापूर्वो द्विगुश्च" इति, तदा चकारेण तत्पुरुषस्यानुवर्त्तनात् संज्ञाद्वयसमावेशो भवति ॥ भवतु, द्विगोः पुनस्तत्पुरुषसंज्ञया किं प्रयोजनम् ? समासान्तः प्रयोजनम् । पञ्चानां राज्ञां समाहार इति समाससंज्ञायां सुब्लुकि 'पञ्चन् राजन्' इति स्थिते "नलोप—" ( २३६—८।२।७ ) इति पञ्चन्शब्दस्य पदसंज्ञकस्य नकारो लुप्यते, 'पञ्चराजन्' इति भवति । समासचरमावयवानां तु "उत्तरपदत्वे चापदादिविधौ" ( वा, १।१।६२ ) इति पदसंज्ञा निषिद्धा । तेन राजन्शब्दस्य नैव लोपः । ततस्तत्पुरुषसंज्ञासमावेशबलेन एव टजुत्पद्यते । "नस्तद्धिते" ( ६७९—

६।४।१४४ ) इति टिलोपे पञ्चराज इति च भवति । अत्र "स नपुंसकम्" (८२१—२।४।१७ ) इति नपुंसकत्वे पञ्चराजम् । स्त्रीत्वं तु न भवति समुदायस्यैवेह अकारान्तता न हि उत्तरपदस्य, तेन "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" ( सू ८२१—वा ) इति न प्रवर्त्तते ॥

६८६ । द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ॥२।१।२४॥

दी— । द्वितीयान्तं श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स तत्पुरुषः । कृष्णं श्रितः कृष्णश्रितः । दुःखमतीतो दुःखातीतः इत्यादि ।

द्वितीयान्त words are optionally compounded into a तत्पुरुष with श्रित, अतीत, पतित, गत, अत्यस्त, प्राप्त, आपन्न having a suitable सुप् attached. Thus कृष्णं श्रितः gives कृष्णश्रितः where कृष्ण leads because द्वितीया is an उपसर्जन here. Similarly दुःखम् etc.

मित— । द्वितीया इति द्वितीयान्तं लक्ष्यते । श्रितादीनि प्रातिपदिकानि । सुप्सुपा इति वर्त्तते, तेन सुपा युक्तैः श्रितादिभिः सह समासः । तदाह श्रितादिप्रकृतिकैरिति । श्रितादयः प्रकृतिः प्रकृतयो वा सुब्विषयो येषां तैरित्यर्थः ॥ "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" इति 'श्रिता अतीता' इत्यादिभिः स्त्रीलिङ्गैरपि समासो भवति । कष्टं श्रिता कष्टश्रिता । श्रितान्तैस्तु न भवति "समासप्रत्ययविधौ तदन्तविधिप्रतिषेधः" ( २६, वा ) इति वचनात् ॥ पन्न इति प्राप्त पतित इति इहैव निपातनादिट् । अत्यस्त इति विग्रहः । एभिर्योगे कर्मणि द्वितीया, सा समस्यते ॥

दी— । "गम्यादीनामुपसंख्यानम्" (वार्त्तिक) । ग्रामं गमी ग्रामगमी । अन्नं बुभुक्षुः अन्नबुभुक्षुः ।

Words listed with गमि leading have to be enumerated along with श्रित etc. Thus ग्रामं गमी gives ग्रामगमी etc.

मित— । "गमेरिनिः" इत्यौणादिक इनिः "भविष्यति गम्यादयः" ( ३१०९—

१।३।३ ) इति भविष्यत्कालविषयः। ततः "अकेनो:—" ( ६२८—२।३।७० ) इति षष्ठीनिषेधात् ग्राममित्यनुक्ते कर्मणि द्वितीया ॥

६८७। स्वयं क्तेन ॥ २।१।२५ ॥

दी—। 'द्वितीया' इति न सम्बध्यते। अयोग्यत्वात्। स्वयंकृतस्य अपत्यं स्वायंकृतिः।

The indeclinable स्वयम् is compounded in a तत्पुरुष with a word having क्त attached. Here द्वितीया does not come in from the preceding rule because द्वितीया cannot be attached to स्वयम् which has the sense of तृतीया। Thus स्वयं कृतः स्वयंकृतः। स्वयम् being an अव्यय, the compounded from looks like the uncompounded; but witness the same with a तद्धित attached as in स्वायंकृतिः having the first-vowel lengthened.

मित—। स्वयमिति तृतीयासमर्थम्। तदाह 'द्वितीया न सम्बध्यते अयोग्यत्वात्' इति। समासस्तु तृतीयातत्पुरुषः। समासफलञ्च वृद्धिहेतौ तद्धिते आदिवृद्धिः, स्वायंकृतिरिति ॥ क्त इति लक्षणया क्तान्तप्रकृतिकः सुप् ॥

६८८। खट्वा क्षेपे ॥ २।१।२६ ॥

दी—। खट्वाप्रकृतिकं द्वितीयान्तं क्तान्तप्रकृतिकेन सुबन्तेन समस्यते निन्दायाम्। खट्वारूढो जाल्मः। नित्यसमासोऽयम्। न हि वाक्येन निन्दा गम्यते।

The word खट्वा with द्वितीया attached is compounded with a क्तान्त word having a suitable सुप् to express deprecation. Thus खट्वारूढः which means a fool. The समास is obligatory, because the वाक्य will not imply censure.

मित—। 'क्तेन' इति वर्त्तते 'द्वितीया' इति च। खट्वा इति लक्षणया 'खट्वाप्रकृतिका'। ततः "खट्वाप्रकृतिका द्वितीया क्तान्तप्रकृतिकेन सुपा समस्यते क्षेपे"

इत्यन्वयः। क्षेपो निन्दा। विद्यार्थी हि भूमिशयो भवति इति नियमः। समाप्तविद्यो गुरुणाभ्यनुज्ञातो गृही भूत्वा खट्वारोहणमर्हति। यस्तु प्रागेव, तथा कुरुते, जाल्मः किल सः। ततः परित्यक्तयोगार्थः अयथाकारिमात्रे अयं रूढः। खट्वामारूढ इत्युक्ते तु खट्वारोहणमात्रमेव गम्यते न मूर्खता, तदाह नहि वाक्यं नेति। नित्यसमासता च उन्मत्तगङ्गवत् द्रष्टव्या॥

## ६८८। सामि ॥ २।१।२७॥

### दी—। सामिकृतम्।

The indeclinable सामि ( semi ? ) meaning 'half' is compounded with a क्तान्त word. Thus सामिकृतम्।

मित—। 'क्तेन' इत्यस्ति। सामि इत्यर्धार्थं अव्ययम्। क्रियाविशेषणे द्वितीया। सामिप्रकृतिका द्वितीया क्तान्तप्रकृतिकेन सुपा समस्यते। सामि यथा तथा कृतं सामिकृतम्॥

## ६९०। कालाः ॥ २।१।२८॥

### दी—। 'क्तेन' इत्येव। अनत्यन्तसंयोगार्थं वचनम्। मासप्रमितः प्रतिपच्चन्द्रः। मासं परिच्छेत्तुमारब्धवानित्यर्थः।

Words meaning 'time', when in the द्वितीया, are optionally compounded with a क्तान्त word. This rule covers cases where there is no pervasion. Thus मासप्रमितः in मास etc. means 'it has commenced to measure a fresh month.'

मित—। कालाः इति बहुवचनं कालवाचकशब्दप्रकृतिकाः। 'द्वितीया' इत्यस्ति 'क्तेन' इति च। ततः कालवाचकशब्दप्रकृतिका द्वितीयाः क्तान्तप्रकृतिकेन सुपा समस्यन्ते इत्यन्वयः॥ सामान्येन विधानं व्याप्तौ च अव्याप्तौ च प्राप्नोति। अत्यन्ते सूत्रे उत्तरसूत्रेण व्याप्तौ सिध्यति अव्याप्तौ तु न सिध्यति। तदाह—अनत्यन्तसंयोगार्थं वचनमिति॥ शुक्लप्रतिपदि मासारम्भः। तत्र प्रतिपच्चन्द्र एव मासं प्रमातुमारभते।

स हि चन्द्रो मासप्रमित इत्युच्यते। तत्र प्रमित इति प्रमातुमारब्ध इत्यर्थे आदिकर्मणि कर्त्तरि क्तः। मासं प्रमित इति विग्रहे न हि प्रतिपच्चन्द्रेण मासस्य सर्वात्मना योगो गम्यते। तेन नात्यन्तसंयोगः॥

६८१। अत्यन्तसंयोगे च ॥ २।१।२९ ॥

**टी—। 'काला:' इत्येव। अक्तान्तार्थं वचनम्। मुहूर्त्तं सुखं मुहूर्त्तसुखम्।**

Words meaning 'time' are also compounded with a suitable सुबन्त word when there is pervasion. Thus मुहूर्त्त &c.

मित—। काला: द्वितीयान्ता: समर्थेन समस्यन्ते व्याप्तौ सत्याम् इत्यर्थ:॥ सामान्यतो विहितोऽयं समास: क्तान्तेन च अक्तान्तेन च भवति। क्तान्तेन तु पूर्वेणैव सिद्ध:। तदाह—अक्तान्तार्थं वचनमिति॥ एवमिह कालस्य समासे चत्वार: पक्षा:—व्याप्तौ क्तेन इत्येक:, अव्याप्तौ क्तेन इति द्वितीय:, व्याप्तौ अक्तेन तृतीय:, अव्याप्तौ अक्तेन चतुर्थ:। एषु चतुर्थे समासो नेष्यते,अन्येषु इष्ट: समास:॥ उदाहरणानि च, व्याप्तौ क्तेन मासमधीतो मासाधीत: (६८१), अव्याप्तौ क्तेन—मासप्रमित: (६८०), व्याप्तौ अक्तेन मुहूर्त्तसुखम् (६८१)॥

६८२। तृतीयातत्कृतार्थेन गुणवचनेन ॥ २।१।३० ॥

**टी—। 'तत्कृत' इति लुप्ततृतीयाकम्। तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेन अर्थशब्देन च सह प्राग्वत्। शङ्कुलया खण्ड: शङ्कुलाखण्ड:। धान्येन अर्थ: धान्यार्थ:। 'तत्कृत' इति किम्? अक्ष्णा काण:।**

Here तत्कृत is not compounded with अर्थ, but is a separate word in the तृतीया विभक्ति which has been dropped irregularly. Hence the sense is—A word expressing the cause is optionally compounded in the तृतीया with the word expressing the change the cause works in a substance and also with the word अर्थ।

Thus शङ्कुला &c.—divided by a pair of nippers, also धान्यार्थः—Money from paddy. Why तत्कृत—caused by it ? Witness अक्ष्णा काणः which stands uncompounded because काणत्व is not caused by अक्षि ।

मित—। सुपदतृतीयाकमिति चौरो विभक्तिलोप इत्यर्थः । तृतीयान्तमिति 'तृतीया' इत्यसौ लभ्यते तदन्तविधिना । गुणमुक्तवत् न तु सम्प्रति उक्तिरिति गुणवचनम्, यद्वि प्राक् गुणमुक्त्वा सम्प्रति तद्गुणविशिष्टं द्रव्यमाह तत् । बाहुलकात् कर्त्तरि ल्युट् । सूत्राक्षराणामन्वयस्तु—तृतीया तत्कृत गुणवचनेन अर्थेन (च समस्यते)। अयमर्थः —'तृतीया' तृतीयान्तं पदं 'तेन' तेनैव तृतीयान्तपदार्थेन 'कृतो' यो 'गुणः' तस्य 'वचनेन' तद्गुणविशिष्टद्रव्यवाचकेन पदेन 'अर्थ'—शब्देन च सह समस्यते ॥ शङ्कुला अस्त्रविशेषः । तेन कृतः 'खण्डः' तेन खण्डितं खण्डगुणवत् जातं वस्तु 'शङ्कुलाखण्डः' ॥ ननु तत्कृतो यो गुणः इति व्याख्याने 'गुण'-शब्दस्य 'तत्कृत'-शब्देन सामर्थ्यं भवति, न 'वचन'—शब्देन । तर्हि कुतो 'गुणवचनेन' इति समासः ? उच्यते—इह सापेक्षस्य समासोऽपि सौत्र एव बोध्यः ॥ 'अर्थो' धनम् । धान्येन इति हेतौ तृतीया । धान्यार्थ इति धान्यहेतुकं धनमाह ॥ 'काणः' इति तद्गुणविशिष्टं द्रव्यं वक्ति सत्यं, परम् अक्ष्णा कृतः काणः इति तु नैवार्थः, तेन न समासः ॥

५८२ । पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥२।१।३१॥

दी— । तृतीयान्तमेतैः प्राग्वत् । मासपूर्वः । मातृसदृशः । पितृसमः । ऊनार्थे—माषोनं कार्षापणम्, माषविकलम् । वाक्कलहः । आचारनिपुणः । गुडमिश्रः । आचारश्लक्ष्णः ।

Words with तृतीया may be compounded with पूर्व etc., having syntactical relation with them. Thus मासेन पूर्वः मासपूर्वः—anterior by a month etc.

मित— । 'तृतीया' इत्यनुवर्त्तते । तदन्तविधिः । तदाह तृतीयान्तमिति । 'एतैः' इति पूर्वादयो लभ्यन्ते । 'अर्थ' इति ऊनशब्देनैव सम्बध्यते ॥ मासपूर्व

इत्यत्र मासः पूर्वत्वे हेतुः। हेतुतृतीयायाः समासः। मातृसदृशः पितृसम इति तुल्यार्थतृतीयायाः समासः। माषोनं माषविकलमिति हेतुतृतीयायाः। एवं शिष्टेष्वपि यथायथं तृतीया ॥

दी—। मिश्रग्रहणे सोपसर्गस्यापि ग्रहणम्। "मिश्रञ्चानुपसर्गमसन्धौ" (३८८८—६।२।१५४) इत्यत्रानुपसर्गग्रहणात्। गुडमिश्रा धानाः।

मिश्र in the rule includes मिश्र with an उपसर्ग preceding, because Panini in the rule "मिश्रञ्च—" (3888) refers to तृतीया-तत्पुरुष compounds with मिश्र having an उपसर्ग prefixed. Thus गुड etc.

मित—। ननु धातुग्रहणे सोपसर्गस्यापि ग्रहणं भवति। इह तु 'मिश्र' इति प्रातिपदिकं न धातुः। तदन्तविधिश्च समासविधौ प्रतिषिद्धः, तेन मिश्रस्य यः समासः स मिश्रान्तस्य न स्यात्। तत् कथं 'गुडसंमिश्राः' इति सोपसर्गेण समासः? उच्यते— "मिश्रञ्चानुप—" इति उत्तरपदस्य मिश्रशब्दस्य तृतीयासमासे अन्तोदात्तता विधीयते सोपसर्गस्य तु तस्य प्रतिषिध्यते। प्राप्तस्यैव प्रतिषेधो भवति। तेन सोपसर्गेणापि मिश्रशब्देनायं समासो ज्ञाप्यते ॥

दी—। "अवरस्योपसंख्यानम्" (वार्त्तिक)। मासेन अवरो मासावरः।

अवर should be included in the list in the rule. Thus मासावरः।

मित—। अवर इति कनिष्ठः, पश्चाद्वर्त्ती वा। न तु हीनः, तस्य ऊनार्थेनैव ग्रहणात् ॥

६९८। कर्त्तृकरणे कृता बहुलम् ॥२।१।३२॥

दी—। कर्त्तरि करणे च तृतीया कृदन्तेन बहुलं प्राग्वत्। हरिणा त्रातो हरित्रातः। नखैर्भिन्नो नखभिन्नः।

A तृतीयान्त word meaning a कर्त्ता or a करण is, though not uniformly, compounded with a कृदन्त word. Thus हरित्रात: where हरि is कर्त्ता ; नखभिन्न: in which नख is करण।

मित—। तृतीया इत्यनुवर्त्तते। कर्त्ता च करणञ्च कर्त्तृकरणम् द्वन्द:। "सर्वो द्वन्द्वो विभाषया (? विभाषा) एकवद्भवति" (परिभाषा) इति एकवद्भाव:। तस्मिन् या तृतीया। अनुक्ते कर्त्तरि करणे च या तृतीया सा इत्यर्थ:।

दी—। "कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्" (परिभाषा)। नखनिर्भिन्न:। 'कर्त्तृकरणे' इति किम्? भिक्षाभिरुषित:। हेताविषा तृतीया॥ बहुलग्रहणं सर्वोपाधिव्यभिचारार्थम्। तेन 'दात्रेण लूनवान्' इत्यादौ न। 'कृता' किम्? काष्ठै: पचतितराम्।

कृत् does not mean a simple कृदन्त only, but also includes कृदन्त words with a गति or a कारक prefixed. Thus नखनिर्भिन्न: where the कृदन्त word has निर्, which is a गति, prefixed to it. Why say कर्त्तृकरणे? Witness भिक्षाभि: etc. uncompounded because the तृतीया in भिक्षाभि: is हेतौ and does not express a कर्त्ता or a करण। बहुल implies all manner of irregularites; thus दात्रेण etc. are uncompounded though the rule applies. Why say कृता? Witness काष्ठै: etc., which cannot be compounded because though the तृतीया is करणे the second member is a तद्धित not a कृत्।

मित—। 'कृत्' इत्युक्ते शुद्ध: कृत्, गतिपूर्व: कृत्, कारकपूर्वश्च कृत् गृह्यते इत्यर्थ:॥ गतिपूर्वं उदाह्रियते। तदन्तविधौ प्रतिषिद्धेऽपि भिन्नशब्दे न य बह 'कृता' इति समास: स निर्भिन्नशब्दे नापि भवति॥ कारकपूर्वस्य उदाहरणमिह नास्ति॥ 'सर्वोपाधि—' इत्यादिरयमर्थ:। सूत्रे 'कर्त्तृकरणे' इत्येक उपाधि:, 'कृता' इति द्वितीय:।

अनुवर्त्तितव्या 'तृतीया' इत्यपरः। 'समासः' इति चतुर्थः। सर्वेषामेषां व्यभिचारी दृश्यते। पचतितराम् इति "किमेत्तिङ—" (२००४—५।४।११) इत्यादिना क्रियाप्रकर्षे आम् तद्धितः। आमन्तत्वादव्ययम्। सुब्लोपः। अकृत्त्वात् करण-तृतीयया न समासः। तेन 'कृता' इति तद्धितनिवृत्त्यर्थमित्याशयः॥

६८५। कृत्यैरधिकार्थवचने ॥२।१।३३॥

टी—। स्तुतिनिन्दाफलकम् अर्थवादवचनम् अधिकार्थ-वचनम्। तत्र कर्त्तरि करणे च तृतीया कृत्यैः सह प्राग्वत्। वातच्छेद्यं तृणम्। काकपेया नदी।

अधिकार्थवचन means a hyperbole resulting in appreciation or deprecation. In such cases a तृतीयान्त word meaning a कर्त्ता or a करण is optionally compounded with a कृत्यप्रत्ययान्त word. Thus वात etc., which may be either an appreciation on the fineness of the reed or a depreciation of its rottenness. Similarly काक etc.

मित—। तृतीया इत्यस्ति कर्त्तृकरणे इति च। अर्थवादः आरोपितोऽर्थः अधिकार्थ इति भावः॥ वातच्छेद्यमिति वातेनापि छेत्तुं शक्यम्। तीरस्थैः काकैः पीयते इति बहुजलतया स्तुतिः। काकैः पीत्वा परिशोष्यते इति स्वल्पजलतया निन्दा वा॥

६८६। अन्नेन व्यञ्जनम् ॥२।१।३४॥

टी—। संस्कारकद्रव्यवाचकं तृतीयान्तम् अन्नेन प्राग्वत्। दध्ना ओदनो दध्योदनः। इह अन्तर्भूतोपसेकक्रियाद्वारा सामर्थ्यम्॥

A word in the तृतीया meaning a flavouring substance is optionally compounded with a word meaning food. Thus

दध्ना etc. Here syntactical connection between दधि and ओदन is established through उपसेकक्रिया which is implied.

मित—। व्यञ्जनमिति संस्कारकम्। व्यज्यते रसः अनेन इति ल्युट् करणे। अन्नं संस्कार्यम्। तृतीया इत्यस्ति, तदाह 'संस्कारकद्रव्यवाचकं तृतीयान्तम्' इत्यादि॥ इह दध्ना ओदनस्य कथं सामर्थ्यमित्याह—वृत्तौ अन्तर्भूता या उपसेकक्रिया तद्द्वारा सामर्थ्यमस्ति। दध्युपसिक्त ओदन इत्यर्थो गम्यते, तेन सामर्थ्यमस्ति समासश्च भवति इति भावः॥

## ६८७। भक्ष्येण मिश्रीकरणम् ॥२।१।३५॥

टी—। गुडेन धानाः गुडधानाः। मिश्रणक्रियाद्वारा सामर्थ्यम्।

भक्ष्य is hard food. A तृतीयान्त word meaning some hard food is compounded optionally with a word meaning something that is mixed with the food to improve its taste. Thus गुडेन etc. Syntactical connection is due to मिश्रणक्रिया।

मित—। 'तृतीया' इत्यस्ति। भक्ष्यं कठिनम्, अन्नं कोमलम्। अमिश्रं मिश्रं क्रियते अनेन इति मिश्रीकरणम्—करणे ल्युट्। एतदपि अद्रवम्। एवं भक्ष्य-मन्नादिन्नं मिश्रीकरणञ्च व्यञ्जनात्। तेन नास्य पूर्वसूत्रेण गतार्थता। मिश्रीकरणं तृतीयान्तं भक्ष्येण समस्यते इत्यन्वयः॥ सामर्थ्यञ्च पूर्वत्र यथा उपसेकक्रियाद्वारा तथा इह मिश्रणक्रियाद्वारा। कठिना गुडाः कठिनाभिर्धानाभिर्मिलिता ता मिश्रीकुर्वन्ति। इदमपि स्वादुतासम्पादनार्थम्॥

## ६८८। चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥२।१।३६॥

टी—। चतुर्थ्यन्तार्थाय यत् तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत्। तदर्थेन प्रकृतिविकृतिभाव एव, बलिरक्षितग्रहणात् ज्ञापकात्। यूपाय दारु यूपदारु। नेह—रन्धनाय स्थाली। अश्वघासादयस्तु षष्ठीसमासाः।

A चतुर्थ्यन्त word is compounded optionally with the words अर्थ, बलि, हित, सुख, रक्षित and words denoting things intended for the substance designated by the चतुर्थ्यन्त word ( तदर्थ ) । The समास with तदर्थ is allowed only when the relation of transformation and the thing transformed exists, *i. e.*, when something is made of something else ; this is inferred from the separate mention of बलि and रक्षित in the rule. A simple तदर्थ includes these two also. Thus यूपाय &c., where दारु ( wood ) is the material which is transformed into a यूप ( a sacrificial stake ). Witness also रन्धनाय etc., where समास is not allowed because स्थाली is not transformed into रन्धन । Compounds like अश्वघास where घास etc., are intended for अश्व etc., which are not transformation, have to be expounded as अश्वस्य not अश्वाय घासः etc.

मित— । 'चतुर्थी' इति चतुर्थ्यन्तं पदमित्यर्थः । तदर्थ अर्थ—इति च्छेदः । तस्मै इदं तदर्थम् । यद्वा स प्रयोजनमस्य तदर्थम् । वाक्ययोरेतयोः 'तस्मै' इति 'स' इति च चतुर्थ्यन्तपदस्य अर्थः अभिधेयं वस्तु लक्ष्यते । तेन 'चतुर्थ्यन्तार्थाय यत्' तत् 'तदर्थम्' इति फलितम् । समासस्तु वस्तुना न सम्भवति किन्तु वस्तुवाचिना शब्देन । तदाह 'चतुर्थ्यन्तार्थाय यत् तद्वाचिना' इति ॥ उदाहरणे 'यूपाय' इति चतुर्थ्यन्तं तदर्थञ्च यूपनामकं पशुबन्धनम् । तच्च दारुणा क्रियते तत् दारु इति यूपार्थं भवति । तेन 'यूपाय' इति चतुर्थ्यन्तः शब्दः 'दारु' इति प्रथमान्तेन शब्देन समस्यते ॥ तदर्थेन य इह समासः स प्रकृतिविकृतिभावे एव भवति नान्यत्र । विकृतिरेव चतुर्थ्यन्ता प्रकृत्या प्रथमान्तेन समस्यते इति भावः । तथा चैवोदाहृतम् ॥ कुत इयं व्यवस्था इत्याह—सूत्रे बलिशब्दो रक्षितशब्दश्च पृथगुपात्तः । परं यः कुबेराय बलिः स कुबेरार्थ एव । एवं 'तदर्थ' इति यदि तादर्थ्यमात्रस्य द्योतकं स्यात् बलिशब्दोऽपि तदैवान्तर्भूतः स्यात् पृथङ् नोच्येत । तत् 'तदर्थ' इति न तादर्थ्यमात्रमाह किन्तु प्रकृतिविकारभावे सति या तदर्थता तस्या एव ज्ञापकम् । एवं रक्षितशब्दादप्यूह्यम् ॥ रन्धनाय स्थाली इति प्रकृतिविकारभावो नास्ति न च समासः । अश्वाय घासः

त्यपि न समासः। अन्यथासशब्दस्य अन्यस्य यास इति कृत्वा लभ्यते—इति वार्त्तिकभाष्यकारादीनामाशयः॥

दी—। "अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्" (वार्त्तिक)। द्विजार्थायं द्विजार्थः सूपः, द्विजार्था यवागूः, द्विजार्थं पयः। भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम्।

The समास with अर्थ is obligatory and the compound has the gender in the word it qualifies. Thus द्विजाय अयं द्विजार्थः in the masculine, द्विजाय इयं द्विजार्था in the feminine, द्विजाय इदं द्विजार्थम् in the neuter. Again भूतबलिः etc., are also चतुर्थीतत्पुरुष।

मित—। नित्यसमास इति अस्वपदविग्रहो दर्श्यते द्विजाय अयमित्यादि। इह अर्थशब्दः प्रयोजनवचनः। विशेष्यलिङ्गता इति "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" (८१२—२।४।२६) इत्यस्यापवादः। अन्यथा अर्थशब्दस्य पुंस्त्वे नित्यपुंलिङ्गता स्यात्। यूपदारु, द्विजार्थः, भूतबलिः इत्यादिषु सर्वत्र पूर्वपदे तादर्थ्ये चतुर्थी॥ गोभ्यो हितमिति हितशब्दयोगे चतुर्थी चानेन शाप्यते इति केषाञ्चिदाशयः॥

६९९। पञ्चमी भयेन ॥२।१।३७॥

दी—। चोराद्भयं चोरभयम्। "भयभीतभीतिभीभिरिति वाच्यम्" (वार्त्तिक)। वृकभीतः।

A पञ्चम्यन्त word is compounded optionally with the word भय। Thus चोरभयम्। Along with भय have to be mentioned भीत, भीति, भी also. Thus वृकभीतः।

मित—। पञ्चम्यन्तं भयशब्देन प्रथमान्तेन समस्यते। "भीत्रार्थानाम्—" (५८८—१।४।२५) इत्यपादानत्वात् चोरशब्दात् पञ्चमी।

७००। अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ॥२।१।३८॥

दी—। एतैः सह अल्पं पञ्चम्यन्तं समस्यते स तत्पुरुषः सुखापेतः। कल्पनापोढः। चक्रमुक्तः। स्वर्गपतितः। तरङ्गापत्रस्तः। 'अल्पशः' किम्? प्रासादात् पतितः।

A few words with पञ्चमी are compounded with अपेत, अपोढ, मुक्त, पतित, अपत्रस्त optionally in a तत्पुरुष। Thus सुख &c., strayed from happiness, कल्पना &c., carried away from the original resolve, चक्र &c., saved from the discus, स्वर्ग &c., dropped from heaven, तरङ्ग &c., scared by waves. Why अल्पशः? Witness absence of compound in प्रासाद etc.

मित—। पञ्चमी इत्यस्ति। अल्पा पञ्चमी इति अल्पशः पञ्चमी। अल्पार्थात् कर्मणि कारके शस्। मङ्गलामङ्गलवचनाभावात् इहैव निपातनात् शस् इति हरदत्त-नागेशौ। वस्तुतस्तु शसि मङ्गलामङ्गलवचनता कात्यायनस्य। सूत्रकारस्य तु तद्वचना-इतेऽपि कारकमात्रे शस्। परवर्तिवार्त्तिककारप्रामाण्यात् सूत्रकारः प्रयुङ्क्ते इति तु न श्रद्धेयमेतत्॥

७०१। स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन॥२।१।३८॥

दी—। स्तोकान्मुक्तः—अल्पान्मुक्तः। अन्तिकादागतः—अभ्याशादागतः। दूरादागतः—विप्रकृष्टादागतः। कृच्छ्रादागतः। "पञ्चम्याः स्तोकादिभ्यः" (८५८—६।३।२) इत्यलुक्।

Words meaning स्तोक, अन्तिक, दूर and the word कृच्छ्र, in the पञ्चमी, are compounded optionally with क्तान्त words. Thus स्तोकात् &c. In these examples पञ्चमी is retained in the compound by the rule "पञ्चम्याः—" (959).

मित—। पञ्चमी इत्यस्ति। तस्याश्च पञ्चमीयुक्तानि इतीहार्थः॥ स्तोकश्च अन्तिकश्च दूरश्च स्तोकान्तिकदूराणि। तानि अर्थ एषां स्तोकान्तिकदूरार्थानि। तानि च कृच्छ्रं च स्तोकान्तिकदूरार्थकृच्छ्राणि। एतानि पञ्चम्यन्तानि क्तान्तेन सुबन्तेन समस्यन्ते इत्यर्थः॥ "करणे च स्तोक—" (६०४—२।३।३३) इति स्तोकाल्पकृच्छ्रेभ्यः पञ्चमी। "दूरान्तिक—" (६०५—२।३।३५) इति अन्तिकाभ्याशदूरेभ्यः पञ्चमी॥

७०२ । षष्ठी ॥२।२।८॥

दी— । राज्ञः पुरुषो राजपुरुषः ।

Words with षष्ठी are compounded optionally with what is syntactically connected with them. Thus राज्ञः etc.

७०३ । याजकादिभिश्च ॥२।२।९॥

दी— । एभिः षष्ठ्यन्तं समस्यते । "तृजकाभ्यां कर्त्तरि" (७०९—२।२।१५) इत्यस्य प्रतिप्रसवोऽयम् । ब्राह्मणयाजकः । देवपूजकः ।

Words with षष्ठी are compounded optionally with words of the याजकादि class. This provides for exceptions of the prohibition "तृजकाभ्यां—" (709). Thus ब्राह्मण etc.

मित— । "षष्ठी" (७०२) इति सामान्यतो विहित एव समासः, तत् किमर्थं पुनरिदमुच्यते ? आह च—'प्रतिप्रसवोऽयम्' इति । "तृजकाभ्याम्—" (७०९) इति प्रतिषेधं वक्ष्यति तस्यायं प्रतिप्रसवः । याजक, पूजक इत्यादयो याजकादिषु पठ्यन्ते । ततः समासः ॥

दी— । "गुणात्तरेण तरलोपश्चेति वक्तव्यम्" (वार्त्तिक) । तरबन्तं यद्गुणवाचि तेन सह समासस्तरलोपश्च । "न निर्द्धारणे" (७०४) इति "पूरणगुण—" (७०५) इति च निषेधस्य प्रतिप्रसवोऽयम् । सर्वेषां श्वेततरः सर्वश्वेतः । सर्वेषां महत्तरः सर्वमहान् ।

The word सर्व in the षष्ठी विभक्ति is optionally compounded with an attributive having तरप् attached and the तरप् is dropped. This is an exception to the prohibition "न निर्द्धा—" (704) and also to "पूरणगुण—" (705). Thus सर्वेषाम् etc.—whiter than the white colour of all; also सर्वेषाम् etc.—mightier than the might of all.

मित—। 'गुणात्' गुणवचनात् उत्तरो यः 'तरप्'-प्रत्ययः तदन्तेन सह षष्ठ्याः समासः स्यात् तरप्-प्रत्ययस्य च लोपो भवेत्। गुणवचनः शब्दस्तरपा युक्तोऽपि गुणवचन एव। तदाह 'तरबन्तं यद्‌गुणवाचि' इति॥ सामान्यतो निर्देशः। वस्तुतस्तु "सर्वं गुणकार्त्स्न्ये" (३८२७—६।२।९३) इति सर्वशब्दमधिकृत्यैव उक्तत्वात् सर्वशब्दस्यैवायं समासः॥ सर्वेषां श्वेततर इत्यस्य अयमर्थः—'सर्वेषां' प्रकृतादपरेषां यः 'श्वेतो' गुणः तदपेक्षया सातिशयः श्वेत इति 'श्वेततरः' एषः। "सर्वेषामिति गुणसम्बन्धे षष्ठी" इति "द्रव्यान्तराधारश्वेतगुणापेक्षया सातिशयः श्वेतो गुणः" इति चकैयटः। नागेशस्तु "द्रव्यान्तराश्रितश्वेत" इति पठति। गुणसम्बन्धे षष्ठी इति श्वेतापेक्षया षष्ठी, न तु निर्द्धारणे इत्यर्थः। निर्द्धारणे हि श्वेततम इति तमप् स्यात्। तेन नायं "न निर्द्धारणे" (७०४) इत्यस्य प्रतिप्रसवः किन्तु "पूरणगुण—" (७०५) इत्यस्य। इह हि यः श्वेतोः गुणः स 'सर्वेष्वपि' आधारे स्थितोऽपि न तत्स्थः। तेन "तत्स्थैश्च गुणैः षष्ठी समस्यते" इति न प्राप्नोति। एवं सति निषेधे गुणेन समासः प्रतिप्रसूयते। सर्वेषां महत्तरं सर्वमहान् इति "न निर्द्धारणे" इत्यस्य प्रतिप्रसवः॥

**टी—। "कृद्योगा च षष्ठी समस्यते इति वाच्यम्" (वार्त्तिक)। इध्मस्य प्रव्रश्चनः इध्मप्रव्रश्चनः।**

It should be noted that षष्ठी in connection with a कृत् may also be compounded. Thus इध्मस्य etc.—Wood-chopper.

मित—। कृदन्तेन योगे जाता या षष्ठी सा समस्यते॥ ननु कुतः समासाभावः यावता "षष्ठी" (७०२) इति प्राप्त एव समासः? उच्यते—"प्रतिपदविधाना—" (सू, ७० ४, वा) इति निषिद्धः समासः, तस्यायं प्रतिप्रसवः॥ प्रव्रश्च्यते छिद्यते अनेन इति प्रव्रश्चनः। इध्मं काष्ठम्। तस्य प्रव्रश्चनः। "कर्तृकर्मणोः कृति" (६२३—२।३।६५) इति कर्मणि षष्ठी॥

**७०४। न निर्द्धारणे॥२।२।१०॥**

**टी—। निर्द्धारणे या षष्ठी सा न समस्यते। नृणां द्विजः श्रेष्ठः।**

षष्ठी arising out of निर्धारण (638) is not compounded. Thus नृणाम् etc., in which नृणां and श्रेष्ठ, stand uncompounded.

मित—। यतो निर्द्धार्य्यते, यच्च निर्द्धार्य्यते, यच्च निर्द्धारणहेतु एतत् त्रितयसन्निधाने एव निर्द्धारणं भवति इत्युक्तं प्राक्। तदेव हि समासनिषेधः। षष्ठीसमास एव निषिद्धः, सुप्सुपा तु भवत्येव॥

टी—। "प्रतिपदविधाना षष्ठी न समस्यते इति वाच्यम्" (वार्त्तिक)। सर्पिषो ज्ञानम्।

षष्ठी enjoined by direct mention of कर्त्ता, कर्म etc, is not compounded. Thus सर्पिषो etc., has षष्ठी करणे (612—2. 3. 5. 1) and cannot be compounded.

मित—। कारकविशेषे विहिता षष्ठी प्रतिपदविधानेत्युच्यते। कर्त्तरि, कर्मणि करणे इत्यादिप्रकारेण पदे पदे विधानं यस्याः तादृशी षष्ठी न समस्यते॥

७०५। पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन॥ २।२।११॥

टी—। पूरणाद्यर्थैः सदादिभिश्च षष्ठी न समस्यते। पूरणे—सतां षष्ठः। गुणे—काकस्य कार्ष्ण्यम्। ब्राह्मणस्य शुक्लाः। यदा प्रकरणादिना दन्ता इति विशेष्यं ज्ञातं तदेदमुदाहरणम्। अनित्योऽयं गुणेन निषेधः "तदशिष्यं संज्ञाप्रमाणत्वात्" (१२८५—१।२।५३) इत्यादि निर्देशात्। तेन 'अर्थगौरवम्' 'बुद्धिमान्द्यम्' इत्यादि सिद्धम्। सुहितार्थास्तृप्त्यर्थाः। फलानां सुहितः। तृतीयासमासस्तु स्यादेव। स्वरे विशेषः। सत्—द्विजस्य कुर्वन् कुर्वाणो वा। किङ्कर इत्यर्थः। अव्ययम्—ब्राह्मणस्य कृत्वा। पूर्वोत्तरसाहचर्य्यात् कृदव्ययमेव गृह्यते, तेन 'तदुपरि' इत्यादि सिद्धमिति रक्षितः। तव्यः—ब्राह्मणस्य कर्त्तव्यम्। तव्यता तु भवत्येव—स्वकर्त्तव्यम्। स्वरे भेदः। समाना-

धिकरणे—तक्षकस्य सर्पस्य। विशेषणसमासस्तु इह बहुलग्रहणात् न। 'गोर्धेनोः' इत्यादिषु "पोटा युवति—( ७४४—२।१।६५ ) इत्यादीनां विभक्त्यन्तरे चरितार्थानां परत्वादबाधकः षष्ठीसमासः प्राप्तः सोऽप्यनेन वार्य्यते।

A word with the sixth case-ending is not compounded with ordinal numbers, attributives, words meaning satiety, words ending in शतृ or शानच्, indeclinables, words ending in तव्य and collocative words (co-inherent ? समानाधिकरण ) । Thus—(Ordinals) सतां etc. ; (attributives) काकस्य etc. ब्राह्मणस्य शुक्लाः is also an example but only when from the context शुक्ल stands for something white in the person of the Brahmana such as दन्त । The prohibition of a गुण has exceptions, because Panini himself writes संज्ञाप्रमाणत्वात् in "तदशिष्य'—" (1295). Hence अर्थगौरवम्, बुद्धिमान्द्य etc., are defended. सुहितार्थ means तृप्तार्थ। Thus फलानाम् etc., फलसुहितः is a तृतीयातत्पुरुष not षष्ठीतत्पुरुष। The difference is in the pitch. ( सत् ) *i. e.* शतृ and शानच् ; द्विजस्य etc.—the Brahman's servant. (Indecliable) ब्राह्मणस्य etc. Here कृत् indeclinables are intended as it appears from the context. Hence तदुपरि etc., are obtained—so says रक्षित। (तव्य), ब्राह्मणस्य etc., स्वकर्तव्यम् is a तृतीयातत्पुरुष, the difference lying in the pitch. (collocative—समानाधिकरण ) तक्षकस्य etc. विशेषण समास (736—2.1.57) is irregular, and is not availble here. In गोर्धेनोः etc., षष्ठीसमास bars the समानाधिकरण समास guided by "पोटा युवति—" (744) because the former is subsequent in Panini's arrangement and the latter still has its scope in case-endings

other than the sixth. This rule, however, bars the षष्ठी समास also.

मित—। पूरणेति पूरणप्रत्ययः। गुणेति गुणवत् द्रव्यम्, तद्भावश्च। सुहितस्तृप्तः। पूरणार्थाश्च गुणार्थाश्च सुहितार्थाश्च पूरणगुणसुहितार्थाः। अर्थशब्दः प्रत्येकं द्वन्द्वान्ते सम्बध्यते। "तौ सत्" (३१०१—३।२।१२७) इत्यनेन सदिति शतृशानचोः संज्ञा। समानाधिकरणम् एकद्रव्यनिष्ठम्। षण्णां पूरणः इति षष्ठः, पूरणार्थकस्थट्प्रत्ययः। कार्ष्ण्यं कृष्णता कृष्णगुणयुक्तस्य द्रव्यस्य भावः। सोऽपि गुणेन गृह्यते। शुक्लाः शुक्लगुणयुक्तानि द्रव्याणि। कानि तानि? दन्ताः, पक्षाः, इत्यादि। एतच्च प्रकरणादोध्यम्। तदाह—यदा प्रकरणादिना इत्यादि। 'दन्ता इति विशेष्यं ज्ञातम्' इत्यस्य नायमर्थः 'दन्ता' इति विशेष्यमध्याहृत्य "ब्राह्मणस्य शुक्ला दन्ताः" इति वाक्यं पूरणीयमिति। तथा सति "ब्राह्मणस्य शुक्लाः" इति सामर्थ्यं नास्ति समासस्य न प्राप्नोति। तत् कुतः प्रतिषेधः? वस्तुतस्तु 'शुक्लाः' इति गुणोपसर्जनद्रव्यवाची शब्दः, शुक्लाः दन्ता इत्यर्थकः, स्वयमेव विशेष्यं विशेष्यान्तरं नापेक्षते। उदाहरणमिदं गुणोपसर्जनद्रव्यस्य, अपरञ्च—काकस्य कार्ष्ण्यमिति—भावप्रत्ययान्तस्य तादृशद्रव्य-वाचकशब्दस्य॥ नायं सार्वत्रिको निषेधः। तथाहि "तदशिष्यं—" (१२९५) इति सूत्रे "संज्ञाप्रमाणत्वात्" इति सूत्रकारस्य प्रयोगः। प्रमाणत्वं हि प्रमाणगुणवतो द्रव्यस्य भावः। प्रमाणमितीह गुणमुक्त्वा सम्प्रति गुणोपसर्जनद्रव्यमाह। तादृशाः शब्दाः, भावप्रत्ययान्ताश्च ते, निषेधस्य विषयः। अस्मादेव सूत्रोपात्तात् समासात् ज्ञापकात् अन्यत्रापि वैविधे स्थले सिद्धः समासः। तथाहि 'अर्थगौरवम्' इत्यत्र 'गुरु' इति केवलं गुणमुक्त्वा सम्प्रति गुणवत् द्रव्यमाह। गौरवञ्च तद्भावः, तेन निषिद्धोऽपि ज्ञापकसिद्धः समासः॥ एवं बुद्धिमान्द्यमित्यपि॥ सुहितं तृप्तिः। भावे क्तः। तदाह सुहितार्थास्तृप्त्यर्थाः। तृतीयासमासे तु 'सुहित' इति कर्मणि क्तः। तृतीयासमासे क्तान्तस्य प्रकृतिस्वरः, षष्ठीसमासे अन्तोदात्तः इत्याह स्वरे विशेष इति॥ द्विजस्य कुर्वन् इति शेषे षष्ठी, न कर्मणि "न लोक—" (६२७—२।३।६९) इति निषेधात्। तदाह कुर्वन्निति किङ्करोऽर्थकम्॥ कृत्वा इति "अव्ययकृतो भावे" इति भावे क्ता। करणमित्यर्थः। ब्राह्मणस्य कृत्वा इति ब्राह्मणस्य कार्यमित्यर्थः। शेषषष्ठ्याः समासप्रतिषेधः॥ 'उपरि' इति रिल्प्रत्ययस्तद्धितः न कृत्। तेन समासः॥ ब्राह्मणस्य कर्तव्यमिति कर्तरि षष्ठी। स्वकर्तव्यमिति तव्यता समासे अन्तस्वरितम्।

न्येन तु मध्योदात्तं स्यात् ॥ तक्षकस्य सर्पस्य इति द्रव्यान्तरापेक्षा षष्ठी, तक्षकस्य सर्पस्य विलमिति। पदनिर्दिष्टविभक्त्या प्राप्तः समानाधिकरणसमासो निषिध्यते, तक्षकसर्पस्य विलमिति न भवति ॥ ननु तक्षकश्चासौ सर्पश्च इति कर्मधारये, पश्चाद्बिल-सम्बन्धयोगात् षष्ठ्या, भविष्यति तक्षकसर्पस्य विलमिति, तत् किं प्रतिषेधेन? इत्याह— विशेषणसमासस्तु नेति। बहुलग्रहणमिति "विशेषणं विशेष्येण बहुलम्" (७३६—२।१।५७) इति सूत्रे ग्रहणम् ॥ अन्यदपि फलमाह गोर्धेनोरिति। एवापि द्रव्यान्तरापेक्षा षष्ठी, गोर्धेनोर्घास इति। ननु किमिह "पोटायुवति—" (७४४—२।१।६५) इति कर्मधारयः षष्ठीसमासो वा प्राप्तः? षष्ठीसमास इत्याह। "षष्ठी" (७०२—२।२।८) इति परा प्राप्तिः "पोटायुवति—" इति पूर्वां प्राप्तिं बाधते। नैतावता "पोटायुवति—" इति निर्विषयं भवति। गोधेनुश्चरति गोधेनुश्चरति, गां धेनुं धारय गोधेनुं धारय इत्यादिषु सावकाशं सूत्रम्। एवं विभक्त्यन्तरे चरितार्थस्य नायमयुक्तः षष्ठीमात्रे बाधः। एवमिह गोर्धेनोर्घास इति प्राप्तः षष्ठीसमासः "पूरणगुण—" इति निषिध्यते ॥

७०६। क्तेन च पूजायाम् ॥२।२।१२॥

**दी—। "मतिबुद्धि—" (३०८९—३।२।१८८) इति सूत्रेण विहितो यः क्तः तदन्तेन षष्ठी न समस्यते। राज्ञां मतो बुद्धः पूजितो वा। 'राजपूजितः' इत्यादौ तु भूते क्तान्तेन सह तृतीयान्तस्य समासः।**

Words with the sixth case-ending are not compounded with क्तान्त words got from the rule "मतिबुद्धि—" (3089) Thus राज्ञाम् etc. राजपूजितः etc. have राजभिः in the तृतीया, compounded with पूजितः etc., with क्त in the past as usual.

मित—। 'न' इति वर्त्तते। 'पूजायाम्' इति क्तस्य विशेषणम्। पूजायां यः क्तः तेन इत्यर्थः। क्व च पूजायां क्तः? "मतिबुद्धि—" इति सूत्रे। 'पूजायाम्' इति तत्सूत्रोक्तानां सर्वेषामप्यर्थानामुपलक्षणम्। तदाह 'मतो बुद्धः पूजितो वा' इति। वर्त्तमाने क्तः। राज्ञामिति "क्तस्य च—" (६२५—२।३।६७) इति कर्त्तरि षष्ठी ॥ अयञ्च वर्त्तमाने क्तस्य अप्राप्ते विधिः, न हि प्राप्तस्य भूते क्तस्य प्रतिषेधः। "पूजितो

यः सुरासुरैः" इत्यादिषु मूलेऽपि प्रयुज्यते। तत्र अनुक्ते कर्त्तरि तृतीयैव "न लोक—" ( ६२७—२।३।६९ ) इति षष्ठ्याः प्रतिषेधात्। तेन तृतीयासमासे 'राजपूजितः' इत्याद्यपि भवति ॥

७०७। अधिकरणवाचिना च ॥२।२।१३॥

दी—। क्तेन षष्ठी न समस्यते। इदमेषामासितं गतं भुक्तं वा।

Words in the sixth case-ending are not compounded with words having क्त in the locative. Thus इदम् etc.

मित—। इत्तौ 'क्तेन' इत्यादिकं सूत्राक्षरैरन्वितम्। अधिकरणवाचिना क्तेन च षष्ठी न समस्यते इति ॥ आसितमित्यादिषु "क्तोऽधिकरणे—" ( ३०८७—३।४।७६ ) इति क्तः। ततः "अधिकरणवाचिनश्च" ( ६२६—२।३।६८ ) इति 'एषाम्' इत्यत्र षष्ठी ॥

७०८। कर्मणि च ॥२।२।१४॥

दी—। "उभयप्राप्तौ कर्मणि" (६२४—२।३।६६) इति या षष्ठी सा न समस्यते। आश्चर्यो गवां दोहोऽगोपेन।

Words in the sixth case-ending directed by "उभय—" (624) are not compounded with the corresponding कृदन्त word. Thus आश्चर्यः etc., where we cannot have the compound गोदोहः।

मित—। 'न' इत्यनुवर्त्तते 'षष्ठी' इति च। 'कर्मणि' इति तु षष्ठ्या न विशेषणं 'कर्मणि या षष्ठी सा' इति। तथा सति निष्ठितायाः अपि कर्मषष्ठ्याः समासनिषेध आपद्यते। "तृजकाभ्यां कर्त्तरि" ( ७०९ ) इति च निषेधः पुनः कर्त्तव्यो न भवति ॥ 'क्तेन' इत्यनुवर्त्त्य 'कर्मणि विहितो यः क्तः तेनापि सह षष्ठी न समस्यते' इत्यपि व्याख्यानमसङ्गतम्। सत्यस्मिन् "क्तेन च—" ( ७०६ ) इत्यनर्थकः प्रतिषेधः स्यात् ॥ तदिह सूत्रे चशब्द इति-शब्दस्यार्थे व्याख्येयः, निपातानामनेकार्थत्वात्। एवञ्च 'क्तेन' इति निवृत्तम् ॥ 'कर्मणि च' कर्मणि इति विहिता या षष्ठी सा न समस्यते। कुत्र सा 'कर्मणि' इति विहिता ? "उभयप्राप्तौ कर्मणि" इत्यत्र ॥

७०८ । तृजकाभ्यां कर्त्तरि ॥२।२।१५॥

टी— । कर्त्रर्थतृजकाभ्यां षष्ठ्या न समासः । अपां स्रष्टा । व्रजस्य भर्त्ता । ओदनस्य पाचकः । कर्त्तरि किम् ? इक्षूणां भक्षणमिक्षुभक्षिका । पत्यर्थभर्त्तृशब्दस्य याजकादित्वात् समासः—भूभर्त्ता । कथं तर्हि "घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः" इति ? शेषषष्ठ्याः समास इति कैयटः ।

Words having the sixth case-ending are not compounded with words ending in तृच् or अक in the कर्त्तृवाच्य । Thus अपाम् etc. Why say कर्त्तरि ? Witness इक्षुभक्षिका where भक्षिका has अक in the भाववाच्य and the compound is allowed. In compounds like भूभर्त्ता the word भर्तृ in the sense 'lord' 'master' etc., though with तृच्, is of the याजकादि class, and the समास is allowed (703). What about the compound त्रिभुवनविधातुः in the line "घटानाम्—" ? कैयट says त्रिभुवनस्य विधाता has शेषे not कर्मणि, hence the समास is not barred,

मित— । 'कर्त्रर्थ' इति 'कर्त्तृवाचि' इत्यर्थः । ननु तृच् कर्त्तर्य्येव, तत् कथं 'कर्त्तरि' इति स्फुटोक्तिः ? अकार्थं तत् । तस्य भावेऽपि भवति । 'कर्त्तरि' वाच्ये यौ 'तृजकौ' ताभ्यां कर्मषष्ठी न समस्यते ॥ व्रजस्य भर्त्ता इति व्रजस्य पोषक इत्यर्थः न तु व्रजस्य पतिरिति । पत्यर्थे इष्यते एव समास इत्यनुपदमेव वक्ष्यति 'याजकादित्वात् समासः' इति ॥ भक्षणं भक्षिका । धात्वर्थनिर्देशे ण्वुल् भावे । भुवो भर्त्ता पतिः भूभर्त्ता, "याजकादिभिश्च" ( ७०३—२।२।९ ) इति समासः ॥ अयं हि कर्मषष्ठ्याः समासनिषेधः । शेषषष्ठी तु समस्यते एव । तथा च भवभूतेः 'त्रिभुवनविधातुः' इति ॥

७१० । कर्त्तरि च ॥२।२।१६॥

टी— । कर्त्तरि षष्ठ्या अकेन न समासः । भवतः शायिका । नेह तृजनुवर्त्तते । तद्योगे कर्त्तुरभिहितत्वेन कर्त्तृषष्ठ्या अभावात् ।

Words having the sixth case-ending in the कर्त्ता are not compounded with words ending in अक। Thus भवतः etc.—It is your turn to sleep. तृच् does not come in here, because, being in the कर्त्तृवाच्य, it cannot give the sixth case-ending to the कर्त्ता।

मित—। 'कर्तरि' इति षष्ठ्या विशेषणम्। कर्त्तरि या षष्ठी तस्या इत्यर्थः। पूर्वसूत्रादक इति द्वन्द्वाङ्गमनुवर्त्तते न च तजित्यङ्गान्तरम्, असम्भवात्। तृच् कर्त्रर्थेव, तेन योगे कर्त्तरि षष्ठ्याः सुतरामभावः। 'अकेन' इति भावे विहितेन अकेन॥ शायिका शयनपर्य्यायः। "पर्य्यायार्ह—" ( ३२८८—३।३।१११ ) इति ण्वुच् भावे॥

७११। नित्यं क्रीडाजीविकयोः॥२।२।१७॥

टी—। एतयोरर्थयोरकेन नित्यं षष्ठी समस्यते। उद्दालकपुष्पभञ्जिका। क्रीडाविशेषस्य संज्ञा। "संज्ञायाम्" ( ३२८६—३।३।१०९ ) इति भावे ण्वुल्। जीविकायाम्—दन्तलेखकः। तत्र क्रीडायां विकल्पे, जीविकायां "तृजकाभ्यां कर्त्तरि" ( ७०८—२।२।१५ ) इति निषेधे प्राप्ते वचनम्।

A word with the sixth case-ending is compounded with one ending in the affix अक, the compounded being a संज्ञा of some sport or profession. The समास is obligatory ( नित्य )। Thus उद्दालक etc., which is the name of a kind of sport. The ण्वुल् is भावे by the rule "संज्ञायाम्" ( 3286 ). Again दन्त etc., is the designation of a dentist by profession. In the case of sport, the ण्वुल् ( अक ) is भावे, the समास was expected to be optional, this rule makes it obligatory. Implying a profession, the ण्वुल् ( अक ) is कर्त्तरि, and the prohibition "तृजकाभ्याम्—" ( 709 ) comes in, but is barred by this rule.

मित—। इतो निषेधाधिकारः॥ तृजन्तेन क्रीडाजीविकयोः संज्ञा नास्ति, तदाह अकेन इति 'एतयोरर्थयोः' इति क्रीडायां जीविकायाञ्च वाच्यायाम् इत्यर्थः। नित्य-

समासत्वादस्वपदविग्रहः । उद्दालको वृक्षविशेषः, श्लेष्मातक इति हरदत्तः । तस्य पुष्पाणि उद्दालकपुष्पाणि । तानि भज्यन्ते यस्यां क्रीडायामिति कर्मण्युपपदे ण्वुल् अधिकरणे, इति हरदत्तः । व्युत्पत्त्यन्तरं तु तत् व्याख्यानमात्रत्वेन उपस्थापितम् । इह भावे ल्युडन्तेन षष्ठ्याः समास इष्टः । भञ्जिका भञ्जनम् । उद्दालकपुष्पाणां भञ्जनम्, नित्यसमासः । बालानां क्रीडाविशेषस्य संज्ञामात्रमेतत् न हि तत्र तत्त्वतः पुष्पाणि भज्यन्ते । महाविभाषया भावे अकेन विकल्पः प्राप्तः, नित्यता विधीयते । कर्त्तरि अकेन निषिद्धः समासः ( ७०९ ), स चेह नित्यं विधीयते ॥

७१२ । पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ॥२।२।१॥

दी—। अवयविना सह पूर्वादयः समस्यन्ते, एकत्वसंख्याविशिष्टश्चेदवयवी । षष्ठीसमासापवादः । पूर्वं कायस्य पूर्वकायः । अपरकायः । 'एकदेशिना' किम् ? पूर्वं नाभेः कायस्य । 'एकाधिकरणे' किम् ? पूर्वश्छात्राणाम् ।

पूर्व, अपर, अधर, उत्तर, denoting parts, are compounded with the word denoting the whole in the sixth case-ending if the whole is a single object and not a collection of distinct objects. This bars षष्ठीसमास (702—2. 2. 8). Thus पूर्वकाय etc,. the fore part of the body. Here पूर्व refers to a part of the entire काय and the काय is a single object ; hence the समास । Similarly अपर etc. Why say 'एकदेशिना'—with the whole ? Witness पूर्वम् etc , where नाभि, not being the whole of which पूर्व is a part, we have no समास of पूर्व with नाभि ।

मित—। एकोदेश एकदेशः अवयवः । सः अस्ति अस्य इत्येकदेशी अवयवी । तेन । अधिक्रियन्ते अस्मिन् गुणादयो धर्मा इति अधिकरणं द्रव्यम् । एकमधिकरणमेकाधिकरणमेकद्रव्यम्, तस्मिन् सति, तदाह एकत्वसंख्याविशिष्ट इत्यादि । मतान्तरे—

'एकाधिकरणे' इति 'एकदेशिना' इत्यस्य विशेषणम्। तृतीयार्थे सप्तमी सौत्री। पूर्वस्य अपरस्य अधरस्य उत्तरस्य पूर्वापराधरोत्तरम्। इन्द्वैकत्वम्॥ पूर्वापराधरोत्तरम् एकदेश: एकदेशिना षष्ठ्यन्तेन सह समस्यते एकाधिकरणे सति इत्यन्वयः॥ पूर्वापरेति प्रथमान्तत्वादुपसर्जनम्। अत: समासे पूर्वादयः प्राक् पतन्ति षष्ठ्यन्तं परम्। तदाह 'षष्ठीसमासापवादः' इति॥ उदाहरणे पूर्वादीनां पूर्वभागादयः अर्थाः। दिग्योगलक्षणां पञ्चमीं बाधित्वा कायस्य इत्यवयवावयविसम्बन्धे षष्ठी "तस्य परमाम्रेडितम्" (८३—८।१।२) इति निर्देशात्॥ 'एकदेशिना' इत्यनुक्ते तु असति एकदेशिनि अवयवावयविसम्बन्धो नास्ति, तेन 'पूर्वं नाभे: कायस्य' इत्यत्र 'नाभेः' इति पञ्चम्येव। नाभेर्यत् पूर्वं तत् कायस्य इत्यर्थः। न हि नाभिरेकदेशिनी। पूर्वं नाभे: इति समासश्च न भवति॥ 'पूर्वञ्छात्राणाम्' इत्यत्र विशेषसन्निधानाभावान्न निर्धारणम्। अस्ति च अवयवावयविसम्बन्धः, ततः षष्ठी। अवयवी तु बहुत्वविशिष्टः, तेन न समासः॥

**टी—। सर्वोऽप्येकदेश: अह्ना समस्यते, "संख्याविसाय—" (२३८—६।३।११०) इति ज्ञापकात्। मध्याह्नः। सायाह्नः। केचित्तु—सर्व एकदेश: कालेन समस्यते न तु अह्नैव, ज्ञापकस्य सामान्यापेक्षत्वात्। तेन 'मध्यरात्र:' 'उपारता: पश्चिमरात्रगोचरात्' इत्यादि सिद्धम्—इत्याहुः।**

All its parts are compounded with अहन् as the whole, not merely the parts पूर्व &c. This is implied by the rule "संख्याविसाय—" (238). Thus मध्याह्नः etc. Others again contend that parts are compounded with time as the whole, not merely with अहन्, because the implication rests upon generalisation. Thus मध्यरात्र, पश्चिमरात्र etc.

मित—। सर्वोऽपि, न केवलं पूर्वादयः सूत्रोक्ता एकदेशा:। "संख्याविसाय—" इति सूत्रं 'सायाह्न'-शब्दस्य सिद्धतामाश्रित्य प्रवर्तते। कथं पुनरस्य सिद्धिः? साय इति षो अन्तकर्मणि इति दैवादिकस्य अधिकरणे घञि रूपम्। सोऽवसितेऽस्मिन्निति

सायः चरमो भागः। भागस्य भागवता अभेदविवक्षया सायश्च तदहश्च इति कर्मधारये सायाह्नः इति भवति न तु सायाह्न इति। अह्नः साय इति विग्रहे तु षष्ठीसमासे अह्नःसाय इति प्राप्नोति। एकदेशिसमासे एव सायाह्न् टच् इति स्थिते "अह्नोऽह्न एतेभ्यः" (७९०—५।४।८८) इति सायाह्नशब्दः सिध्यति। एवं कृत्वा ज्ञापकता भवति पूर्वादिव्यतिरिक्तोऽप्येकदेशः समस्यते इति। ततो मध्यमह्नः इति विग्रहे मध्याह्न इत्यपि साधु। ननु "संख्याविसाय—" इति सूत्रेण 'साय' इति एकदेशविशेषस्यैव समासो ज्ञाप्यते कथं पुनर्भगवान् विशेषमतिक्रम्य सामान्यत आह 'सर्वोऽप्येकदेश' इति? उच्यते—ज्ञापकमिह विशेषपरमपि सामान्यमपेक्षते इति॥ यद्येवमेकदेशे सामान्यापेक्षा, एकदेशिनि अपि किं सा न स्यात्? तदस्तु सामान्यापेक्षा एकदेशिनि अपि। तेन इदं भवति विज्ञापितम्—"सर्वोऽपि एकदेशः, न केवलं पूर्वादयः, सर्वेणापि कालेन एकदेशिना, न केवलमह्ना, समस्यते" इति। ततश्च मध्यं रात्रेः मध्यरात्रः, पश्चिमं शेषः रात्रेः पश्चिमरात्रः, इत्यादि सिध्यति। इह रात्र इति अच् समासान्तः (७८७—५।४।८७), पुंस्त्वम् (८१४—२।४।२९)॥

## ७१३। अर्द्धं नपुंसकम् ॥२।२।२॥

दो—। समांशवाची अर्द्धशब्दो नित्यं क्लीबे। स प्राग्वत्।

The word अर्द्ध meaning 'half' is always in the neuter. It is optionally compounded with the whole in the sixth case-ending. Now if we compound अर्द्धं पिप्पल्याः we expect अर्द्धपिप्पलिः because पिप्पली here is an उपसर्जन and becomes ह्रस्व by "गोस्त्रियोः—" (656—1. 2. 48) Hence—

मित—। "अर्द्धं समेऽशके" इत्यमरः। तदाह 'नित्यं क्लीबे' इति॥ प्राग्वदिति एकदेशिना समस्यते एकाधिकरणे सति इति लभ्यते। अर्द्धं पिप्पल्या इति वाक्ये अर्द्धं प्रधानं पिप्पलीत्यप्रधानमुपसर्जनम्। शास्त्रतश्च अर्द्धं पिप्पल्यास्तिष्ठति, अर्द्धं पिप्पल्या भुङ्क्ते, अर्द्धेन पिप्पल्यास्तृप्यति इत्यादिषु पिप्पलीशब्दे नित्यषष्ठीदर्शनात्

"एकविभक्ति—" ( ६५५—१।२।४४ ) इति तस्य उपसर्जनत्वमेव। ततः समासे "गोस्त्रियोः—" ( ६५६—१।२।४८ ) इति ह्रस्वत्वे अर्द्धपिप्पलिः इति प्राप्ते—

दो—। "एकविभक्तावषष्ठ्यन्तवचनम्" ( वार्त्तिक )। एकदेशिसमासविषयकोऽयमुपसर्जनसंज्ञानिषेधः। 'तेन पञ्चखट्वी' इत्यादि सिध्यति। अर्द्धं पिप्पल्या अर्द्ध-पिप्पली। क्लीबे किम्? ग्रामार्द्धः। द्रव्यैक्ये एव अर्द्धं पिप्पलीनाम्।

The sixth case-ending even though invariable, does not make an उपसर्जन। Thus the ई of पिप्पली is not shortened and the form is अर्द्धपिप्पली। This prohibition relates to the एकदेशिसमास only. Hence पञ्चानां खट्वानां समाहारः gives an optional form पञ्चखट्वी। Why speak of the neuter अर्द्ध? Witness ग्रामार्द्धः where we have the ordinary षष्ठीसमास with अर्द्ध, meaning a part only, in the masculine. All this is the case of a single object only. Thus there is no एकदेशिसमास in अर्द्धं पिप्पलीनाम् with पिप्पली in the plural.

मित—। एकविभक्तौ विषये यदुक्तं तत्र षष्ठ्यन्तस्य अवचनमनुक्तिः, अर्थमिति शेषः। यद्वा—तत्र अषष्ठ्यन्तस्य षष्ठ्यन्तवर्जितस्य वचनमिति मन्तव्यम्। एकविभक्तौ उपसर्जनसंज्ञा उक्ता, सा षष्ठ्यां विभक्तौ न भवतीत्यर्थः। तेनेह षष्ठ्यन्तपिप्पलीशब्दो नोपसर्जनम्। अतो न ह्रस्वः, 'अर्द्धपिप्पली' इति च रूपम्॥ भवतु, पञ्चानां खट्वानां समाहार इति वाक्ये द्विगौ, 'पञ्चखट्वा' इति प्रातिपदिके जाते, "आबन्तो वा" ( सू ८१२—वा ) इति वैकल्पिके स्त्रीत्वे, यदा नपुंसकं तदा "ह्रस्वो नपुंसके—" ( ३१८—१।२।४७ ) इति ह्रस्वत्वे पञ्चखट्वम्। स्त्रीत्वपक्षे 'खट्वानाम्' इति षष्ठ्यन्तत्वाद् उपसर्जनता नास्ति। तेन ह्रस्वो न, पञ्चखट्वा इत्येव रूपम्। "द्विगोः" ( ४७९—४।१।२१ ) इति ङीप् तु न, अदन्तस्यैव हि तत्, न तु आबन्तस्यापि। भाष्ये पुनः पञ्चखट्वीति दृश्यते। तदाह—अयं षष्ठ्यन्तस्य उपसर्जनसंज्ञानिषेध एकदेशिसमासे

एव प्रवर्त्तते नान्यत्र। तेन द्विगौ सिद्धा संज्ञा। उपसर्जनह्रस्वेन च पञ्चखट्व इति जाते अदन्तत्वात् ङीपि पञ्चखट्वीति भाष्यं सङ्गच्छते॥ ग्रामार्द्ध इति षष्ठीसमासः। ग्रामस्य भागमात्रं नार्द्धम्॥

७१४। द्वितीयतृतीयचतुर्थतुर्य्याण्यन्यतरस्याम् ॥२।२।३॥

**दो—। एतानि एकदेशिना सह प्राग्वत्। द्वितीयं भिक्षाया द्वितीयभिक्षा। 'एकदेशिना' किम्? द्वितीयं भिक्षाया भिक्षुकस्य। अन्यतरस्यांग्रहणसामर्थ्यात् "पूरणगुण—" (७०५—२।२।११) इति निषेधं बाधित्वा पक्षे षष्ठीसमासः। भिक्षाद्वितीयम्।**

The words द्वितीय, तृतीय, चतुर्थ, तुर्य्य are optionally compounded with an एकदेशिन् as before. Thus द्वितीयम् etc.—the second portion of the alms. Why say एकदेशिना? Witness द्वितीयम् etc.—The beggar's second half of his alms—where there is no समास। The word अन्यतरस्याम् in the rule makes the एकदेशिसमास optional with षष्ठीसमास। This implies that the prohibition "पूरणगुण—" (705) is barred in this case. Hence भिक्षा etc.—half of the alms.

मित—। एकदेशिना इत्यस्ति एकाधिकरणे इति च। भिक्षाया एकदेशित्वे द्वितीयमिति द्वितीयो भागः यथा पूर्वमिति पूर्वो भागः॥ प्रत्युदाहरणे भिक्षुकस्य भिक्षाया द्वितीयं द्वितीयो भागः इत्यन्वयः। तत्र द्वितीयं भिक्षुकस्य इति न एकदेशिसमासः। कुतः? भिक्षुकस्य इति शेषे षष्ठी। भिक्षाया यद्द्वितीयं तस्य स्वामी भिक्षुकः। एवम् अवयवावयविसम्बन्धाभावात् समासाभावः॥ अन्यतरस्यामिति विकल्पं बोधयति। कस्य विकल्पः? न हि वाक्यस्य, स च "विभाषा" (६६५—२।१।११) इति महाविभाषयैव सिद्धः। तत् षष्ठीसमासेन विकल्पः। द्वितीयं भिक्षाया द्वितीयभिक्षा भिक्षाद्वितीयं वा॥ ननु द्वयोः पूरणं द्वितीयमिति पूरणप्रत्ययान्ते न कथं षष्ठीसमासः? अन्यतरस्यांग्रहणसामर्थ्यात् "पूरणगुण—" (७०५—२।२।११) इति निषेधो नैव प्रवर्त्तते॥

७१५। प्राप्तापन्ने च द्वितीयया ॥२।२।४॥

दी—। पक्षे "द्वितीया श्रित—" (६८६—२।१।२४) इति समासः। प्राप्तो जीविकां प्राप्तजीविकः—जीविकाप्राप्तः। आपन्नजीविकः—जीविकापन्नः। इह सूत्रे 'द्वितीयया अ' इति छित्वा अकारोऽपि विधीयते, तेन जीविकां प्राप्ता स्त्री प्राप्तजीविका—आपन्नजीविका।

प्राप्त and आपन्न are optionally compounded with a द्वितीयान्त word, the alternative being a compound by "द्वितीया श्रित—" (686). Thus प्राप्तो जीविकाम् yields प्राप्तजीविकः by this rule and जीविकाप्राप्तः by 'द्वितीयाश्रित—'। Similarly आपन्न etc. Here द्वितीयया in the rule is a सन्धि of द्वितीयया and अ following. The अ thus obtained goes with प्राप्त and आपन्न, the sense being that प्राप्त and आपन्न will become अकारान्त when compounded by the rule. This makes no difference when प्राप्त and आपन्न are in the masculine; but in the feminine प्राप्तजीविका, the form expected, is replaced by प्राप्तजीविका etc.

मित—। इह एकदेशिसमासः। अन्यतरस्यामित्यस्ति। प्राप्तशब्दः आपन्नशब्दश्च द्वितीयान्तेन सह वा समस्यते इत्यर्थः। तेन "द्वितीया श्रित—"इत्यनेन विकल्पः। तदाह 'पक्षे—' इत्यादि। प्राप्तो जीविकामिति वाक्ये अनेन प्राप्तापन्नयोः प्रथमानिर्दिष्टयोः पूर्वनिपाते प्राप्तजीविका इति स्थिते "एकविभक्ति—" (६५५—१।२।४४) इति जीविकाशब्दस्य उपसर्जनत्वे "गोस्त्रियोः—" (६५६—१।२।४८) इति ह्रस्वः "द्विगुप्राप्त—" (सू ८११—वा) इति परवल्लिङ्गतापवादः। ततः प्राप्तशब्दाश्रयात् पुंस्त्वे प्राप्तजीविकः॥ "द्वितीयया अ' इति छेदे—'प्राप्तापन्ने द्वितीयया' अन्यतरस्यां समस्येते 'अ च' प्राप्तापन्नयोर्भवति इत्यन्वयः॥ ननु प्राप्तापन्ने अदन्ते एव, तत् किमनेन अकारेण क्रियते ? एतदर्थं स्त्रियामुदाहरति। जीविकां प्राप्ता इति वाक्ये प्राप्तजीविका इति स्थिते प्राप्तशब्दस्य अकारः—प्राप्तजीविका। उपसर्जनह्रस्वे प्राप्तजीविक। स्त्रियां

टापि प्रासजीविका ॥ 'प्राप्तापन्ने च च' इति छेदः, अप्रश्लिष्टत्वं सौत्रम्, इति तु भाष्याशय इति नागेशः ॥

७१६ । कालाः परिमाणिना ॥ २।२।५ ॥

दी—। परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते । मासो जातस्य मासजातः । द्व्यहजातः । द्वयोरह्नोः समाहारो द्व्यहः । द्व्यहो जातस्य इति विग्रहः ।

Words meaning time are compounded with what is measured in time. Thus मासजातः—born a month; द्व्यहजातः—born two days. In the latter case द्व्यह is first obtained as a समाहार द्विगु, and then द्व्यहो जातस्य is the वाक्य। विग्रहे is a mis-reading.

मित—। परिमाणं कालपरिमाणमस्यास्तीति परिमाणी । 'परिच्छेद्य' परिमेयम् ! 'कालाः' मासादयः परिमाणानि 'परिमाणिना' तेनैव कालेन यत् परिमितं तेन समस्यन्ते इत्यर्थः ॥ परिमाणपरिमाणिसम्बन्धे परिमाणिनि षष्ठी । षष्ठ्यन्तेन समासः । तदाह—मासो जातस्य इति । इह वाक्ये मासः प्रधानम्, समासे तु प्रधानं जात इति । एवं वृत्तिविग्रहयोर्भिन्नार्थत्वे गमकता नास्ति तथापि वचनबलात् समासः । केचित्तु 'मासो जातस्य यस्य सः' इति पठन्ति, अपपाठः सः । एतदुत्तरत्र स्फुटीभविष्यति ॥ द्व्यह इति "न संख्यादेः—" ( ७९३—५।४।८९ ) इति अह्नादेश-प्रतिषेधः । "रात्राह्नाहाः—" ( ८१४—२।४।२९ ) इति पुंस्त्वम् । 'द्वयोरह्नोः—' इत्यादि द्व्यहजातशब्दस्य विवरणम् । 'विग्रहः' इत्यस्य 'विग्रहे' इति अन्ये पठन्ति तदसमञ्जसम् । सप्तमी च उत्तरेण सम्बन्धं कथयति, तत्तु न सङ्गच्छते । उत्तरस्य हि बहूनां तत्पुरुषो विषयः । तत्र 'द्व्यहो जातस्य' इति द्विपदविग्रहो विरुद्ध एव । वस्तुतस्तु 'द्व्यहो जातस्य' इति 'द्व्यहजातः' इत्यस्यैव विग्रहः । एवं सति मन्ये पूर्वत्रापि 'मासो जातस्य' इत्येव विग्रहो दर्शितो दीक्षितेन लेखकैस्तु कैश्चित् 'यस्य सः' इति प्रक्षिप्तम् ॥

टी—। "उत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसंख्यानम्" (वार्त्तिक)। द्वे अह्नी जातस्य यस्य स (?) द्व्यह्नजातः। "अह्नोऽह्नः—" (७९०—५।४।८८) इति वक्ष्यमाणः अह्नादेशः। पूर्वत्र तु "न संख्यादेः समाहारे" (७९३—५।४।८९) इति निषेधः।

Special provision has to be made for a तत्पुरुष of more than one पद with a view to secure द्विगु compounds with an उत्तरपद meaning something measured by what is denoted by the द्विगु। Thus द्व्यह्नजातः—born two days. Here द्वे अह्नी जातस्य are compounded all at the same time, the whole being a तत्पुरुष and the first two members forming a द्विगु। अहन् becomes अह्न by ',अह्नोऽह्नः—' (790). In द्व्यहजातः there is no अह्न because of the prohibition "न संख्यादेः—" (793).

मित—। 'सुप्सुपा' इत्यत्र। तत्र एकत्वं विवक्षितमित्युक्तं प्राक्। ततः एकं सुबन्तमपरेण सुबन्तेन एकेनैव समस्यते इत्यर्थो लभ्यते। तथा सति 'द्वे अह्नी जातस्य' इति त्रिपदतत्पुरुषो दुर्लभः। तदाह—'परिमाणिना उत्तरपदेन सहैव युगपत्, परिमाणिवाचके उत्तरपदे सति' इत्यर्थः। पूर्वयोः पदयोः द्विगोः सिद्धये बहूनां पदानां 'तत्पुरुषस्य उपसंख्यानं' कर्तव्यम् इत्यर्थः॥ द्वे अह्नी जातस्य इति विग्रहे समुदायस्य तत्पुरुषसंज्ञा। आद्ययोश्च द्विगुसंज्ञा। द्विगुश्च तत्पुरुषभेदः। तेन द्वे अह्नी इत्यतः परं तदवयवः समासान्तश्च प्राप्नोति। तस्मिंश्च सति अह्नोऽह्नः—'इत्यह्नादेशे द्व्यह्नजातः। इहापि 'द्वे अह्नी जातस्य' इत्यतः परं 'यस्य सः' इति प्रचित्रमिवाभाति॥ द्व्यहजात इत्यत्र तु नहि त्रयाणां युगपत् समासः। पूर्वयोः समाहारात् परं तृतीयेन समासः। तेन "न संख्यादेः—इत्यह्नादेशनिषेधः॥

७१७। सप्तमी शौण्डैः॥ २।१।४०॥

टी—। सप्तम्यन्तं शौण्डादिभिः प्राग्वद्वा। अक्षेषु शौण्डः अक्षशौण्डः। अधिशब्दोऽत्र पठ्यते। "—अध्युत्तरपदात्—" (२०७१—५।४।७) इति खः। ईश्वराधीनः।

A word with the seventh case-ending is optionally compounded with words listed with शौण्ड leading. Thus अक्षशौण्ड etc. —adept at dice. The word अधि occurs in this list; hence ईश्वराधीनः—dependent upon God, or a master. In this example the तद्धित affix ख is compulsory by "—अष्यु त्तर—" ( 2079 ).

मित—। शौण्ड इति आसक्त उच्यते। शौण्डादिषु अधिशब्दः पठ्यते। तेन समासे 'ईश्वरे अधि' इत्यत्र नित्यं खप्रत्यये ईश्वराधीनः। "अधिरीश्वरे" (६४४—१।४।९७) इति कर्मप्रवचनीयता। "—यस्य चेश्वरवचनम्—" (६४५—२।३।९) इति कर्मप्रवचनीययोगे सप्तमी॥ 'शौण्डैः' इति बहुवचननिर्देशात् आकृतिगणोऽयम् इति कैयट—वर्द्धमानादयः।

७१८। सिद्धशुष्कपक्वबन्धैश्च ॥२।१।४१॥

टी—। एतैः सप्तम्यन्तं प्राग्वत्। साङ्काश्यसिद्धः। आतपशुष्कः। स्थालीपक्वः। चक्रबन्धः।

A word in the सप्तमी is compounded optionally with सिद्ध, शुष्क, पक्व, बन्ध। Thus साङ्काश्य etc.—Attained success in Samkasya etc.

मित—। सङ्काशेन केनचित् मुनिना निर्वर्त्तितं नगरं साङ्काश्यम्। चातुरर्थिको ण्यः (१२९२—४।२।८०)। तत्र सिद्धः तपसा लब्धसिद्धिः साङ्काश्यसिद्धः। एवमातपे शुष्क इत्यादि॥

७१९। ध्वाङ्क्षेण क्षेपे ॥२।१।४२॥

टी—। ध्वाङ्क्षवाचिना सह सप्तम्यन्तं समस्यते निन्दायाम्। तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः। तीर्थकाक इत्यर्थः।

A word in the सप्तमी is optionally compounded with words meaning a crow if censure is implied thereby. Thus तीर्थध्वाङ्क्ष, तीर्थकाक etc. which imply desultory habit and therefore censure,

मित—। ध्वाङ्क्षः काकः। अर्थग्रहणमेतत्, तदाह ध्वाङ्क्षवाचिना इति। क्षेपो निन्दा॥ विग्रहे 'इव' इति सादृश्यमुक्त्वा निन्दामाह न तु वाक्याङ्गं सत्। तीर्थे इतस्ततो बलिभक्षणार्थं धावन्ननवस्थितः काकः। एवं यो गुरुकुले चिरं न वसति सोऽपि सादृश्यात् तीर्थकाक इत्युच्यते। अनवस्थितता तत्र निन्दा॥

७२०। कृत्यैर्ऋणे ॥२।१।४३॥

दी—। सप्तम्यन्तं कृत्यप्रत्ययान्तैः सह प्राग्वदावश्यके। मासेदेयम् ऋणम्। ऋणग्रहणं नियोगोपलक्षणार्थम्। पूर्वाह्णे गेयं साम।

A word in the सप्तमी is compounded with a word ending in a कृत्य affix to imply the inevitable or unavoidable character of something. Thus मासेदेयम् to be paid back in a month. The rule has ऋण—debt; this stands for anything unavoidable like the repayment of a debt. Thus पूर्वाह्णेगेयम्—to be chanted in the morning.

मित—कृत्या यदादयः। तेषु च यत्प्रत्यय एव इह इष्यते। तदन्तविधिना यत्प्रत्ययान्ता गृह्यन्ते। तादृशानां शब्दानां बहुत्वात् बहुवचनम्॥ मासेदेयमिति "तत्पुरुषे कृति—" (८७२—६।३।१४) इति सप्तम्या अलुक्॥ ऋणमिति न केवलमृणमेव, अपि तु यत् यत् ऋणनिर्यातनमिव अवश्यकर्तव्यं तत् सर्वस्योपलक्षणम्। तदाह आवश्यके इति नियोगेति च। तेन सिद्धं पूर्वाह्णेगेयमिति॥

७२१। संज्ञायाम् ॥२।१।४४॥

दी—। सप्तम्यन्तं सुपा प्राग्वत् संज्ञायाम्। वाक्येन संज्ञानवगमान्नित्यसमासोऽयम्। अरण्येतिलकाः। वनेकशेरुकाः। "हलदन्तात् सप्तम्याः—" (८६३—६।३।८) इत्यलुक्।

A word in the सप्तमी is compounded with a syntactically connected सुबन्त word to imply a proper name. A वाक्य does

not give one the impression of a proper name, hence the समास here is obligatory. Thus वरणे तिलका: a kind of flower, etc. The सप्तमी is retained, not elided, by the rule "हलदन्तात्—" (966).

मित—। 'वाक्येन संज्ञा—' इत्यादि व्याख्यातं प्राक् (६७५)। वरणे तिलका इत्यादयः पुष्पभेदाः। संज्ञाशब्दा एते न हि योगार्थं नैव व्यभिचरन्ति। तेन वरणे एव जातानि पुष्पाणि इति न ॥

७२२। क्तेनाहोरात्रावयवाः ॥२।१।४५॥

टी—। अह्नो रात्रेश्च अवयवाः सप्तम्यन्ताः क्तान्तेन सह प्राग्वत्। पूर्वाह्णकृतम्। अपररात्रकृतम्। अवयवग्रहणं किम्? अह्नि दृष्टम्।

Words indicating stages of day or night and in the सप्तमी are optionally compounded with words ending in क्तप्रत्यय। Thus पूर्वाह्ण etc. Why say 'अवयव'? Witness अह्नि दृष्टम् uncompounded, अह्नि referring to the day in general not to any particular stage of it.

मित—। अहश्च रात्रिश्च अहोरात्रः। तस्य अवयवाः। पूर्वाह्ण इति अह्नः पूर्वार्द्धम् अवयव एव। अपररात्र इति रात्रेर्द्वितीयार्द्धम् अवयवः ॥

७२३। तत्र ॥२।१।४६॥

टी—। 'तत्र' इत्येतत् सप्तम्यन्तं क्तान्तेन सह प्राग्वत्। तत्रभुक्तम्।

The word तत्र, which is in the सप्तमी when implying an अधिकरण, is optionally compounded with a क्तान्त word. Thus तत्रभुक्तम्—the meal taken there.

मित—। 'तत्र' इति स्वार्थिकस्त्रल्। स्वार्थश्च सप्तम्यर्थः। अधिकरणे सप्तमी। सप्तम्यर्थेऽपि प्रत्यये पुनः सप्तमी तदाह सप्तम्यन्तमिति ॥ इदं हरदत्तादीनाम्। अन्ये तु स्वार्थिकेन सप्तम्यर्थस्य उक्तत्वात् न पुनः सप्तमी। सप्तम्यन्तमिति तु सप्तम्यन्तसदृशमित्यर्थः इति मन्यन्ते। भुक्तमिति भावे क्तः ॥

७२४। क्षेपे ॥२।१।४७॥

दी—। सप्तम्यन्तं क्तान्तेन प्राग्वन्निन्दायाम्। अवतप्तेनकुलस्थितं त एतत्।

A word in the सप्तमी is optionally compounded with a क्तान्त word to imply censure. Thus अवतप्तेनकुलस्थितम् etc.—This of yours is like the stand of a weasel at a heated spot.

मित—। नकुलेन स्थितं नकुलस्थितम्। भावे क्तः। अनुक्ते कर्तरि तृतीया। "कर्तृकरणे—" (६९४—२।१।३२) इति समासः॥ इह क्त इति कृत्। "कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्" इति परिभाषया 'नकुलस्थितम्' इति कर्तृकारकपूर्वोऽपि क्तप्रत्ययः 'क्तेन' इत्यनुवृत्त्या गृह्यते। अवतप्ते नकुलस्थितमिति विग्रहे "तत्पुरुषे कृति—" (९७२—६।३।१४) इत्यलुक्॥ ते एतदिति त एतत्। यथा तप्ते देशे नकुला न चिरं तिष्ठन्ति तथा त्वमपि कर्म आरभ्य एव ततो निवृत्तः। इत्यनवस्थितता एवात्र निन्दा॥

७२५। पात्रेसमितादयश्च ॥२।१।४८॥

दी—। एते निपात्यन्ते क्षेपे। पात्रेसमिताः। भोजनसमये एव सङ्गता न तु कार्य्ये। गेहेशूरः। गेहेनर्दी। आकृतिगणोऽयम्। चकारोऽवधारणार्थः। तेनैषां समासान्तरे घटकतया प्रवेशो न। परमाः पात्रेसमिताः।

Words, listed with पात्रेसमित leading, are irregularly formed सप्तमी compounds implying censure. Thus पात्रेसमिताः implies appearance when plates are laid *i. e.* at meals, and disappearance when it is time for work. Similarly गेहेशूरः गेहेनर्दी etc., are applied to an arm-chair hero. The list is not a closed one and is added to from usage. The च in the rule is emphatic—पात्रेसमित etc. only and not also compounds made up

with पात्रेसमित etc., as constituents. Thus परमाः पात्रेसमिताः must stand uncompounded.

मित—। क्षेपे इत्यनुवर्त्तते। पात्रे भोजनपात्रे एव समिताः सम्मिताः कार्य्यकाले अदृश्या इति निन्दा॥ एवं गेहे स्वगृहे एव शूरो नर्दनशीलो वा न तु रणे इति निन्दा॥ आकृत्या गण्यते संख्यायते इति आकृतिगणः। कर्मणि घञ्। प्रयोगे दर्शनेन एषां गणनिर्णयः न तु पाठादित्यर्थः॥ 'चकार—' इत्यादि व्याख्यातं प्राक् (६७१)। पात्रेसमित एव साधुः इत्यवधारणम्। समासान्तरे प्रविष्टः पात्रेसमितः न साधुरित्यर्थः तथा च कौस्तुभे: "चकारोऽनुक्तसमुच्चयार्थः समासान्तरे घटकतया प्रवेशो माभूत्"॥ सर्वत्र "तत्पुरुषे कृति—" (९७२—६।३।१४) इति सप्तम्या अलुक्। इहैव निपातनादलुगित्यन्ये॥

७२६। पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन॥ २।१।४९॥

दी—। "विशेषणं विशेष्येण—" (७३६—२।१।५७) इति सिद्धे पूर्वनिपातनियमार्थं सूत्रम्। एकशब्दस्य "दिक्संख्ये संज्ञायाम्" (७२७—२।१।५०) इति नियमबाधनार्थं च। पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः। एकनाथः। सर्वयाज्ञिकाः। जरन्नैयायिकाः। पुराण-मीमांसकाः। नव-पाठकाः। केवलवैयाकरणाः।

Words expressive of what is antecedent and the words एक, सर्व, जरत्, पुराण, नव, केवल, are compounded with collocative (समानाधिकरण) words. The compounds here intended are available by "विशेषणम्—" (736); the object of the rule is to restrict the lead in the compound to these particular words, and also in the case of एक, to remove the restriction introduced by "दिक्संख्ये—" (727). Thus स्नातानुलिप्तः—first bathed next anointed. Similarly एकनाथः—the sole master; सर्वयाज्ञिकाः—all sacrificers; जरत् etc.—old logicians; पुराण etc.—old ritualists; नव etc.—young reciters; केवल etc.—mere grammarians.

to the end of the section. Now, दिक् and संज्ञा are attributives, hence can be compounded by the rule "विशेषणं विशेष्येण—"(736—2. 1. 57), hence this rule has to be interpreted as restrictive, allowing the compound only when it is a संज्ञा। Thus पूर्वेषु etc.—East Isukamasami, सप्तर्षय:—The constellation Ursa Major; but no compounding in उत्तरा: etc.—the trees to the North, पञ्च etc.—five Brahmanas.

मित—। दिग्वाचका: संख्यावाचकाश्च शब्दा: संज्ञायामेव समानाधिकरणेन समस्यन्ते। "विशेषणं विशेष्येण—" (७३६) इति सिद्धे समासे नियमार्थोऽयमारम्भ:। विशेषणं यो दिग्वाचक: संख्यावाचकश्च शब्द: तस्य "विशेषणं विशेष्येण—" इति कर्मधारये कर्तव्ये संज्ञायामेव कर्तव्यो नान्यथा। कर्मधारये एवायं नियम: तेन पञ्चगु: इति बहुव्रीहौ, पञ्चगवमिति च द्विगौ सिध्यति॥ कथं "दक्षस्य कन्या भवपूर्वपत्नी" "तत्पूर्वभङ्गे वितथप्रयत्न:" "पूर्वजन्मधनुषा समागत:" इत्यादय: ? नैते दिक्षु प्रयोगा:। क्व तर्हि ? काले। "पूर्वपदात् संज्ञायामग:" (८५७—८।४।२), "तद्धितार्थोत्तरपद—" (७३८—२।१।५१), "अलुगुत्तरपदे" (९५८—६।३।१) इत्यादिषु च दृष्टे॥

### ७३८। तद्धितार्थोत्तरपदसमाहारे च ॥२।१।५१॥

**टी—। तद्धितार्थे विषये उत्तरपदे च परत: समाहारे च वाच्ये दिक्संख्ये प्राग्वद्वा। पूर्वस्यां शालायां भव: पौर्वशाल:। समासे कृते "दिक्पूर्वपदादसंज्ञायां ञ:" (१३२६—४।२।१०७) इति ञ:। आपरशाल:।**

If the object is to attach a तद्धित, or if there is an उत्तरपद following, or again if समाहार is indicated, words implying दिक् or संख्या may be optionally compounded with a collocative (समानाधिकरण) word. Thus पूर्वशाल etc.—born in the eastern

room—is the वाक्य of a तद्धित in the sense तत्र भवः। The rule "दिक्पूर्व—" (1328) directs ञ; but to attach it we want a प्रातिपदिक by compounding पूर्वस्यां शालायाम्। The समास may therefore be allowed. Hence पौर्वशालः। Similarly आपर etc.

मित—। तद्धितः अर्थः प्रयोजनं यस्मिन् तस्मिन् विषये, किञ्चयत् किञ्चिदुत्तरपदं परं यत्र तत्र, एवं समाहारो यदा वाच्यस्तदा च. दिक्संख्ये समानाधिकरणेन वा समस्येते इत्यर्थः। असंज्ञार्थमिदम्॥ तद्धितार्थमुदाहरति पूर्वस्यामित्यादि। के कर्तव्ये समासः। असति समासे प्रातिपदिकत्वाभावात् "ङ्याप्प्रातिपदिकात्" (१८३—४।१।१) इति विहितस्तद्धितो न स्यात्। सति समासे आदिवृद्धिः—पौर्वशालः॥ इत उत्तरम् 'आपरशालः' इत्यतः प्राक् मुद्रितेषु पुस्तकेषु "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इति वार्त्तिकं दृश्यते। उत्तरपदोदाहरणविषयकं तत्' इह तु "पुंवत् कर्मधा—" (७४६—६।३।४२) इत्यपि सिध्यति तदिदं वार्त्तिकमुपरिष्टाद्द्रष्टव्यम्॥

टी—। "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" (वार्त्तिक)। पूर्वा शाला प्रिया यस्येति त्रिपदे बहुव्रीहौ कृते प्रियाशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषः। तेन शालाशब्दे आकार उदात्तः—पूर्वशालाप्रियः। दिक्षु समाहारो नास्ति—अनभिधानात्। संख्यायास्तद्धितार्थे—षण्णां मातॄणामपत्यं षाण्मातुरः। पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ अवान्तरतत्पुरुषस्य विकल्पे प्राप्ते—

In any sort of a वृत्ति, a सर्वनाम will appear in the masculine form. Thus पूर्वा शाला etc. gives a बहुव्रीहि of the three words पूर्वा, शाला, प्रिया। Hence, this being a वृत्ति, the feminine form पूर्वा is replaced by the masculine पूर्व। Also with प्रिया as उत्तरपद the preceding two make a तत्पुरुष। The आ in शाला is therefore of a high pitch—पूर्वशालाप्रियः। दिग्वाचक words give no sense with a समाहार, hence no examples. As an

example of संख्या in तद्धितार्थ we have षष्णां &c, giving अण् in the sense तस्यापत्यम्। Hence compounding षण्मातृ + अण् = षाण्मातुरः where मातृ become मातु by "मातुरुत्संख्या—" (1118—4.1. 115) and र comes in by "उरण्—" (70—1. 1. 51). For an instance of उत्तरपद, if we compound पञ्च etc., into a बहुव्रीहि of the three पञ्च, गावः, धनम् then the तत्पुरुष, in पञ्च गावः being optional, we get, where there is no तत्पुरुष, the undesirable form पञ्च-गोधनः। Hence—

मित—। इह बहुव्रीहौ 'पूर्वा' इति पूर्वपदं 'शाला' इति मध्यपदं 'प्रिया' इति चोत्तरपदम्। पूर्वमध्ययोस्तत्पुरुषो बहुव्रीहिणा समकालमेव भवति, तेन शालाशब्दस्य उत्तरपदसंज्ञा न. नापि तस्मिन् परतः पूर्वाशब्दस्य पुंवद्भावः। "स्त्रियाः पुंवत्—" (८३१—६।३।३४) इत्यत्र हि 'उत्तरपदे' इत्यधिकारोऽस्ति। अत आह "सर्व-नाम्नो वृत्तिमात्रे—" इति॥ पूर्वमध्ययोस्तत्पुरुषे शालाशब्दस्य अन्त्य आकार उदात्तो भवति, असति तत्पुरुषे पूर्वपदप्रकृतिस्वरेण पूर्वशब्दस्य ऊकार उदात्तः स्यात्॥ 'द्विगु' इति विषयसप्तमी। द्विगु विषये समाहारो नास्ति न सम्भवति। अनेकस्य एकत्र करणं समाहारः। अनेकत्वञ्च द्व्यादिभिः सङ्ख्याशब्दैरेव प्रतीयते न दिक्शब्दैः। तदाह—अनभिधानादिति। एवंविधे दिक्शब्दः समाहारार्थे नाभिधत्ते इति भावः। तेन समाहार इह नोदाह्रियते॥ षाण्मातुर इति "मातुरुत्—" (१११८—४।१।११५) इत्युत्। "उरण्—" (७०—१।१।५१) इति रः॥ 'विकल्पे प्राप्ते' इति महाविभाषया विकल्पः प्राप्तः। तेन पक्षे तत्पुरुषाभावः स्यात्। तदा च पञ्चगोधन इत्यनिष्टमापद्येत। तदाह—

## टी—। "द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्" (वार्त्तिक)।

In a द्वन्द्व or a तत्पुरुष, with an उत्तरपद outside either, the समास is obligatory. Hence the तत्पुरुष is compulsory in पञ्च गावो धनं यस्य सः। We now look forward—

मित—। उत्तरपदे परे पूर्वमध्ययोः यो द्वन्द्वः यश्च तत्पुरुषः तस्य नित्यसमास-संज्ञा वक्तव्या। नित्यावेव तौ न वैकल्पिकौ। तेन पञ्च गावो धनमस्य इत्यत्र पञ्च-गाव इत्यंशे नित्ये तत्पुरुषे—

७२९। गोरतद्धितलुकि ॥५।४।९२॥

दी—। गोऽन्तात् तत्पुरुषात् टच् स्यात् समासान्तः। न तद्धितलुकि। पञ्चगवधनः। पञ्चानां गवां समाहारः—

A तत्पुरुष ending in गो will have टच् affixed to it as a part of the compound, but not if some तद्धित affix disappears from it. Thus attaching टच् after the तत्पुरुष portion पञ्चगो above, we get पञ्चगो+टच्+धन=पञ्चगवधनः। As an instance of समाहार let us take the statement of पञ्चानां गवां समाहारः--

मित—। पञ्चगो इत्यत उत्तरं टचि कृते पञ्चगव इति जातम्। ततश्च पञ्चगवधन इत्येकमेव रूपं न च पञ्चगोधन इत्यपि॥ द्वन्द्वपचे वाक् च दृषच्च प्रिया यस्य इति वाक्ये पूर्वमध्ययोः समाहारे "द्वन्द्वाच्चु—" (९२६—५।४।१०६) इति टचि वाग्दृषदप्रियः॥ समाहारस्य उदाहरणं प्रति पञ्चानां गवां समाहार इति स्थिते—

७३०। संख्यापूर्वो द्विगुः ॥२।१।५२॥

दी—। "तद्धितार्थ—" (७२८) इत्यत्रोक्तः संख्यापूर्वो द्विगुः स्यात्।

Compounds with numerals leading as directed by "तद्धितार्थ—" (728) are called द्विगु।

मित—। पूर्वसूत्रे दिग्वाचकस्य संख्यावाचकस्य च समास उक्तः। तत्र संख्या-वाचकस्य यः समासः स द्विगुसंज्ञः स्यात्। समाहार इत्यर्थनिर्देशः, न त्वयं समासस्य अवयवः। तेन 'पञ्चानां गवाम्' इत्येतावदेव समासशरीरम्। अस्य च द्विगुसंज्ञा। संज्ञायाः फलमाह—

७३१ । द्विगुरेकवचनम् ॥२।४।१॥

दी—। द्विग्वर्थः समाहारः एकवत् स्यात् । "स नपुंसकम्" (८२१—) इति नपुंसकत्वम् । पञ्चगवम् ।

The समाहार, which is one of the senses of द्विगु above, always indicates a single object. Hence 'पञ्चानां गवाम्' in the sense of समाहार gives पञ्चगव ( with टच् affixed ) as a single object. This is to be in the neuter by "स नपुंसकम्" ( 821 ) yielding पञ्चगवम्

मित—। द्विगोरिह त्रयोऽर्था निर्दिष्टाः—तद्धितार्थे, उत्तरपदे, समाहारे च स इति । तत्र समाहाररूपो योऽर्थः स एकवत् स्यात् ॥ अथ किमर्थमिदमेकवत्तावचनं यावता समाहृतानां बहूनामपि अवयवानामभेदविवक्षया समूहस्य एकत्वेन गृह्यमाणत्वात् सिद्धात्येव एकवत्ता । सत्यं सिध्यति । यदा पुनरवयवानां भेदो विवक्ष्यते तदा न सिद्ध्यति । तन्नियमार्थं सूत्रम्—तिरोहितावयवभेद एव समासो यथा स्यात् न तु पक्षे उद्भूतावयवभेदोऽपि । समाहारे एकाधिकव्यक्त्युपस्थितावपि समुदाय एकवत् स्यात् । तस्य समुदायस्य अवयवानां भेदविवक्षा न स्यादित्यर्थः । कुतोऽयमर्थो लभ्यते ? उच्यते—एकवचनमिति अन्वर्थः शब्दः पारिभाषिकम् । वक्तीति वचनं, बाहुलकात् कर्तरि ल्युट् । एकस्य एकद्रव्यस्य वचनम । द्विगुः एकवचनम् एकं द्रव्यं वक्ति । सामान्ये नपुंसकम् । "उच्यते वचनम् । एकस्यार्थस्यवचनम्" इति तु भाष्यम् । तत्र कैयटः—"कृत्यल्युटो बहुलमिति कर्मणि ल्युट्, एकस्यार्थस्येति वाच्यवाचकसम्बन्धे षष्ठी" इति । अयमवयवानां भेदविवक्षाभावो द्विगावेव न द्वन्द्वेऽपि । तेन द्वन्द्वे अवयवभेदस्य अविवक्षायां हंसकोकिलम्, विवक्षायां तु हंसकोकिलौ ॥ ननु समाहारस्य समूहार्थत्वात् पञ्चगवमित्यत्र "तस्य समूहः" १२४१—४।२।३७ इति तद्धितोत्पत्तिः कथं न भवति ? तद्धितार्थस्य समासेनैव उक्तत्वात् प्रत्ययो नोत्पद्यते ॥

७३२ । कुत्सितानि कुत्सनैः ॥२।१।५३॥

दी—। कुत्स्यमानानि कुत्सनैः सह प्राग्वत् । वैयाकरणखसूचिः । मीमांसकदुर्दुरूढः ।

A word, refering to one who is being deprecated, is compounded with the word attaching the deprecation. Thus वैया- etc.—A grammarian pointing at the sky; मीमांसक etc.—A ritualist addicted to vicious habits.

मित—। 'मतिबुद्धिपूजार्थेभ्यश्च' (३०८९) इत्यत्र चकारस्य अनुक्तसमुच्चयार्थत्वात् कुत्स अवक्षेपणे इति धातोर्वर्तमाने क्तः। कुत्सितानि कुत्स्यमानानि इत्यर्थः। कुत्स्यते एभिरिति कुत्सनानि, करणे ल्युट्॥ खमाकाशं सूचयति दर्शयति पश्यति वा खसूचिः, कर्त्तरि औनादिक इ-प्रत्ययः। वैयाकरणश्चासौ खसूचिश्च। यः प्रतिभाहीनो वैयाकरणः पृष्टः प्रश्नं विस्मारयितुमाकाशं वर्णयति—अहो निर्मलं गगनमिति—स एवमुच्यते। खसूचित्वमिह निन्दाप्रकारः वैयाकरणत्वं निन्दाविषयः॥ दुर्दुरूढ इति रूढिशब्दो दुष्कर्मनिरते वर्त्तते। अत्रापि मीमांसकत्वं निन्दाविषयः, दुर्दुरूढता निन्दाप्रकारः॥ इह यत् कुत्सितं तद्विशेष्यमेव, कुत्सनं तस्य विशेषणम्। एतयोः समासे "विशेषणं विशेष्येण—" (७३६—२।१।५७) इति कुत्सनस्य विशेषणस्य पूर्वनिपातः प्राप्तः, कुत्सितस्य विशेष्यस्य तु पूर्वनिपातार्थं सूत्रम्॥

७३३। पापाणके कुत्सितैः ॥२।१।५४॥

टी—। पूर्वसूत्रापवादः। पापनापितः। अणककुलालः।

The words पाप and अणक are compounded with what is being deprecated. This is an exception to the previous rule. Thus पाप etc.—a wicked barber. अणक etc.—A wicked potter.

मित—। पापमस्यास्तीति अर्शआद्यचि पापः पापीत्यर्थः। अणको गर्ह्यः। द्वावपि कुत्सनौ। एतौ कुत्सितैः सह समस्येते। पूर्वसूत्रेण कुत्सनस्य परनिपाते प्राप्ते पूर्वनिपातार्थं वचनम्॥

७३४। उपमानानि सामान्यवचनैः ॥२।१।५५॥

टी—। घन इव श्यामो घनश्यामः। इह 'पूर्वपदं तत्सदृशे लाक्षणिकम्' इति सूचयितुं लौकिकविग्रहे इवशब्दः प्रयुज्यते। पूर्वनिपातनियमार्थं सूत्रम्।

Words, referring to standards of comparison, are compounded with words expressing the basis of comparison. Thus घन इव etc., which is a compound of घन, the standard, and श्याम, the basis, of comparison. The इव in the वाक्य is not a constituent of the compound and is used only to show that the first member in such compounds is an attributive meaning 'like it' by transference of epithets. The rule is to restrict the lead to the standard.

मित—। उपमीयते तोल्यते स्वरूपरिज्ञानार्थमित्युपमानं प्रसिद्धं परिच्छायकम्। इह उपमानमिति लक्षणया उपमानसदृशे वर्त्तते। ततश्च उपमेयं विशेषयति॥ समानं साधारणम्। तदेव सामान्यं ष्यञ् स्वार्थे। साधारणता च एकाधिकद्रव्यनिष्ठा भवति। अत्र तु उपमानसंशब्दनात् उपमेयमिति द्वितीयं द्रव्यमाक्षिप्यते। उपमानोपमेययोर्यत् साधारणं, तदिह सामान्यम्। सामान्यमुक्तवन्त इति सामान्यवचनाः, ये पूर्वं सामान्यमुक्त्वा सम्प्रति सामान्यविशिष्टं द्रव्यमभिधति ते, यथा गुणवचनशब्दाः। एतेऽपि विशेषणशब्दा एव॥ घनश्यामशब्दे घनशब्दः श्यामशब्दश्च उपमेयस्य देवदत्तस्य विशेषणम्। वक्तृविवक्षया द्वयोर्विशेषणयोर्यस्य कस्यापि विशेष्यता, इतरस्य च विशेषणता जायते। सूत्रेणानेन तु नियमः क्रियते सामान्यवचनमेव विशेष्यम् उपमानवचनमेव विशेषणं, तेन च पूर्वनिपातो नियम्यते। एवं घनशब्दस्य पूर्वनिपाते सिद्धं घनश्याम इति॥ अथ कथमिवशब्दो वाक्ये प्रयुज्यते द्वयी च न दृश्यते? नायं समासावयवः शब्दः किन्तु घनशब्दो घनसदृशे प्रयुक्त इत्यस्य ज्ञापकमात्रम्। एतदेव कथ्यते 'पूर्वपद तत्सदृशे' इत्यादिना॥

७२५। उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ॥२।१।५६॥

दी—। उपमेयं व्याघ्रादिभिः सह प्राग्वत्, साधारणधर्मस्य अप्रयोगे इति। विशेष्यस्य पूर्वनिपातार्थं सूत्रम्। पुरुषव्याघ्रः। नृसोमः। व्याघ्रादिराकृतिगणः। सामान्याप्रयोगे किम्? पुरुषो व्याघ्र इव शूरः।

The subject of comparison is compounded with such standards as व्याघ्र सोम etc. if the basis of comparison is not mentioned. The rule is to give the lead to the विशेष्य in the compound. Thus पुरुष etc.—a tiger-like person, नृ etc.—a moon-like man. Words of the व्याघ्रादि class have to be gathered from usage. Why say सामान्य etc.—if the basis etc. ? Witness पुरुषो etc. where there is no समास because शूरः points out the सामान्य—basis.

मित—। उपमितं तोलितम् उपमेयमित्यर्थः। सामान्यं व्याख्यातं प्राक्। उपमितनिर्देशात् सामान्यशब्दोच्चारणाच्च व्याघ्रादय उपमानानि॥ पूर्वसूत्रे इव इहापि उपमानशब्दा व्याघ्रादयो लक्षणया तत्सदृशे वर्तन्ते, ततश्च उपमितस्य उपमेयस्य इत्यर्थः, विशेषणानि सम्पद्यन्ते। तदेव ज्ञापयितुं वाक्ये प्राग्वत् इवशब्दस्य प्रयोगः॥ पुरुषो व्याघ्रः, इव पुरुषव्याघ्रः; ना सोम इव नृसोमः। इत्येवमादिषु व्याघ्रः सोम इत्यादीनि विशेषणानि, पुरुषो विशेष्यम्। पुरुषश्चासौ व्याघ्रश्च इत्याद्यनवद्यं विग्रहवाक्यम्॥ 'विशेषणं—'' (७३६) इत्यनेन विशेषणस्य पूर्वनिपाते प्राप्ते अनेन विशेष्यस्य पूर्वनिपातो विधीयते। तत्र यदि विशेषणं व्याघ्रादिषु दृश्यते तदेव नान्यथा। केऽमी व्याघ्रादय इत्यपेक्षायामाह व्याघ्रादिः आकृत्या प्रयोगरूपेण गम्यते इत्याकृतिगणः। शिष्टप्रयोगादनुसर्तव्य इत्यर्थः॥ प्रत्युदाहरणे शूर इत्यनेन शौर्यं सामान्यमुक्तमतो न समासः॥

७३६। विशेषणं विशेष्येण बहुलम् ॥२।१।५७॥

टी—। भेदकं समानाधिकरणेन भेद्येन बहुलं प्राग्वत्। नीलमुत्पलं नीलोत्पलम्। बहुलग्रहणात् क्वचिन्नित्यम्—कृष्णसर्पः; क्वचिन्न—रामो जामदग्न्यः।

Differentiating epithets may be compounded with words denoting the differentiated, but there is no uniformity in this.

matter. Thus नीलोत्पलम् in which the compound is optional, कृष्णसर्पः where it is obligatory, रामो जामदग्न्यः in which it is not allowed at all.

मित—। विशिष्यते पृथक्क्रियते अनेन इति विशेषणं भेदकम्। यद्विशिष्यते तद्विशेष्यं भेद्यम्। नीलमिति भेदकं पीतोत्पलात् रक्तोत्पलाच्च उत्पलमिदं पृथक् करोति॥ बहुलमिति नानात्वबोधकम्। तदेव दर्शयति—नीलोत्पलमिति समासविकल्पः, कृष्णसर्पं इति नित्यः समासः, रामो जामदग्न्य इत्यसमास एव। "क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विकल्पः क्वचिदन्यदेव। विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥" 'समानाधिकरणेन' किम्? देवदत्तस्य गुरुः इत्यत्र नैतत् सूत्रं प्रवर्तते॥

७३७। पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च॥ २।१।५८॥

दी—। पूर्वनिपातनियमार्थमिदम्। पूर्ववैयाकरणः। अपराध्यापकः।

The words पूर्व, अपर, प्रथम, चरम, जघन्य, समान, मध्य, मध्यम, वीर may be compounded with collocative (समानाधिकरण) words. This is only to restrict the lead in the compound to these words. Thus पूर्व etc.—an older grammarian; अपर etc.—the other professor.

मित—। "विशेषणं विशेष्येण—" (७३६) इति सिद्धे समासे पूर्वादीनामेव विशेषणता, वैयाकरणादीनामेव विशेष्यता इति नियमार्थम्, ततः पूर्वनिपातनियमार्थं सूत्रम्। पूर्व इति नायं दिग्प्रयुक्तः शब्दः नाप्यपर इति॥

दी—। "अपरस्यार्द्धे पश्चभावो वक्तव्यः" (वार्त्तिक)। अपरश्चासावर्द्धश्च पश्चार्द्धः। कथम् 'एकवीर इति? "पूर्वकालैक

—" (७२६—२।१।५८) इति बाधित्वा परत्वादनेन समासे 'वीरैकः' इति हि स्यात्। बहुलग्रहणान्नविष्यति।

In compounding by this rule, अपर changes into पश्च when अर्द्ध follows. Thus पश्चार्द्ध, the lower half. How can you have एकवीरः? The rule पूर्वकालैक—" (726) does not apply; because एकः and वीरः being समानाधिकरण, the rule "पूर्वापर—", which comes later, over-rules "पूर्वकाल—" and gives the lead to वीरः, thus yielding वीरैकः। The fact is बहुलम् comes in here from the preceding rule and justifies the anomalous form एकवीरः।

मित—। प्रथमजन्म, चरमवयाः, जघन्यजनः, समानशब्दः मध्यदेशः मध्यम-पाण्डवः वीरपुरुषः इत्यादीन्यपि द्रष्टव्यमुदाहरणेषु॥ एको वीरः इति समासे तुल्यवल-विरोधः। "पूर्वकालैक—" (७२६) इत्येकशब्दस्य, अनेन च वीरशब्दस्य, पूर्वनिपातः प्राप्तः। इदं तु सर्वं विप्रतिषेधे परं दृश्यते। तदनेन पूर्वस्य बाधे वीरैक इति भवति। दृश्यते च "हृतः स राजन्यकमेकवीरः" इति प्रयोगः कालिदासस्य। तत् कोऽस्य समाधिः? आह च 'बहुलग्रहणान्नविष्यति' इति। पूर्वसूत्रात् बहुलमित्यनुवर्तते, तेन च सिद्धमेकवीर इति इत्याशयः॥

७२६। श्रेण्यादयः कृतादिभिः॥२।१।५९॥

टी—। "श्रेण्यादिषु च्व्यर्थवचनं कर्त्तव्यम्" (वार्त्तिक)। अश्रेणयः श्रेणयः कृताः श्रेणिकृताः।

Words listed with श्रेणि leading may be compounded with कृत etc. It should be noted than श्रेण्यादि words convey the sense of च्वि when compounded by the rule. Thus श्रेणिकृताः means that those that were previously unclassified have now been classed togetherand punished or rewarded collectively.

मित—। श्रेण्यादयः शब्दाः कृतादिभिः शब्दैः समस्यन्ते वा समानाधिकरणत्वे सति। एकेन शिल्पेन पण्येन वा ये जीवन्ति तेषां समूहः श्रेणिः। च्विप्रत्ययस्य योऽर्थः अभूततद्भावरूपः स इह वक्तव्यः। च्विप्रत्ययस्य अर्थे समासः इति फलितम्। समासेनैव च्व्यर्थस्य उक्तत्वात् न पुनश्च्विप्रत्ययः। तेन श्रेणीकृताः इति यत् बहुषु पुस्तकेषु दृश्यते अपपाठ एव सः। श्रेणिकरणमिह पृथक्स्थितानामपि दण्डनादिषु तुल्यफलभागित्वेन व्यवस्थापनम्॥

## ७२८। क्तेन नञ्विशिष्टेनानञ् ॥२।१।६०॥

**टी—। नञ्विशिष्टेन क्तान्तेन अनञ् क्तान्तं समस्यते। कृतञ्च तदकृतञ्च कृताकृतम्।**

A क्तान्त word may be compounded with itself having नञ् added and referring to the same object (collocative—समानाधिकरण)। Thus कृताकृतम्—done yet not done—referring to something that is only partly done.

मित—। अनञ् इति प्रथमान्तम्, तस्य पूर्वनिपातो नियम्यते। समासस्तु "विशेषणं—" (७२६) इति सिद्ध एव॥ नञा, नञा एव न तु अन्येनापि केनचित्, विशिष्टः अधिकः नञ् विशिष्टः। यस्मिन् नञ् मात्रमधिकं सर्वमन्यत् समानं सः। एतेन द्वयोरपि क्तान्तयोरेकैव प्रकृतिरिति लभ्यते। तथा च सिद्धञ्च तदभुक्तञ्च इत्यत्र सिद्धाभुक्तयोः समासे न नियमः, प्रकृतिभेदात्। तेन सिद्धाभुक्तम् अभुक्तसिद्धमिति द्वावपि भवतः॥ इह नञ् अन्यत्वबोधकाव्ययमात्रस्योपलक्षणम्। तेन कृतञ्च तदपकृतञ्च कृतापकृतमिति भवत्येव नियमः॥ ननु समानाधिकरणेन इत्यधिकृतमस्ति। कथञ्च कृताकृतयोः समानाधिकरणता? यदेव अंशतः कृतं तदेव अंशतः अकृतम्, इत्यवयवगता कृताकृतता समुदाये आरोप्यते, समानाधिकरणता च सिद्धा भवति॥

**टी—। "शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्" (वार्त्तिक)। शाकप्रियः पार्थिवः शाकपार्थिवः। देवब्राह्मणः।**

Words like शाकपार्थिव are derived by the elision of the last member of certain compounds. Thus शाकपार्थिवः comes from शाकप्रियः पार्थिवः—a king fond of vegetables. The compound शाकप्रिय is समानाधिकरण with पार्थिव and drops प्रिय which is its last member. Similarly देवपूजको ब्राह्मणः देवब्राह्मणः ।

मित—। शाकः प्रियो यस्य स शाकप्रियः। अस्य तु समानाधिकरणेन 'पार्थिवः' इत्यनेन समासे उत्तरपदस्य प्रियशब्दस्य लोपः॥ नित्योऽयं लोपः तेन शाकप्रियपार्थिवः, देवपूजकब्राह्मणः, इत्यादयो न भवन्ति इति नागेशः॥

**७४०। सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ॥२।१।६१॥**

**टी—। सद्वैद्यः। वक्ष्यमाणेन (८०७) महत आकारः—महावैयाकरणः। 'पूज्यमानैः' किम् ? उत्कृष्टो गौः, पङ्कादुद्धृत इत्यर्थः।**

The words सत्, महत्, परम्, उत्तम्, उत्कृष्ट, may be compounded with what is honoured by the epithets. Thus सद्वैद्य—a good physician ; महा etc.—a great grammarian, महत् becoming महा by a subsequent rule (807). Why say पूज्यमानैः ? Witness उत्कृष्टो गौः, which means, a cow extricated from mud, and, therefore, no praise is implied ; the two stand uncompounded.

मित—। सदादयः पूजावचनाः प्रशंसावचना इत्यर्थः। येषामेतैः पूजा गम्यते तैरेभिः समस्यन्ते समानाधिकरणत्वे सति। महान् वैयाकरणः इति विग्रहे "आन्महतः—" (८०७—६।३।४६) इत्यात्वे महावैयाकरणः। एवं परमवैष्णवः, उत्तमप्रभावः, उत्कृष्टवस्तु इत्यादि॥ "विशेषणं विशेष्येण—" (७३६) इति सिद्ध एव समासः। वचनं तु गुणक्रियाशब्दैरपि समासे सदादीनामेव पूर्वनिपातनियमार्थम् इति हरदत्तः॥ प्रत्युदाहरणे उत्कृष्टो गौः इत्यत्र उत्कृष्ट इति न पूजामाह किन्तु पङ्के सीदन् उद्धारम्। इह उत्कृष्टो गौः इति वाक्यमुक्तं पूजाभावप्रदर्शनार्थम्

हि समासाभावज्ञापनार्थम् । तथा च "महापापमित्यादौ पूजाभावेऽपि विशेषणसमासो बोध्यः" इति नागेशः, "पूजाभावेऽपि विशेषणं विशेष्येण इति समासः" इति शब्दकौस्तुभः पदमञ्जरी च। तदत्र समासे उत्कृष्टगवः, गवुत्कृष्टः गवोत्कृष्टः इति रूपाणि। यदि पूजा स्यात् उत्कृष्टगव इत्येकमेव रूपं स्यात्। गोत्वमुत्कृष्टतां व्यभिचरति, उत्कृष्टता च गोत्वमित्यस्ति उभयथा समासप्राप्तिः ॥

७४१। वृन्दारकनागकुञ्जरैः पूज्यमानम् ॥२।१।६२॥

टी—। गोवृन्दारकः। व्याघ्रादेराकृतिगणत्वादेव सिद्धे सामान्यप्रयोगार्थं वचनम्।

Words refering to what is honoured may be compounded with वृन्दारक, नाग and कुञ्जर implying honour. Thus गौ etc.—a fine cow. This समास is already available, because व्याघ्रादि is an open list to be filled in from usage. Hence the rule is to allow the mention of the basis of comparison.

मित—। वृन्दारकनागकुञ्जरशब्दा यदा पूजां गमयन्ति तदा यस्य पूजा गम्यते तत् एभिः समस्यते वा। तत्र वृन्दारकशब्दो देववाची, नागशब्दो गजवाची सर्पवाची च, कुञ्जरशब्दो हस्तिवाची। नह्येते स्वाभिधानेन पूजावचनाः उपमानत्वेन प्रयुक्तास्तु पूजां गमयन्ति। तत् गौर्वृन्दारक इव इति विग्रहः। तथा सति वृन्दारकशब्दस्य व्याघ्रादिषु पाठादेव "उपमितं व्याघ्रादिभिः—" (७३५—२।१।५६) इति सिद्धः समासः किमेतेन सूत्रेण? युक्तमेतत् यतो व्याघ्रादयः प्रयोगादनुसर्तव्या न हि सूत्रकारेण निःशेषात् पठिताः। एतत् प्रत्याह सामान्यप्रयोगार्था वचनमिति। "उपमितं—" इत्यत्र 'सामान्याप्रयोगे' इत्यस्ति। इह च सामान्यप्रयोगे अपि समासो विधीयते—गोकुञ्जरः स्थूलः ॥

७४२। कतरकतमौ जातिपरिप्रश्ने ॥२।१।६३॥

टी—। कतरकठः। कतमकालापः। "गोत्वञ्च चरणैः सह" इति जातित्वम्।

The words कतर and कतम may be compounded with one of whom enquiry relating to caste or class is made. Thus कतर etc.—which of you two is of the class Katha ? कतम etc.—Which of you belongs to the class Ka'la'pa ? कठ and कालाप are taken class by the Ka'rika' "गोत्रच—" ।

मित—। यस्य जातिगतः परिप्रश्नः कतरकतमशब्दाभ्यां आप्यते तेन सह तौ शब्दौ वा समस्यते ॥ भवतोः कतरः कठः इत्यर्थे भवतोः कतरकठः। भवतां कतमः कालापः इति भवतां कतमकालापः ॥ कठ इति ऋषिनाम। कठेन प्रोक्तः इति, णिनिः। तस्य "कठचरकाल्लुक्" ( १४८७—४।३।१०७ ) इति लुकि कठः वेदशाखा-विशेषः। चरणः शाखा इति पर्य्यायशब्दौ। कठं तदाख्यं चरणमधीते इत्यण्। तस्य "प्रोक्ताल्लुक्" (१२७४—४।२।६४) इति लुकि कठः कठशाखाध्येता। "गोत्रच चरणैः सह" इत्यत्र लक्षणया चरण इति चरणाध्येता गृह्यते। तस्य जातित्वे कठ इति जातिः ॥ एवं कलापी ऋषिः। तेन प्रोक्त इत्यपि टिलोपे कालापः शाखा चरण इत्यर्थः। कालापमधीते इति अण्लुकि कालापो जातिः। इह मुद्रितेषु पुस्तकेषु कतमकलाप इत्यपपाठः ॥ ननु जातिपरिप्रश्ने एव डतमच् विधीयते, तदनुक्तोऽप्येतस्मिन् जातिपरिप्रश्नो लभ्यते एव। तथाप्युच्यते ज्ञापनार्थम्—अन्यत्रापि डतमच् भवति, समासस्तु अस्मिन्नेवार्थे नान्यर्थे नान्यत्र इति। तेन कतमः पण्डितो भवतामित्यत्र समासो न भवति। एवञ्च नागेशो मन्यते ॥ यदा—भवतोः कतरः कठः, भवतां कतमः कालापः इत्यादिषु कतरः कतमः इत्येतौ भवतोः भवताम् इत्येताभ्यां सापेक्षौ। तेन असति सामर्थ्ये अप्राप्तः समासोऽनेन विधीयते। इत्थं वा द्रष्टव्यमिदमसामर्थ्यम्—भवतोः कतरः भवतां कतमः इत्यत्र भवतोः भवताम् इत्येतौ कतरः कतमः इत्येतयो-र्विशेषणम्। ततः "सविशेषणानां न वृत्तिः" इति भाष्यकृद्वचनादसमासः, ऋद्धस्य राजमातङ्ग इत्यादिषु यथा। देवदत्तस्य गुरुकुलम् इत्यादिषु तु स्फुटा गमकता ततः सविशेषणस्यापि वृत्तिः इति भाष्यम्। एवमप्राप्ते समासे विधिः ॥

७८३। किं क्षेपे ॥२।१।६४॥

दो—। कुत्सितो राजा किंराजा, यो न रक्षति ।

When किम् implies censure, it may be compounded with the object censured. Thus किंराजा—a bad king—as applied to one that neglects the protection of his people.

मित— । किमित्यव्ययमनव्ययञ्च । अव्ययं तु निन्दायामपि दृश्यते । निन्दितेन सह तत् वा समस्यते । कुत्सितो राजा इत्यर्थे किंराजा । "किमः क्षेपे" (६५५—५।४।७०) इति टच्प्रतिषेधः । प्रजानामरक्षणात् निन्दा ॥

७४४ ।　　पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणी-प्रवक्तृश्रोत्रियाध्यापकधूर्त्तैर्जातिः ॥ २।१।६५ ॥

A class-name may be compounded with the words पोटा, युवति, स्तोक, कतिपय, गृष्टि, धेनु, वशा, वेहत्, बष्कयणी, प्रवक्तृ, श्रोत्रिय, अध्यापक and धूर्त्त when these are collocative ( समानाधिकरण ) with it. Thus suppose our वाक्य is इभी चासौ पोटा च, we now look forward.

मित ।— जातिवाचक: शब्द: समानाधिकरणेन पोटाप्रभृतिना समस्यते । इभी चासौ पोटा च इति विग्रहे—

७४५ ।　तत्पुरुष: समानाधिकरण: कर्मधारय: ॥ १।२।४२ ॥

A तत्पुरुष in which the constituents refer to the same object ( collocative—समानाधिकरण ) is called a कर्मधारय । Hence इभी चासौ पोटा च is a कर्मधारय ; we now look further forward.

मित— । आधक्रियेते गुणकर्मणी अस्मिन्नित्यधिकरणं द्रव्यम्, पदार्थ: । समानम् एकम् अधिकरणं द्वयोरपि पदयो: अस्मिन् इति समानाधिकरण: । तादृशस्तत्पुरुष: कर्मधारयसंज्ञां लभते । तत्पुरुषसंज्ञां तु न जहाति । द्वयो: संज्ञयो: समावेश: । अतएव भिन्नप्रकरणे कृतमेतत् सूत्रम् । बाधयेदिष्ट: स्यात् इहैव तत्पुरुषाधिकारे

"समानाधिकरण: कर्मधारय:" इत्येतन्मात्रमुक्त्वा प्रयत्नलाघवं कुर्य्यात् ॥ प्रकृते एतावता इमौ चासौ पीठा च इत्यस्य कर्मधारयसंज्ञायाम्—

**७४६। पुंवत् कर्मधारयजातीयदेशीयेषु ॥६।३।४२॥**

**दी—। कर्मधारये जातीयदेशीययोश्च परतो भाषितपुंस्कात् पर ऊङभावो यस्मिंस्तथाभूतं पूर्वं पुंवत्। पूरणीप्रियादिषु अप्राप्त: पुंवद्भावो विधीयते। महानवमी। कृष्णचतुर्दशी। महाप्रिया।**

An attributive in the feminine, not ending in the affix ऊङ्, takes the corresponding masculine form when leading in a कर्मधारय and also when the affixes जातीयर् and देशीयर् follow. This enjoins the masculine form which was not available with an ordinal numeral or a word of the प्रियादि class following. Thus महा etc.—the great ninth phase of the moon, कृष्ण &c,—the dark fourteenth phase, महा &c.—a great favourite.

मित—। भाषित: प्रागुक्त: न तु भाष्यमाण: पुमान् येन स भाषितपुंस्क: शब्द:। य: शब्द: प्रथमं पुरुषमुक्त्वा सम्प्रति स्त्रियमाचष्टे स:। "स्त्रिया: पुंवत्—" (८३१—६।३।३४) इत्यत्र भाषितपुंस्कशब्दो व्याख्यास्यते। भाषितपुंस्क: शब्द: ऊङ्भिन्नस्त्रीप्रत्यययोगात् स्त्रियं चेद् वक्ति, तस्य पुंवद् रूपं स्यात् यदि स कर्मधारयस्य पूर्वपदं भवति, यदि वा स जातीयदेशीयराभ्यां प्रत्ययाभ्यां युज्यते इत्यर्थ:। "स्त्रिया: पुंवत्—" (८३१) इति सामान्यतो विहित: पुंवद्भाव: तत्रैव सूत्रे "अपूरणीप्रियादिषु" इति प्रतिषिद्ध:। कर्मधारये तु पूरणीप्रियादिष्वपि अनेन पुंवद्भावो भवति। तथा च महती नवमी इत्यत्र पुंवद्भावे "आन्महत:—" (८०७—६।३।४६) इत्यात्वे च महानवमी ॥

**दी—। तथा कोपधादे: प्रतिषिद्ध: पुंवद्भाव: कर्मधारयादौ प्रतिप्रसूयते। पाचकस्त्री। दत्तभार्य्या। पञ्चमभार्य्या। सुकेशभार्य्या। ब्राह्मणभार्य्या। एवं पाचकजातीया। पाचकदेशीया। इत्यादि।**

Besides, in a कर्मधारय, and when जातीयर् or देशीयर् follows, provision is here made for the masculine form prohibited by the five rules beginning with "न कोपधायाः" ( 838—6.3.37 ). Thus पाचकस्त्री ( कोपध ) ; दत्त &c. ( संज्ञा ) ; पञ्चम etc. ( पूरणी ) ; स्त्रौघ्न etc. ( वृद्धि ) ; सुकेश etc. ( स्वाङ्ग ) ; ब्राह्म etc. ( जाति ) ; पाचक etc. ( कोपध )—( like a cook, as good as a cook ).

मित—। सूत्रस्य प्रयोजनान्तरञ्च, "न कोपधायाः" (८३८) इत्यादि पञ्चसूत्रा प्रतिषिद्धस्य पुंवद्भावस्य कर्मधारयजातीयदेशीयेषु प्रतिप्रसवः। पाचिका स्त्री इति कर्मधारये "न कोपधायाः" ( ८३८ ) इति निषेधो निवर्त्तते। दत्तभार्या पञ्चमभार्या इति "संज्ञापूरण्योश्च" ( ८३९ ) इत्यस्य व्यावृत्तिः। स्त्रौघ्नीभार्या इतीह "वृद्धि-निमित्तस्य—" ( ८४० ) इति निषेधो बाध्यते। सुकेशभार्या इति "स्वाङ्गाच्चेतः" ( ८४१ ) इत्यस्य प्रतिप्रसवः। ब्राह्मणभार्या इति "जातेश्च" ( ८४२ ) इत्यस्य। पाचिकातुल्या इत्यर्थे "प्रकारवचने—" (२०२४—५।३।६९ ) इति पाचिकाशब्दात् जातीयर्प्रत्यये पुंवद्भावः। ईषदसमाप्ता पाचिका इत्यर्थे, "ईषदसमाप्तौ—" (२०२२—५।३।६७ ) इति देशीयर् पुंवद्भावश्च॥

दी—। इभपोटा—"पोटा स्त्रीपुंसलक्षणा"। इभयुवतिः। अग्निस्तोकः। उदश्वित्कतिपयम्। "गृष्टिः सकृत्प्रसूता"—गोगृष्टिः। "धेनुर्नवप्रसूतिका"—गोधेनुः। वशा वन्ध्या—गोवशा। वेहद्गर्भघातिनी—गोवेहत्। बष्कयणी तरुणवत्सा—गोबष्कयणी। कठप्रवक्ता। कठाध्यापकः। कठधूर्त्तः।

In the rule "पोटा—" (744), पोटा is one with both male and female characteristics. पोटा इभी gives इभपोटा with पुंवद्भाव and पूर्वनिपात of the class-name इभ। Similarly इभयुवतिः। स्तोकः अग्निः a small fire. कतिपयम् उदश्वित् a little thin curd etc. गृष्टि is well advanced towards maturity. etc.

मित—। इह पोटादयो विशेषणानि, जातिर्विशेष्यम्। "विशेषणम्—"( ७३६—२।१।५७) इति विशेष्यस्य परनिपाते प्राप्ते पूर्वनिपातार्थं वचनम्। स्त्री च पुमांश्च स्त्रीपुंसौ। "अचतुर—" ( ९४५—५।४।७७ ) इति निपातः। तौ लक्ष्येते सूच्येते अनया इति करणे ल्युटि स्त्रीपुंसलक्षणा, या स्तनादिभिः स्त्रीति श्मश्रुप्रभृतिभिश्च पुरुष इति प्रतीयते सा। पोटा इभी इति विग्रहे अनेन इभी इत्यस्य पूर्वनिपातः। "पुंवत्—" ( ७४६ ) इति पुंवद्भावः॥ उदश्वित् तक्रम्॥ तरुणी बाल्ययौवनयोरन्तरा वर्त्तमानः। अतरुणवत्सा इति पाठे तरुणी बालः॥ कठः प्राग्व्याख्यातः ( ७४२ )॥ कठधूर्त्त इत्येवमादिषु न हि कठत्वादिकं कुत्स्यते। तथा च "कुत्सितानि—" (७३२—२।१।५३ ) इत्यनेन न गतार्थता॥

७४७। प्रशंसावचनैश्च॥ २।१।६६॥

दी—। एतैः सह जातिः प्राग्वत्। गोमतल्लिका। गोमचर्चिका। गोप्रकाण्डम्। गवोद्घः। गोतल्लजः। प्रशस्ता गौरित्यर्थः। मतल्लिकादयो नियतलिङ्गा न तु विशेष्यनिघ्नाः। जातिः किम्? कुमारी मतल्लिका।

A class-name may be compounded with words implying appreciation and referring to the same object with it ( collocative—समानाधिकरण )। Thus गो etc.—a fine cow. मतल्लिका etc., retain their gender and do not adopt the gender of what they qualify. Why say जाति? Witness कुमारी etc., uncompounded.

मित—। जातिरिति विशेष्यं वर्त्तते, तस्य च पूर्वनिपातः। मतल्लिकादयः प्रशंसां गमयन्ति। के पुनस्ते? "मतल्लिकोद्घमित्याः स्युः प्रकाण्डस्तल्लजित्यपि। इत्सपाश्वतटाः पादपालीमचर्चिकादयः॥" एते नियतलिङ्गाः शब्दाः। ततो मतल्लिका चासौ गौश्च इति विग्रहे गोमतल्लिकेति तुल्यं धेन्वां वृषभे च। तथा प्रकाण्डं चासौ गौश्च गोप्रकाण्डमिति पुंसि स्त्रियाञ्च क्लीबमेव रूपम्॥

७४८। युवा खलतिपलितवलिनजरतीभिः॥ २।१।६७॥

दी—। पूर्वनिपातनियमार्थं सूत्रम्। लिङ्गविशिष्टपरि-

भाषया युवतिशब्दोऽपि समस्यते। युवा खलतिर्युवखलति:। युवति: खलती युवखलती। युवजरती। युवत्यामिव जरतीधर्मोपलम्भेन तद्रूपारोपात् सामानाधिकरण्यम्।

The word युवन् leads when compounded with खलति, पलित, वलिन, जरती। The object of the rule is to restrict the lead to युवन्। What is enjoined of a प्रातिपदिक is enjoined of it in all genders. Hence युवति in the feminine may also be compounded with the lead restricted to it. Thus युवा etc.—a bald-headed young man, युवति: etc.—a bald-headed young woman, with पुंवद्भाव of युवति (746). In युवजरती—young yet old—the same person having the characteristics of youth and age, such as darkness of the hair of youth, and wrinkles of age, etc., may be styled both young and old.

मित—। जातिरिति निवृत्तम्। युवा इति समानाधिकरणेन खलत्यादिशब्देन समस्यते॥ युवा इत्यस्य खलत्यादेश्च विशेष्यविशेषणभाव: अनियत:। वक्तृविवक्षया य: कश्चिदेषां विशेष्यं भवति अन्यो विशेषणम्। तदिह नियम: क्रियते—एभि: समासे युवा इति विशेषणं वा विशेष्यं वा पूर्वमेव निपतति न कदापि परम्॥ इह स्त्रियां जरतीशब्दो गृह्यते, समानाधिकरणेन इति च वर्त्तते। कथं नु युवा इत्यस्य जरती इत्यनेन समानाधिकरणता स्यात्? उच्यते—एतदर्थं युवन्शब्द: स्त्रियां नेय:। ज्ञाप्यते चानेन—सर्वत्र सूत्रे गृहीतानां प्रातिपदिकानां लिङ्गमनियतमिति। अस्ति च परिभाषा "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" इति॥ खलतिर्लुनकेश: पुरुष:। स्त्रियां ङीषि खलतीति। समासे युवतिशब्दस्य पुंवद्भावे युवखलती॥ एवं युवजरती। तथा युवपलित: युवपलिता इत्यादि॥ युवजरती इत्यर्थं युवतिशब्दे गृहीतेऽपि युवतीत्वजरतीत्वयो: समानाधिकरणता दुर्लभा इत्याह युवत्यामिव इत्यादि। युवतिरेव इयं, जरतीत्वन्तु आगन्तुको धर्म इत्यर्थ:। तथा सति जरती इति युवतिरित्यस्य

विशेषणम्, निर्बाधा च समानाधिकरणता। विशेषणस्य जरतीशब्दस्य तु पूर्वनिपाते प्राप्ते (७३६) अनेन विशेष्यस्य युवतिशब्दस्य पूर्वनिपातः। पुंवद्भावे युवजरती॥ किञ्च स्यात् यदि इह जरत्यां युवतिधर्मं उपलभ्य इत्येवं मन्यते? तदा युवतिरिति विशेषणं जरतीति विशेष्यं भवति। "विशेषणं—" (७३६) इति विशेषणस्य च युवतिशब्दस्य पूर्वनिपाते युवजरतीति प्राग्वदेव रूपम्। अन्तते जरतीधर्मो युवत्यां जरतीधर्मारोपे जरद्युवतिः, जरत्यां युवतिधर्मारोपे च युवजरतीति रूपद्वयं स्यात्॥

७४८। कृत्यतुल्याख्या अजात्या॥ २।१।६८॥

दो—। भोज्योष्णम्। तुल्यश्वेतः। सदृशश्वेतः। अजात्या किम्? भोज्य ओदनः। प्रतिषेधसामर्थ्यात् विशेषणसमासोऽपि न।

Words formed with कृत्य affixes, the word तुल्य and its synonyms, may be compounded with a collocative (समानाधिकरण) word but not if it is a class-name. Thus भोज्य etc.—hot food, तुल्य etc.—white like it. Why say अजात्या? Witness भोज्य ओदनः—food that has to be chewed and eaten—uncompounded, ओदन being a class-name. Here the prohibition bars also the समास by "विशेषणं—" (736).

मित—। कृत्यप्रत्ययान्ताः शब्दाः, तुल्यशब्दः तत्पर्यायशब्दाश्च, समानाधिकरणेन शब्देन समस्यन्ते जातिवाचिना तु न॥ उष्णं भोज्यमिति विग्रहे उष्णमिति विशेषणं भोज्यमिति विशेष्यम्। विशेष्यस्य पूर्वनिपातार्थं वचनम्। एवं श्वेत इति विशेष्यम्, तुल्य इति सदृश इति च विशेषणम्। तस्य च परनिपातः॥ ओदन इति जातिर्विशेष्यम्, भोज्यः चर्वणेन भक्ष्य इति विशेषणम्। 'अजात्या' इति विशेष्येण विशेषणस्य प्रतिषिद्धः समासः "विशेषणं—" (७३६) इतिसूत्रोपात्तसमासस्य प्रतिषेधे पर्यवस्यति, तदाह 'विशेषणसमासोऽपि न' इति॥

७५०। वर्णो वर्णेन॥ २।१।६९॥

दो—। समानाधिकरणेन सह प्राग्वत्। कृष्णसारङ्गः।

A word meaning some colour may be compounded with another collocative word also meaning some colour. Thus कृष्ण etc.—dark and spotted.

मित—। वर्ण इति वर्णविशेषवाची शब्दः। स तथाविधेन शब्दान्तरेण समानाधिकरणेन सह वा समस्यते॥ सारङ्गश्चित्रः बहुवर्ण इत्यर्थः। स हि कर्णयोः कृष्णो वा लोहितो वा इत्येकवर्णोऽपि सन् सारङ्गत्वं न जहाति, भवति च तदा कृष्णवर्णः सारङ्गः लोहितवर्णः सारंङ्ग इत्यादिस्तस्य व्यपदेशः। एवं कृष्णो लोहित इत्यादि विशेषणं सारङ्ग इति विशेष्यम्। समासस्तु "विशेषणं—" (७३६) इति न सिध्यति यावता कृष्णशब्दः कर्णयोर्वा चरणेषु वा पुच्छे वा वर्त्तमानः समुदायि मृगशरीरे वर्त्तमानेन सारङ्गशब्देन नैव समानाधिकरणः॥ इह तु अवयवे स्थिता कृष्णता समुदायि आरोप्यते, तेन च समानाधिकरणता लभ्यते। ततो "विशेषणं—" (७३६) इत्येव सिद्धः समासः, व्यर्थमिदं सूत्रम्॥ अथवा आरोपलब्धा समानाधिकरणता गौणी इति हृश्यतां, न मुख्या। तत् गौणेऽपि समानाधिकरणत्वे यथा वर्णस्य वर्णेन समासः स्यात् तदर्थं वचनम्॥

## ७५१। कडाराः कर्मधारये ॥२।२।३८॥

दो—। कडारादयः शब्दाः कर्मधारये वा पूर्वं प्रयोज्याः। कडारजैमिनिः। जैमिनिकडारः।

Words listed with कडार at the head are optionally given the lead in कर्मधारय compounds. Thus कडारो जैमिनिः—purple-headed Jaimani—gives कडार etc.

मित—। कडारः पिङ्गलः। विशेषणमेतत् जैमिनेः। "विशेषणं—" (७३६) इति नित्ये पूर्वनिपाते विकल्पो विधीयते॥ 'कडाराः' इति बहुवचनेन गणो लक्ष्यते। तदाह 'कडारादयः' इत्यादि॥

## ७५२। कुमारः श्रमणादिभिः ॥२।१।७०॥

दो—। कुमारी श्रमणा कुमारश्रमणा। इह गणे श्रमणा 'प्रव्रजिता' गर्भिणी इत्यादयः स्त्रीलिङ्गाः पठ्यन्ते। लिङ्गविशिष्टपरिभाषाया एतदेव ज्ञापकं बोध्यम्।

The word कुमार may be compounded with words of the श्रमणादि class that are collocative with it. Thus कुमारी etc., with पुंवद्भाव of कुमारी। Feminine words श्रमणा, प्रव्रजिता, गर्भिणी etc. are here found in this list. But कुमार in the masculine cannot be collocative with them. Hence कुमारः must include कुमारी also and the latter has to be compounded, not the former, with these words. Thus the inference that some such परिभाषा ae "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" exists.

मित—। कुमारशब्दः श्रमणादिगणे पठितेन समानाधिकरणेन शब्दान्तरेण वा समस्यते॥ श्रमणा भिक्षुः स्त्री। स्त्रीत्वात् कुमारः इति पुंलिङ्गेन समानाधिकरणता नास्ति। अतः कुमारीशब्दो गृह्यते। इयमेव प्रव्रजिता, गर्भिणी इत्यादिषु अपि इह पठितेषु शब्देषु गतिः॥ विशिष्टः अधिकः। लिङ्गविशिष्टस्य येन केनचित् लिङ्गेन, तद्बोधकप्रत्ययेन इत्यर्थः, अधिकस्य ग्रहणं प्रति "प्रातिपदिकग्रहणे—" (७४८ टीका) इति या परिभाषा प्रागुक्ता तस्याः ज्ञापकमेतदेव एतदपि इत्यर्थः। "युवा खलति—" (७४८) इत्यनेनाप्येतद्ज्ञाप्यते॥ पूर्वनिपातनियमार्थं सूत्रम्॥

## ७५३। चतुष्पादो गर्भिण्या ॥२।१।७१॥

**टी—। चतुष्पाज्जातिवाचिनो गर्भिणीशब्देन सह प्राग्वत्। गोगर्भिणी। "चतुष्पाज्जातिरिति वक्तव्यम्" (वार्त्तिक)। नेह—स्वस्तिमती गर्भिणी।**

Class-names of four-footed animals may be compounded with the word गर्भिणी। Thus गो &c. Note that class-names only are compounded, hence there is no समास in स्वस्तिमती गर्भिणी।

मित—। चत्वारः पादा एषां चतुष्पादः। "संख्यासु—" (८७९—५।४।१४०)

इति पादशब्दस्य लोपः समासान्तः। जातेरेव समासो न व्यक्तेः इति वार्त्तिकार्थः॥ प्रत्युदाहरणे स्वस्तिमतीति चतुष्पादपि न जातिः। तेनेदं गोविशेषस्य नाम, यथा नन्दिनीति। अतो न समासः॥ सर्वत्र गर्भिणी इति विशेषणम्। तस्य परनिपातार्थं सूत्रम्॥

७५४। मयूरव्यंसकादयश्च ॥२।१।७२॥

दो—। एते निपात्यन्ते। मयूरो व्यंसकः मयूरव्यंसकः। व्यंसको धूर्त्तः। उदक् च अवाक् च उच्चावचम्। निश्चितञ्च प्रचितञ्च निश्चप्रचम्। नास्ति किञ्चन यस्य सः अकिञ्चनः। नास्ति कुतो भयं यस्य सः अकुतोभयः। अन्यो राजा राजान्तरम्। चिदेव चिन्मात्रम्।

Compounds like मयूरव्यंसक are तत्पुरुष irregularly derived. Thus मयूर &c.—a decoy pea-fowl, व्यंसक meaning a cheat; उच्च &c.—high and low; निश्च &c.—collected and hoarded; अकिञ्चन:—Possessing nothing whatever; अकुतो etc.—Suspecting danger from no-where; राज etc.—Another king; चित् etc.—Consciousness in the abstract.

मित—। मयूरव्यंसकादयः अविच्छिन्नलक्षणास्तत्पुरुषा निपात्यन्ते। 'मयूरव्यंसक' इति इह निपातनाद्विशेषणस्य परनिपातः॥ उच्चावचमिति चार्थे तत्पुरुषः,उदक्शब्दस्य उच्चभावः, अवाक्शब्दस्य अवचभावश्च, इति त्रीणि निपातनफलानि॥ निश्चप्रचमिति निश्चितस्य निश्चभावः, प्रचितस्य प्रचभावः, चार्थे तत्पुरुषश्च, इति त्रीणि फलानि॥ अकिञ्चन इति नञ् किम् चन इति त्रिपदे तत्पुरुषः, अन्यपदार्थे तत्पुरुषश्च, इति द्वे फले निपातनस्य परनिपातः। अस्वपदविग्रहो नित्यतां बोधयति॥ चिन्मात्रमिति मात्रशब्दोऽवधारणे। चैतन्यसम्बन्धे अवधारणम्। विशेषणस्य परनिपातः॥ सूत्रे चकारोऽवधारणार्थः। मयूरव्यंसकादय एव, अन्यः समासो न भवति परममयूरव्यंसक इति। विस्तरस्तु "तिष्ठद्गु—"( ६७१—२।१।१७ ) इत्यत्र द्रष्टव्यः॥

दी—। "आख्यातमाख्यातेन क्रियासातत्ये" (गणसूत्र)। अश्नीत पिबत इत्येवं सततं यत्राभिधीयते सा अश्नीतपिबता। पचतभृज्जता। खादतमोदता।

One तिङन्त word is compounded with another तिङन्त word when ceaselessness of their action is implied and the compound means some thing different from the sense of the constituents. अश्नीतपिबता—Some thing in which the cry "Eat and drink" is incessantly uttered. Similarly पचतभृज्जता—A function at which "Boil and bake" is constantly shouted. खादतमोदता—A function at which "Eat and be merry" is repeatedly uttered.

मित—। आख्यातं तिङन्तं पदम्। तिङन्तस्य तिङन्तेन तत्पुरुषो निपात्यते अन्यपदार्थे, तिङन्तबोध्यक्रिययोः सातत्ये नैरन्तर्ये द्योत्ये॥ अश्नीतपिबता इति लोडन्तयोः समासः। अन्यपदार्थ इह 'क्रिया' काचित्। तस्याः स्त्रीत्वात् टापि अश्नीतपिबता। एवमुत्तरत्रापि। पचतमोदता इत्यत्र मोदध्वमिति वक्तव्ये निपातनात् मोदत इति। इह "एहीडादयोऽन्यपदार्थे" इत्यतः 'अन्यपदार्थे' इत्यनुवर्तते। तदेतत् "एहीड—" इत्यतः परं पाठ्यम्॥

दी—। "एहीडादयोऽन्यपदार्थे" (गणसूत्र)। एहि ईड इति यस्मिन् कर्मणि तत् एहीडम्। उद्धर कोष्ठात् उत्सृज देहि इति यस्यां क्रियायां उद्धरोत्सृजा। उद्धमविधमा। असातत्यार्थमिह पाठः।

एहीड &c. are compounded to mean some thing different from the meaning of the constituents. Thus एहीडम् is a function in which the phrase "come and sing in praise" is pronounced. Similarly एहिपचम्—A function in which "come and cook" is shouted. Similarly उद्धर &c.—A function at

which is shouted "Bring out from the room and distribute"; उद्धम etc.—A function at which is shouted "Exhale and inhale" or "Inflate and deflate." These are separately mentioned here because ceaselessness is not implied by them.

मित—। इहापि तिङन्तस्य तिङन्तेन तत्पुरुषो निपात्यते अन्यपदार्थे, सातत्यं तु नास्ति ॥ एहीडम् इति केचिदेहि ईड इति विग्रहन्ति, केचित्तु एहि ईडे इति। आद्ये ईड इति लोटि रूपं परस्मैपदं तु निपात्यते। द्वितीये ईडे इति लटि रूपं तस्य च इह निपातनादीडादेशः ॥ इह अन्यपदार्थे 'कर्म' इति न क्रिया' इति। तस्य च क्लीवत्वात् एहीडम् न एहीडा ॥ उद्धर इति लोटि रूपम् ऊर्ध्वमानय इत्यर्थः। भूगर्भस्थे कोष्टे भाण्डं निधीयते। तस्माद्द्रव्यादिकमादाय उत्सृज समागतेभ्यो देहि इति यस्यामुच्यते सा उद्धरोत्सृजा क्रिया ॥ उद्धम निश्वसिहि विधम प्रश्वसिहि—कर्मणि घटित्वा व्यायच्छस्व—इति यस्यामुच्यते इत्यादि ॥ गणे इदमेव प्रथमं पठितमन्यपदार्थे इत्यनुवर्त्तनार्थम्।

टी—। "जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारञ्चाभिदधाति" (गणसूत्र)। जहि इत्येतत् कर्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्ये समासेन चेत् कर्त्ता अभिधीयते। जहिजोडः। जहिस्तम्बः।

जहि is compounded with its कर्म if frequency is implied, and the compound refers to the speaker; there is, however, no uniformity in the matter. Thus जहिजोड़ः etc.—One who frequently shouts "sever connection." जहिस्तम्बः—One who often says "destroy the trunk."

मित—। 'अन्यपदार्थे' इति वर्त्तते। जहीति लोटि रूपम्। कर्मणा जहीत्यस्यैव कर्मणा। आभीक्ष्ण्यमिह असकृदुच्चारणं गमयति। कर्त्ता च कर्मसमेतजहिशब्दोच्चारणक्रियायाः कर्त्ता। अयमेव कर्त्ता इह अन्यपदार्थः। जुड बन्धने इत्यस्य घञि जोड़ः बन्धनम्। 'जहि जोड़' मुक्तबन्धनं कुरु इति यः असकृदाह स जहिजोड़ः। एवं जहिस्तम्बः ॥

७५५। ईषदकृता ॥२।२।७॥

दी—। ईषत्पिङ्गलः। "ईषद्गुणवचनेनेति वाच्यम्" (वार्त्तिक)। ईषद्रक्तम्।

The word ईषत् may be compounded with a collocative word not ending in कृत्। Thus ईषत् &c.—slightly brown. It should be said that ईषत् is compounded with a गुणवचन word. Thus ईषद्रक्तम्—slighlty pink—though रक्त has a कृत्।

मित—। पिङ्गल इत्यव्युत्पन्नं प्रातिपदिकम् ॥ समानाधिकरणेन इत्यस्ति। पिङ्गलतायास्तथा पिङ्गलतानिष्ठाया ईषत्तायाश्च भिन्नेऽप्यधिकरणे परम्परासम्बन्धेन एकमेव अधिकरणम् ॥ अथवा असमानाधिकरणे एव विधिः ॥ कथमीषद्रक्तमिति ? रक्तशब्दस्य कृदन्तः। एवमाद्यर्थं वार्त्तिककारः 'अकृता' इत्यपाकृत्य 'गुणवचनेन' इति पठति ॥

७५६। नञ् ॥२।२।६॥

दी—। नञ् सुपा सह समस्यते।

The privative particle नञ् may be compounded with any सुबन्त word having syntactical connection with it. Thus with the statement न ब्राह्मणः we compound and look forward.

मित—। समानाधिकरणेन इति निवृत्तम्। अयं नञ् निषेधार्थकः। "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः ॥ न ब्राह्मण इति विग्रहे—

७५७। नलोपो नञः ॥६।३।७३॥

दी—। नञो नस्य लोपः स्यादुत्तरपदे। न ब्राह्मणः अब्राह्मणः।

नञ् drops its न् before the last member of a compound.

Thus ञ् being an इत्, the final form is अ। Hence the compound अब्राह्मण:।

मित— । "अलुगुत्तरपदे" (९५८—६।३।१) इत्यत: 'उत्तरपदे' इत्यनुवर्त्तते। नलोपे सति अकारमात्रमवशिष्यते। ततश्च अब्राह्मण इति रूपम्। ब्राह्मणसदृश इत्यर्थ:। निषेधादेव सादृश्यमिह प्रतीयते। नायं गौः इति वचनं गोसदृशे गवये उपपद्यते न तु अत्यन्तमसदृशे लोष्ट्रे॥

## ७५८। तस्मान्नुडचि ॥६।३।७४॥

टी— । लुप्तनकारान्नञ उत्तरपदस्य अजादेर्नुडागम: स्यात्। अनश्व:। अर्थाभावे अव्ययीभावेन सह अयं विकल्पते, "रक्षोहागमलघ्वसन्देहा: प्रयोजनम्" इति "अद्रुतायामसंहितम्" इति च भाष्यवार्त्तिकप्रयोगात्। तेन 'अनुपलब्धि:' 'अविवाद:' 'अविघ्नम्' इत्यादि सिद्धम्।

After नञ् has dropped न, the final member of the compound, if beginning with a vowel, will have नुट् prefixed to it. Thus न अश्व gives अ अश्व: dropping न। Now अश्व: becomes नश्व: with नुट् prefixed. Hence अनश्व:। This समास alternates with अव्ययीभाव that implies privation, i. e., the absence of some thing, because such alternation is seen in both भाष्य and वार्त्तिक। Thus the भाष्य writes असन्देहा: with a तत्पुरुष in "रक्षोह—" and the वार्त्तिककार has both अद्रुता, a तत्पुरुष, and असंहितम्, an अव्ययीभाव in the same line in "अद्रुतायाम्—"—all in the sense अर्थाभाव। Hence अनुपलब्धि: etc. are justified.

मित— । 'उत्तरपदे' इत्यस्ति। 'अचि' इति तद्विशेषणम्। "यस्मिन् विधिस्तदादावल्ग्रहणे" इति अचि इत्यस्य अजादौ इत्यर्थ:। अजादौ उत्तरपदे अयं नुड्विधि:॥ ननु कस्यायं विधि:, पूर्वपदस्य उत्तरपदस्य वा? 'अचि' इति सप्तमीनिर्देशात् "तस्मिन्निति निर्दिष्टे पूर्वस्य" (४०—१।१।६६) इति पूर्वपदस्य नञः प्राप्नोति। 'तस्मात्'

इति पञ्चमीनिर्देशात् "तस्मादित्युत्तरस्य" (४१—१।१।६७) इति अजादेरुत्तरपदस्य प्राप्नोति। किमत्र कर्त्तव्यम् ? तस्मात्—" इति सूत्रं परत्वात् बलवत्तरम्। अत उत्तरस्य अयं विधिः। किञ्च "आदेः परस्य" (४४—१।१।५४) इति परस्य यो विधिः स परस्य य आदिवर्णस्तस्यैव भवति। एवमुत्तरपदस्य आदिरचो नुट् स्यात् इत्यर्थः सम्पद्यते॥ अत्रापि सन्देहः अयः 'स्थाने' आदेशो नुट्, उत 'प्राक्' वा 'परं' वा आगमः ? "आद्यन्तौ टकितौ" (३६—१।१।४५) इति टित् अयं नुट् अचः प्राक् आगमः। तेन न अश्वः इति विग्रहे नलोपे (७५७) अ अश्वः इति स्थिते नुडागमे अ नुअश्वः इति जाते अनश्व इति रूपम्। अकृते पराद्दित्वे अश्वन्न इति स्यात्॥ कथं तर्हि "अविघ्नमस्तु ते स्थेयाः पितेव धुरि पुत्रिणाम्" ? नञ्तत्पुरुषोऽयं परत्वादभावार्थे नञः अव्ययीभावं बाधेत। तेन अविघ्नः इति पुंसि स्यात्। समाधिमाह अव्ययीभावेन सह विकल्पते इति। विकल्पे प्रमाणम्—सन्देहस्य अभाव इत्यर्थे 'असन्देहः' इति पुंसि प्रयोगो भाष्ये, तथा तुलाया अभाव इत्यर्थे 'अतुला' इति स्त्रियां प्रयोगो वार्त्तिके, तथा च संहिताया अभाव इत्यर्थे 'असंहितम्' इति क्लीबे प्रयोगस्तत्रैव। आद्ययोस्तत्पुरुषः तृतीयोऽव्ययीभावः॥

**टी—। "नञो नलोपस्तिङि क्षेपे" (वार्त्तिक)। अपचसि त्वं जाल्म। 'नैकधा' इत्यादौ तु नशब्देन "सह सुपा" (६४८—२।१।४) इति समासः।**

If censure is implied, नञ् is compounded with a तिङन्त word and drops न। Thus अपचसि etc.—you cook badly etc. नैकधा etc. are compounds of न not नञ्, by the rule "सहसुपा" (649—2.1.4).

मित—। 'सुपा' इति वचनात् तिङन्तेन समासो न प्राप्नोति। तदनेन विधीयते। अपचसि कुत्सितं पचसि इत्यर्थः। न एकधा इति विग्रहे नायं नञ्, किन्तु अव्ययं तत्समानार्थको निरनुबन्धको नशब्द एवापरः। नञः समासे तु अनेकधा इत्येव भवति॥

**७५८। नभ्राण्नपान्नवेदा नासत्या नमुचिनकुलनखनपुंसक-नक्षत्रनक्रनाकेषु प्रकृत्या ॥६।३।७५॥**

दो—। पादिति शत्रन्तः। वेदा इत्यसुन्नन्तः। न सत्याः असत्याः। न असत्या नासत्याः। न मुञ्चतीति नमुचिः। न कुलमस्य। न खमस्य। न स्त्री पुमान्। स्त्रीपुंसयोः पुंसकभावो निपातनात्। न चरतीति नचत्रम्। चीयतेः चरतेर्वा त्रमिति निपात्यते। न क्रामतीति नक्रः। क्रमेर्डः। न अकमस्मिन्निति नाकः।

नञ् stands unaltered in नभ्राज्, नपात्, नवेदस् नासत्य, नमुचि, नकुल, नख, नपुंसक, नचत्र, नक्र, नाक। पात् ends in शतृ। वेदस् has असुन् affixed. नासत्य, not inimical to the good. नमुचि—does not relinquish. नकुल—without a pedigree. नख—not allowed in heaven. नचत्र—does not move ; त्र is irregularly derived from चि or चर। नक्र—does not stir ; the affix is ड after क्रम। नाक—having no room for sin.

मित—। भ्राजते इति क्विपि भ्राट्। न भ्राट् नभ्राट् नभ्राड् वा। "व्रश्चभ्रस्ज—" (२९४—८।२।३६) इति जकारस्य षकारः। तस्य "झलां जशोऽन्ते" (८४—८।२।३९) इति डकारः। तस्य च "वाऽवसाने" (२०६—८।४।५६) इति पचे टकारः॥ पातीति पात् शत्रन्तः। अन्ये तु क्विपि निपातनात् तुक् इत्याहुः॥ वेत्तीति वेदाः। औणादिकः असुन्। सत्सु साधवः सत्या। बहुवचनं वैचित्र्यार्थमिति नागेशः॥ चत्वारि एतानि पृथक्पदानि। सप्तम्यर्थे प्रथमा॥ मुञ्चतीति मुचिः। औणादिक इः॥ स्त्री च पुमांश्च स्त्रीपुंसौ। "अचतुर—" (९४५—५।४।७७) इति निपातः। न स्त्रीपुंसौ नपुंसकम्। स्त्रीपुंसशब्दस्य पुंसकभाव एकवचनत्वञ्च समुदायस्य निपात्यते॥ चियति चरति वा चत्रम्। अचि निपात्यते। ची इति दिवादिषु न पठितः। चीयते इति दीर्घपाठो दिवादीनामाकृतिगणत्वात्॥ अकं दुःखम्॥ नभ्राजि नपाति नवेदसि नासत्ये नमुच्यादिषु च सप्तसु नञ् प्रकृत्या स्वभावेन सह तिष्ठति नलोपादिविकारं न भजते इत्यर्थः। तेन नासत्यनाकयोर्न नुट्॥

७६० । नगोऽप्राणिष्वन्यतरस्याम् ॥६।३।७७॥

दी—। 'नग' इत्यत्र नञ् प्रकृत्या वा। नगाः—अगाः पर्वताः। 'अप्राणिषु' इति किम्? अगो वृषलः शीतेन।

नञ् optionally stands unchanged in नग when it does not refer to an animate being. Thus a mountain may be termed नग or अग। Why say अप्राणिषु? Witness अगः etc.—the servant has become stiff with cold—where न-लोप is compulsory, the reference being to the servant—an animate being.

मित—। न गच्छतीति नगः। गमेर्डः। सप्तम्यर्थे प्रथमा। तदाह 'नग इत्यत्र' इति अप्राणिषु इति विषयसप्तमी। 'नञ् प्रकृत्या' इत्यनुवर्त्तते। अप्राणिषु विषये यो नगशब्दः तस्मिन् नञ् प्रकृत्या वा इत्यर्थः॥

दी—। "नित्यं क्रीडा—" (७११—२।२।१७) इत्यतः 'नित्यम्' इत्यनुवर्त्तमाने—

The अनुवृत्ति of नित्यम् being obtained from the rule "नित्यं क्रीडा—", we look forward.

मित—। उपरसूत्रेषु "कुगति—" (७६१) इत्यादिषु 'नित्यम्' इति सम्बध्यते इत्यर्थः॥

७६१। कुगतिप्रादयः ॥२।२।१८॥

दी—। एते समर्थेन नित्यं समस्यन्ते। कुत्सितः पुरुषः कुपुरुषः। "गतिश्च" (२३—१।४।६०) इत्यनुवर्त्तमाने—

The indeclinable कु, words that are technically called गति, and the particle प्र etc., are always compounded with words syntactically related to them. Thus कुपुरुषः—one of disagreeable features. The designation गति attaches itself to the following—

मित—। गतिप्रादिसाहचर्य्यात् कु इत्यव्ययं गृह्यते कुत्सितार्थकम्। नित्यः समासः इत्यस्वपदविग्रहः। गतिसंज्ञा क्रियायोगे एव भवति। प्रादीनामपि तदानी-

मयं संज्ञा ॥ कुत्सितार्थः कुशब्दः, गतिसंज्ञकाः शब्दाः, अक्रियायुक्ताश्च प्रादयः नित्यं समर्थेन समस्यन्ते तत्पुरुषश्च समासो भवति ॥ इह "उपपदमतिङ्" (७८२—२।२।१९) इत्यतः 'अतिङ्' इत्यपकृष्य 'गति' इत्यनेन सम्बध्यते । तेन तिङन्तेन गतिर्न समस्यते प्रकरोति, ऊरीकरोति, खाट्करोति इत्यादयः असमस्ताः एव ॥ के पुनर्गतिसंज्ञका इत्याकाङ्क्षायामाह—

७६२ । ऊर्य्यादिच्विडाचश्च ॥१।४।६१॥

टी—। एते क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य । शुक्लीकृत्य । पटपटाकृत्य ।

Words listed with the indeclinable ऊरी leading and words ending in च्वि or डाच् are termed गति when they are connected with some क्रिया । Thus ऊरीकृत्य, having accepted, which is a componnd of ऊरी with कृत्वा ; शुक्लीकृत्य, having transformed into white, which is a compound of शुक्ल with च्वि added and कृत्वा ; पटपटाकृत्य, uttering a sound like पटत्, which is a compound of पटत् with डाच् added and कृत्वा ।

मित—। "उपसर्गाः क्रियायोगे" ( २२—१।४।५९ ) इत्यतः 'क्रियायोगे' इत्यनुवर्त्तते । ऊर्य्यादयः शब्दाः, च्विप्रत्ययान्ताश्च, तथा डाच्प्रत्ययान्ताः शब्दाः क्रियायोगे गतिसंज्ञका भवन्ति । ततः "कुगति—" (७६१—२।२।१८) इति क्रियाया नित्यं समस्यन्ते । ऊरी इत्यङ्गीकारे । अङ्गीकृत्य इत्यर्थे ऊरीशब्दस्य कृत्वाशब्देन समासः । "समासेऽनञ्पूर्वे—" ( ३३३२—७।१।३७ ) इति क्त्वा-प्रत्ययस्य ल्यबादेशः ॥ अशुक्लं शुक्लं सम्पद्यमानं कृत्वा इत्यर्थे "कृभ्वस्तियोगे—" ( २११७—५।४।५० ) इति कृत्वाशब्दयोगे शुक्लशब्दात् च्विप्रत्यये शुक्ल च्वि इति जाते, "अस्य च्वौ" ( २११८—७।४।३२ ) इति अकारस्य ईकारे च्विलोपे च शुक्ली इति रूपम् । तस्य कृत्वाशब्देन समासे क्त्वा प्रत्ययस्य प्राग्वत् ल्यबादेशः ॥ पटत्-सदृशं शब्दं कृत्वा इत्यत्र पटदिति अव्यक्तस्य शब्दविशेषस्यानुकरणम् । ततः पटत् कृत्वा इति स्थिते "अव्यक्तानुकरणात्—" ( २१२८—५।४।५७ ) इति डाच् । पटत् डाच् कृत्वा इति जाते ।

"डाचि बहुलं द्वे—" (८२—वा) इति द्वित्वे—पटत् पटत् डाच् कृत्वा। ततः "नित्य-माम्रेडिते—" (२११८—वा) इति पररूपे पटपटत् डाच् कृत्वा। डाचो डित्वात् टिलोपे पटपटा कृत्वा। "कुगति—" (७६१) इति समासे ल्यबादेशे पटपटाकृत्य॥ नैतत् परेषा "अनुकरणञ्च—" (७६२) इत्यादिना गतार्थम्। पटदित्यनुकरणं न तु पटपटेति, तेन पृथग्ग्रहणम्॥

टी—। "कारिकाशब्दस्योपसंख्यानम्" (वार्त्तिक)। कारिका क्रिया। कारिकाकृत्य।

The word कारिका has to be counted as a गति। कारिका means क्रिया work. Thus कारिका etc.—having finished the work.

मित—। कारिका-शब्दस्य गतिषु उपसंख्यानं परिगणनं कर्त्तव्यम्। कारिका इति भावे ण्वुल्, तदाह क्रिया इति। कारिकां कृत्वा इत्यर्थे कारिकाकृत्य कर्म समाप्य इत्यर्थः॥

७६२। अनुकरणञ्चानितिपरम् ॥१।४।६२॥

टी—। खाट्कृत्य। 'अनितिपरम्' किम्? "खाडिति कृत्वा निरष्ठीवत्"।

A word in imitation of an inarticulate sound is a गति in connection with a क्रिया if not followed by इति। Thus खाट्कृत्य uttering a sound like खाट्। Why say अनितिपरम्? Witness खाडिति कृत्वा।

मित—। इति परं यस्मात् इतिपरम्। न तथा अनितिपरम्। तादृशः अनुकरणशब्दः क्रियायोगे गतिसंज्ञः स्यात्। ततश्च तयैव क्रियया नित्यसमासः॥ खाट्शब्दो निष्ठीवनध्वनेरनुकरणम्। इति-शब्दे परे गतिसंज्ञा नास्ति, ततः धातोः प्रागेव प्रयोज्य इति नियमो न। तथा च 'खाडिति कृत्वा' 'कृत्वा खाडिति' यथेच्छं भवति॥

७६४ । आदरानादरयोः सदसती ॥१।४।६३॥

टी— । सत्कृत्य । असत्कृत्य ।

सत् and असत् are गति when respectively implying honour and dis-honour in connection with some क्रिया । Thus सत्कृत्य having honoured ; असत्कृत्य having dis-honoured.

मित— । सदित्यव्ययं क्रियायोगे गतिसंज्ञं यदा आदरे वर्त्तते, असदिति च यदा अनादरे ॥

७६५ । भूषणेऽलम् ॥१।४।६४॥

टी— । अलङ्कृत्य । 'भूषणे' किम् ? अलं कृत्वा ओदनं गतः, पर्य्याप्तमित्यर्थः । "अनुकरणम्—"(७६३) इत्यादि त्रिसूत्री स्वभावात् कृञ्विषया ।

अलम् is a गति in connection with a क्रिया when it implies decoration. Thus अलङ्कृत्य । Why भूषणे ? Witness अलं कृत्वा etc.— Left after having cooked enough food—where अलम् implies पर्य्याप्ति and therefore, not being a गति, is not compounded. The three rules beginning with "अनुकरणम्—" (763) naturally refer to the root कृ ।

मित— । भूषण-पर्य्याप्ति-सामर्थ्य-प्रतिषेधाः अलमर्थाः । तत्र भूषणे क्रियायोगे अलमिति गतिसंज्ञकं भवति । अलङ्कृत्य प्रसाध्य इत्यर्थः ॥ कृञ् विषयो यस्याः सा कृञ् विषया, गतिसंज्ञायां कृञेवानुप्रयोज्य इत्यर्थः । संज्ञाभावे अनभिधानमेव इति तु न । तथा च वृत्तिकारःप्रयुङ्क्ते अलं भुक्त्वा ओदनं गत इति ॥

७६६ । अन्तरपरिग्रहे ॥१।४।६५॥

टी— । अन्तर्हत्य । मध्ये हत्वा इत्यर्थः । 'अपरिग्रहे' किम् ? अन्तर्हत्वा गतः, हतं परिगृह्य गत इत्यर्थः ।

The indeclinable अन्तर् is a गति in connection with a क्रिया when there is no seizure implied. Thus अन्तर्हत्य—Having killed

in the middle of flight. Why अपरिग्रहे? Witness the absence of समास in अन्तर्हत्वा गतः which means—went away having killed and carried off in the middle of flight.

मित—। आच्छिद्य नयनं परिग्रहः। न परिग्रहः अपरिग्रहः। तस्मिन् द्योत्ये अन्तरशब्दो गतिसंज्ञकः स्यात् क्रियायोगे॥ अन्तर्मध्ये प्रयाणैकदेशे हत्वा प्राणैर्वियोज्य गतः अन्तर्हत्य गतः॥ यदा तु हत्वा इति प्राणैर्वियोज्य शवं च गृहीत्वा इत्यर्थः, तदा न गतिः॥ प्रयोगदर्शनादनुमेयः प्रयोक्तुराशयः—समासे अपरिग्रहः असमासे परिग्रह इति॥

## ७६७। कणेमनसी श्रद्धाप्रतीघाते ॥१।४।६५॥

दी—। कणेहत्य पयः पिबति। मनोहत्य। कणेशब्दः सप्तमीप्रतिरूपको निपातः अभिलाषातिशये वर्त्तते। मनः-शब्दोऽपि अत्रैव।

The indeclinables कणे and मनस् are गति in connection with a क्रिया when satiety is implied. Thus कणेहत्य etc.—drinks till satiety. कणे looks like a सप्तम्यन्त word; it is in fact an अव्यय meaning 'ardent desire.' मनस् too means the same.

मित—। कणे इत्यव्ययम्। साहचर्यात् मन इत्यपि अव्ययमेव। "मनयन: प्रेत्यमिथःशनैसः" इत्यव्ययगणे वर्त्तमानः॥ श्रद्धायाः पयःपानप्रीतेः प्रतीघातः निहननम् अपाकरणमित्यर्थः। अभिलाषातिशयं हत्वा इत्यर्थे कणेहत्य। पयःपानात् परमभिलाषनिवृत्तिः तथापि धात्वर्थे व्यादाय स्वपिति इतिवत् समाधेयम्। मनःशब्दोऽपि अत्रैव इति अव्ययेष्वेव अभिलाषातिशये एव इत्याशयः॥

## ७६८। पुरोऽव्ययम् ॥१।४।६७॥

दी—। पुरस्कृत्य।

The indeclinable पुरस् is a गति in connection with some क्रिया: Thus पुरस्कृत्य—Having placed in front.

मित—। अव्ययं यः पुरस्शब्दस्तस्य गतिसंज्ञा स्यात् क्रियायोगे॥ अव्ययं किम्?

नगरवाचिनः पुरशब्दस्य द्वितीयाया बहुवचने यत् पुरः इति रूपं तस्य संज्ञा मा भूत्। दानवानां पुरो दग्ध्वा भस्मसादकरोद्विभुः॥

७६८। अस्तञ्च ॥१।४।६८॥

टी—। अस्तमिति मान्तमव्ययं गतिसंज्ञं स्यात्। अस्तंगत्य।

The indeclinable अस्तम् is a गति in connection with some क्रिया। Thus अस्तंगत्य—Having dis-appeared.

मित—। अव्ययमिति वर्त्तते। अस्तमित्यनुपलब्धौ। अनव्ययस्य तु—शरवेगेण रिपुं दूरमस्तं कृत्वा जघान॥

७७०। अच्छ गत्यर्थवदेषु ॥१।४।६९॥

टी—। अव्ययमित्येव। अच्छगत्य। अच्छोद्य। अभिमुखं गत्वा उक्त्वा चेत्यर्थः। 'अव्ययं' किम्? जलमच्छं गच्छति।

The indeclinable अच्छ is a गति in connection with गत्यर्थ roots and the root वद्। Thus अच्छ etc.—Moving towards, अच्छो etc.—Shouting at. Why say अव्ययम्? Witness जलम् etc.—plunges into or makes for clear water.

मित—। अव्ययम् अच्छशब्दः अभिशब्दस्यार्थे वर्त्तते। अस्ति च अच्छशब्दो विशद-शब्दस्यार्थे अनव्ययम्। तस्य तु क्रियायोगेऽपि गतिसंज्ञा न भवति। जलमच्छमित्यत्र अच्छमित्यपि रूपम्। गतिसंज्ञायां निपातत्वे सुपो लुक् स्यात्॥

७७१। अदोऽनुपदेशे ॥१।४।७०॥

टी—। अदःकृत्य अदः कृतम्। परं प्रत्युपदेशे प्रत्युदाहरणम्—अदः कृत्वा अदः कुरु।

The pronoun अदस् is a गति in connection, with a verb but not when used in instructing another. Thus अदःकृत्य etc.—This was done by him after having done that. The rule does not apply

when another person is to be instructed ; thus अदः कृत्वा etc.—Do this after having done that.

मित—। अव्ययमिति नेह संबध्यते असम्भवात् । अदस्शब्दः क्रियायोगे गतिसंज्ञः स्यात् न चेत् परस्य अपूर्वबोधने प्रयुक्तः । मन्ये 'अदः कृत्य' इदं कर्म कृत्वा तेन 'अदः कृतम्' इदमन्यत् कृतम् इति स्वयमेव कश्चित् पर्य्यालोचयति । इह अदःकृत्य इति गतिसंज्ञायां नित्यसमासः ॥ परप्रबोधने न संज्ञा । तथाहि—त्वम् 'अदः कृत्वा अदः कुरु' प्रथममिदं कुरु पश्चात् एतत् ॥

७७२ । तिरोऽन्तर्द्धौ ॥१।४।७१॥

दी—। तिरोभूय ।

The indeclinable तिरस् is a गति in connection with some क्रिया when implying dis-appearance. Thus तिरोभूय ।

मित—। अन्तर्द्धिर्व्यवधानं नेत्रयोरगोचरता । तस्मिन्नर्थे वर्त्तमानं तिरस् इत्यव्ययं क्रियायोगे गतिसंज्ञं स्यात् । अन्तर्द्धौ किम् ? तिरो भूत्वा स्थितः, पार्श्वतो भूत्वा इत्यर्थः ॥

७७३ । विभाषा कृञि ॥१।४।७२॥

दी—। तिरस्कृत्य—तिरःकृत्य—तिरः कृत्वा ।

The गतिसंज्ञा of तिरस् is optional in connection with the root कृ । Thus, if तिरस् is a गति, we get स for विसर्ग optionally, resulting in तिरस्कृत्य and तिरःकृत्य if it is not a गति the only form is तिरः कृत्वा uncompounded.

मित—। पूर्वसूत्रमनुवर्त्तते । तिरस् इत्यव्ययमन्तर्द्धौ विभाषा गतिसंज्ञं स्यात् । कृधात्वर्थयोगे गतिसंज्ञायां "तिरसोऽन्यतरस्याम्" (१५८—८।३।४२) इति विसर्जनीयस्य वैकल्पिकः सः ॥

७७४ । उपाजेऽन्वाजे ॥ १।४।७३ ॥

दी—। एतौ कृञि वा गतिसंज्ञौ स्तः । उपाजेकृत्य—उपाजे कृत्वा । अन्वाजेकृत्य—अन्वाजे कृत्वा । दुर्बलस्य बलमाधाय इत्यर्थः ।

The indeclinables उपाजे and अन्वाजे are optionally गति in connection with the root कृ। Thus उपाजेकृत्य etc., which means—Having imparted strength to the weak.

मित—। उपाजे अन्वाजे इति विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य बलाधाने वर्त्तेते। विभाषा कृञि इत्यस्ति, तदाह एतौ इत्यादि॥

७७५। साक्षात्प्रभृतीनि च ॥१।४।७४॥

टी—। कृञि वा गतिसंज्ञानि स्युः। "च्व्यर्थे इति वाच्यम्" (वार्त्तिक)। साक्षात्कृत्य—साक्षात् कृत्वा। लवणंकृत्य—लवणं कृत्वा। मान्तत्वं निपातनात्।

Words, listed with the indeclinable साक्षात् leading, are optionally गति in connection with the root कृ the sense being that imparted by the affix च्वि। Thus साक्षात्कृत्य or साक्षात् कृत्वा—Having seen what was unseen; लवणंकृत्य etc.—Having salted what was not salted. The म in लवणंकृत्य does not disappear because in the साक्षात् प्रभृति list लवणम् उष्णम् etc. are listed with म attached.

मित—। विभाषा कृञि इत्यस्ति। तदाह कृञि वा इत्यादि। 'च्व्यर्थे' इतिसहैव अन्वयः—साक्षात्प्रभृतीनि च च्व्यर्थे कृञि वा गतिसंज्ञानि स्युः—इति। तेन साक्षात् कृत्वा, लवणं कृत्वा, इत्यादिष्वपि च्व्यर्थो लभ्यते॥ मान्तत्वं निपातनादिति इहैव गणे मकारान्तपाठसामर्थ्यात् समासेऽपि मकारो न लुप्यते इत्यर्थः॥

७७६। अनत्याधान उरसिमनसी ॥१।४।७५॥

टी—। उरसिकृत्य—उरसि कृत्वा, अभ्युपगम्य इत्यर्थः। मनसिकृत्य—मनसि कृत्वा, निश्चित्य इत्यर्थः। अत्याधानमुपश्लेषणम्, तत्र न। उरसि कृत्वा, पाणिं शेते।

The indeclinables उरसि and मनसि are optionally गति in

connection with the root कृ when no contact is implied. Thus उरसि etc. the sense being 'having accepted' ; मनसि etc. meaning 'having resolved.' The संज्ञा is not available with अत्याधान which is contact ; thus उरसि etc.—Sleeps with hand on his chest.

मित—। विभाषा कृञि इत्यस्ति। उरसिमनसी विभक्तिप्रतिरूपकौ निपातौ अनत्याधाने वर्त्तेते। प्रत्युदाहरणे तु अत्याधाने सप्तम्यन्तौ अनव्ययशब्दावेतौ न निपातौ।

७७७। मध्येपदेनिवचने च ॥१।४।७६॥

दी—। एते कृञि वा गतिसंज्ञाः स्युरनत्याधाने। मध्येकृत्य—मध्ये कृत्वा। पदेकृत्य—पदेकृत्वा। निवचनेकृत्य—निवचने कृत्वा, वाचं नियम्येत्यर्थः।

The indeclinables मध्ये and पदे and the word निवचन are गति optionally in connection with कृ when no contact is implied. Thus मध्ये etc.—having exposed the middle (?), पदे etc.—having raised the foot (?), निवचने etc.—having restrained speech.

मित—। विभाषा कृञि इत्यस्ति अनत्याधाने इति चानुवर्त्तते। मध्ये पदे विभक्तिप्रतिरूपकौ निपातौ मध्यपदशब्दयोरर्थे। निवचनमित्यव्ययीभावो वचनाभावार्थे। इहैव निपातनादेकारान्तता। मध्यं कृत्वा पदं कृत्वा निवचनं कृत्वा इति क्रमेणार्थः। नागेशस्तु "अनत्याधाने इति चानुवर्त्तते तत्र चैषामिदन्न निपात्यते। सप्तमी तु न" इत्याह। अत्याधाने सप्तम्येव हस्तिनः पदे कृत्वा शिरः शेते इति।

७७८। नित्यं हस्तेपाणावुपयमने ॥१।४।७७॥

दी—। कृञि। उपयमनं विवाहः। स्वीकारमात्रमित्यन्ये। हस्तेकृत्य। पाणौकृत्य।

The indeclinables हस्ते and पाणौ are गति optionally in connection with कृ when marriage or, according to others, mere

acceptance is implied. Thus हस्ते etc., having taken by the hand.

मित—। अनत्याधाने इति निवृत्तम्, कृञि इत्यस्ति। हस्ते पाणौ विभक्तिप्रतिरूपकौ निपातौ हस्तपाणिशब्दयोरर्थे। एतौ कृञि नित्यं गतिसंज्ञौ स्तः। नागेशस्तु हस्तपाणिशब्दयोः सप्तम्यन्तयोः "तत्पुरुषे कृति—" (९७२—६।३।१४) इत्यलुकमाह ॥

## ७७९। प्राध्वं बन्धने ॥१।४।७८॥

दी—। प्राध्वमित्यव्ययम्। प्राध्वं कृत्य। बन्धनेनानुकूल्यं कृत्वेत्यर्थः। प्रार्थनादिना तु आनुकूल्यकरणे—प्राध्वं कृत्वा।

The indeclinable प्राध्वम् is a गति in connection with कृ when restraint is implied. Thus प्राध्वंकृत्य implies that force has been applied in winning over or securing co-operation. Witness प्राध्वं कृत्वा when one is won over with entreaties.

मित—। कृञि इत्यस्ति नित्यमित्यनुवर्तते। प्राध्वमिति मान्तमव्ययमानुकूल्ये वर्तते। तथानुकूल्यं यदा बन्धनमयं प्रदर्श्य लभ्यते तदा प्राध्वमिति नित्यं गतिसंज्ञकं भवति कृञि। इह लिपिकरप्रमाददुष्टः शब्देन्दुशेखरः पठति "इदं मान्तमव्ययं बन्धनेनानुकूल्ये वर्तते" इति। तदसत्। आनुकूल्यमात्रमेवार्थः। बन्धनेनानुकूल्ये तु 'बन्धने' इति व्यर्थं स्यात् सूत्रम्। "अव्ययमानुकूल्ये वर्तते" इति काशिका शब्दकौस्तुभश्च। तथाच बन्धनाभावेऽपि कालिदासस्य "समाजने मे भुजमूर्ध्वबाहुः सव्येतर प्राध्वमितः प्रयुङ्क्ते" इति ॥

## ७८०। जीविकोपनिषदावौपम्ये ॥१।४।७९॥

दी—। जीविकामिव कृत्वा जीविकाकृत्य। उपनिषदमिव कृत्वा उपनिषत्कृत्य। 'औपम्ये' किम्? जीविकां कृत्वा।

The words जीविका and उपनिषद् are गति in connection with कृ if comparison is implied. Thus जीविकाकृत्य—treating as livelihood, उपनिषत्कृत्य—treating like an Upanishad. Why say

औपम्य—implying comparison. Witness जीविकां कृत्वा—making a livelihood of it—which makes it actually the livelihood not merely like livelihood.

मित—। कृञि इत्यस्मि। जीवयतीति जीविका जीवनोपायः। ण्वुल् कर्त्तरि। उपनिषत् वेदान्तविद्या। औपम्यमुपमाया भावः। औपम्ये विषये जीविकाशब्दः उपनिषच्छब्दश्च कृञि नित्यं गतिसंज्ञः स्यात्। जीविका नाम सर्वप्राणिनानुष्ठियते। तत् जीविकाकृत्य इत्यस्य अत्यन्ततो निषेव्य इत्यर्थः॥ उपनिषच्च रहसि आख्यायते। तेन उपनिषत्कृत्य इत्यस्य सुगुप्तं कृत्वा इत्यर्थः॥ तावर्थ्ये तावर्थ्यौ। औपम्यात्प्रभ्यते॥ प्रत्युदाहरणे जीविकां कृत्वा इति तत्तत्कथनम्॥ एवं "कुगति—" (७६१—२।२।१८) इत्यतस्य गतिसमासं निरूप्य प्रादिसमासं व्याचष्टे—

**दी—। प्रादिग्रहणमगत्यर्थम्। सुपुरुषः। अत्र वार्त्तिकानि—**

The rule "कुगति—" (761) mention प्रादि separately to provide for cases in which प्र etc. are not गति। Thus सुपुरुषः a fine-looking person. Here are the following Varttikas—

मित—। "कुगति—" (७६१—२।२।१८) इत्यत्र गतिग्रहणेन प्रादयोऽपि गृहीताः, अनर्थकं तेषां पृथग्ग्रहणात् इति मा विभ्राक्षि। क्रियायोगे एव प्रादयो गतिसंज्ञका भवन्ति गतिग्रहणेन च गृह्यन्ते नान्यथा। क्रियायोगभावेऽपि यथा तेषां समासः स्यात् तदर्थमुच्यते 'प्रादयः' इति। शोभनः पुरुषः इत्यर्थे सुपुरुषः इति नित्यः समासः। प्रादितत्पुरुष इत्यस्य समासस्य नाम॥

**दी—। "प्रादयो गताद्यर्थे प्रथमया" (वार्त्तिक)। प्रगत आचार्य्यः प्राचार्य्यः।**

The particles प्र etc. are always compounded with a प्रथमान्त word when they mean 'past' etc. Thus प्राचार्य्यः means the late professor, the professor that is dead.

मित—। इह प्र इत्यस्य आचार्य्य इत्यनेन नित्यः समासः। प्रशब्दस्य प्रगत

इत्यर्थः। गतशब्दस्य तु न समासः॥ प्रशब्दस्य आचार्यशब्दं प्रति गतित्वं न सम्भवति अतो वचनम्॥

टी—। "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" (वार्त्तिक)। अतिक्रान्तो मालामतिमालः।

The particles अति &c. are always compounded with a द्वितीयान्त word when they mean 'surpassed', 'exceeded' etc. Thus अतिमालः means over-passed the garland.

मित—। इह अतिशब्दस्य अतिक्रान्त इत्यर्थः। मालामित्युपसर्जनम्। नित्यः समासः। उपसर्जनह्रस्वः। अतिमालः। दैर्घ्येण मालां व्यतीत्य स्थितः, यद्वा सौरभसम्पदा मालां विजित्य स्थितः इत्यर्थः॥

टी—। "अवादयः क्रुष्टाद्यर्थे तृतीयया" (वार्त्तिक)। अवक्रुष्टः कोकिलया अवकोकिलः।

The particles अव etc. are always compounded with a तृतीयान्त word when mean 'cried down' etc. Thus अवकोकिलः—cried down by a female cuckoo.

मित—। आत्मक्रोशनमिव क्रोशनं श्रुत्वा जिगीषया यदुच्चैस्तरं क्रोशनं तदवक्रोशनम्: अवशब्दस्य अवक्रुष्ट इत्यर्थः। कोकिलया इत्युपसर्जनम्। नित्यः समासः। उपसर्जनह्रस्वः। अवकोकिलः॥

टी—। "पर्य्यादयो ग्लानाद्यर्थे चतुर्थ्या" (वार्त्तिक)। परिग्लानोऽध्ययनाय पर्य्यध्ययनः।

The particles परि etc. are always compounded with a चतुर्थ्यन्त word when they mean 'toiling' 'weary' etc. Thus पर्य्यध्ययनः—toiling for study.

मित—। अध्ययनात् परिग्लानः अध्ययनमभिप्रेत्य परिग्लानः अध्ययनविषये परिग्लान इत्यर्थः। "क्रियार्थोपपदस्य—" (५८१—२।३।१४) चतुर्थी॥

दी—। "निरादयः क्रान्ताद्यर्थे पञ्चम्या" (वार्त्तिक)। निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः।

The particles निर् etc. are always compounded with a पञ्चम्यन्त word when they mean 'to come out of', 'to depart from' etc. Thus निष्कौशाम्बिः—departed from Kausambi.

मित—। पञ्चमीसाहचर्य्यादिह क्रमिरकर्मकः। "स्वादयः—" इत्यत्र तु सकर्मकः। 'कौशाम्ब्याः' इत्युपसर्जनम्। नित्यः समासः। उपसर्जनह्रस्वः। निष्कौशाम्बिः कौशाम्ब्या निर्गत्य नगरान्तरं प्रति अध्वानं प्रतिपन्न इत्यर्थः॥

दी—। "कर्मप्रवचनीयानां प्रतिषेधः" (वार्त्तिक)। वृक्षंप्रति।

The कर्मप्रवचनीय particles (646—1.4.83.) अनु etc. are not compounded. Thus वृक्षं प्रति stands as uncompounded.

मित—। अर्थविशेषे प्रादयः कर्मप्रवचनीयसंज्ञका भवन्ति (५४६—१।४।८३)। तदा "—प्रादयः" (७६१२।२।१८) इति समासः प्राप्नोति। स इह निषिध्यते॥

७८१। तत्रोपपदं सप्तमीस्थम् ॥३।१।८२॥

दी—। सप्तम्यन्ते पदे 'कर्मणि' इत्यादौ (२८१३—३।२।१) वाच्यत्वेन स्थितं कुम्भादि। तद्वाचकं पदमुपपदसंज्ञं स्यात्। तस्मिंश्च सत्येव वक्ष्यमाणः प्रत्ययः स्यात्।

In some of the rules guiding affixes to roots, certain words appear with the सप्तमीविभक्ति, such as कर्मणि etc. in rules "कर्मण्यण्" (2913—3. 2. 1) etc. These words refer to such things as 'a pitcher' etc. Such words denoting 'a pitcher' etc. are termed उपपद, the corresponning affixes being available only in presence of the उपपद।

मित—। कृत्प्रकरणस्थं सूत्रमिदम्। "प्रत्ययः" (१८०—३।१।१) इत्यधिक्रियते "धातोः" (२८२९—३।१।९१) इति च। तेनायमर्थः—धातोः प्रत्ययः स्यात्। 'तत्र' तस्मिन् प्रत्यये कर्त्तव्ये, विधायकसूत्रे यत् 'सप्तमीस्थ' तत्

'उपपदं' भवति, उपपदसंज्ञां लब्ध्वा उपतिष्ठते ॥ किमिदमुपपदमिति ? पदमिति सुबन्तं तिङन्तञ्च। उप समीपे उच्चारितं पदम् उपपदम्। सामीप्यञ्च अन्वयकृतम्। अतो यस्य प्रत्ययार्थेन अन्वयः तदुपपदम्, तच्च तस्मिन् प्रत्यये समर्थम् ॥ अथ सप्तमीस्थमित्यस्य कोऽर्थः ? सप्तमीति सप्तम्यन्तं पदम्। तस्मिंस्तिष्ठतीति सप्तमीस्थम्। "सुपि स्थः" (२९१६—३।२।४) इति कः। किञ्च तस्मिन् पदे तिष्ठति ? यत् तस्य पदस्य वाच्यं तदेव तस्मिन् तिष्ठति। एवं सप्तमीस्थमित्यस्य सप्तम्यन्तपदवाच्यं द्रव्यं मुख्योऽर्थः। इदमिह उपपदमित्युच्यते। तदनेन पदेन केनचित् भाव्यम्। द्रव्यञ्च पदं न स्यात् इति मुख्यार्थबाधे लक्षणया सप्तम्यन्तपदवाच्यद्रव्यस्य वाचकशब्दः सप्तमीस्थमित्यनेन गृह्यते ॥ एतच्च दृष्टान्तगर्भेण व्याख्यानेन परिष्करोति—"कर्मण्यण्" (२९१३—३।२।१) इत्यण्विधायकं सूत्रम्। इह 'कर्मणि' इति सप्तम्यन्तम्। प्रथमार्थे सैषा सप्तमी। अत्र पदे वाच्यत्वेन स्थितः 'कुम्भः' इति द्रव्यम्। अस्य च कर्मरूपेण वाचकं 'कुम्भम्' इति पदमिह 'उपपदम्'। प्रत्यये कर्तव्ये उपपदमुपतिष्ठते इति 'तत्र'-शब्द-व्याख्यानमुक्तम्। तदसत्यस्मिन्नुपपदे एष प्रत्ययो न स्यात्। तदाह तस्मिंश्च सत्येव इत्यादि ॥

७८२। उपपदमतिङ् ॥२।२।१९॥

**टी—। उपपदं सुबन्तं समर्थेन नित्यं समस्यते, अतिङन्तश्चायं समासः। कुम्भं करोतीति कुम्भकारः। इह कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यम्। 'अतिङ्' किम् ? मा भवान् भूत्। "माङि लुङ्" (२२१९—३।३।१७५) इति सप्तमीनिर्देशात् माङ् उपपदम् ॥**

An उपपद ending in a सुप् is always compounded with what is syntactically connected with it, but not with a तिङन्त word as the last member of the compound. Thus कुम्भकारः, meaning one who makes pitchers, a potter. Here the exposition is the unusual one कुम्भ अस् कार which cannot be used in ordinary language. Why say अतिङ—not with a

तिङन्त word final? Witness मा and भूत uncompounded in मा भवान् भूत, though by the rule "माङि—" (2219) माङ् is an उपपद, and should have been compounded with भूत।

मित—। तिङ् इति तिङन्तम्। इह भाष्ये 'अतिङ्' इति योगो विभज्यते, पूर्वसूत्रात् 'गति' इति च पृथक् क्रियते। तेन "गतिः" "उपपदम्" "अतिङ्" इति त्रिसूत्री प्राप्ता। 'सुपा' इति निवृत्तम्। अतिङ् इति द्वयोरपि पूर्वयोः सम्बध्यते। व्याख्यानञ्च—"गतिः समर्थेन समस्यते अतिङ्" "उपपदं समर्थेन समस्यते अतिङ्" इति। तत्र अतिङिति कस्य विशेषणम्? न हि समासे पूर्वपदे स्थितयोः गत्युपपदयोः गतिषु तिङन्तशब्दाभावात्। यथा च नागेशो मन्यते तथा नापि अतिङ् इति अतिङा, अतिङन्तेन उत्तरपदेन, इत्यर्थे लुप्ततृतीयाकम्, भाष्ये "केनेदानीं समासः" इति प्रश्ने "समर्थेन" इति वचनात्। यदि सूत्रे तृतीयान्तं तेनैव उत्तरपदेन समासो भवति। तत् तृतीयान्तशब्दाभावे एव "केनेदानीं समासः?" इति प्रश्नः सङ्गच्छते "समर्थेन" इति च उत्तरं भवति। तथा च "सह सुपा" इत्यत्र योगविभागेन 'सह' इति तृतीयान्त-विरहिते सूत्रे अर्थे "सुप् समस्यते। केन सह? समर्थेन" इत्युक्तं भाष्ये। अत इह लुप्ततृतीयापक्षे प्रश्नावकाश एव न स्यात्, सत्यपि "अतिङा" इत्येव उत्तरं स्यात इति हि नागेशस्याभिप्रायः। भवतु, "समासः" इत्यधिकृतमस्ति तस्यैवेदं विशेषणं भविष्यति। तदाह "अतिङन्तायं समासः" इति। अयमाशयः—अविद्यमानं तिङ् तिङन्तम् अस्मिन् अतिङ्, समास इत्यस्य विशेषणमेतत्। उपपदस्य सुबन्तत्वात् उत्तरपदविशेषणत्वे पर्यवसानम्॥ कुम्भकार इति कर्मण्यण् (२९१३—३।२।१) इत्यण् प्रत्ययः। कुम्भशब्दस्य कारशब्देन नित्यसमासः। कुम्भं करोतीति व्याख्यानमात्रं न विग्रहः लौकिकविग्रहः प्रयोगार्हं इह नास्त्येव। अलौकिके वाक्ये अस् इति षष्ठी कृद्योगा कर्मणि॥ "माङि लुङ्" (२२१९—३।३।१७५) इत्यत्र माङ् उपपदम्। तस्य तिङन्तेन समासे मा भूत इति नित्यं समासः स्यात्, ततो 'भवान्' इति मध्ये प्रयोगो न स्यात्॥

टी—। 'अतिङ्'-ग्रहणं ज्ञापयति—"सुपा" (६४८—२।१।४) इत्येतन्नेहानुवर्त्तते इति। पूर्वसूत्रेऽपि गतिग्रहणं पृथक्कृत्य

'अतिङ्'-ग्रहणं तत्रापकृष्यते, "सुपा" इति च निवृत्तम्। तथाच "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः" (परिभाषा) इति सिद्धम्। व्याघ्री। अश्वक्रीती। कच्छपी॥

The prohibition अतिङ्—not with a तिङन्त word as final—implies that the general maxim "सुपा" ( 649—2.1.4 ) does not attach itself to this rule. In the former rule ( 761—2. 2. 18 ) again गति is detached and taken along with अतिङ्, also "सुपा" is counter-manded. Hence we paractically arrive at the Paribhasha "गतिकारक—" —गति, कारक and उपपद are compounded with कृदन्त words but before such words take सुप्। Thus व्याघ्री, which is an उपपदसमास of आ and घ्र and then गति समास of वि and आघ्र, the feminine symbol and सुप् coming in after the compound is finally formed. Similarly अश्वक्रीती is a compound of अश्वेन—which is a कारक, viz, करण—and क्रीत with no feminine symble or सुप् attached. In कच्छपी too the समास is of कच्छेन—an उपपद—and प without any feminine symool or सुप्।

मित—। अतिङ् इति गत्युपपदयोर्न विशेषणं परन्तु उत्तरपदद्वारा समासं विशेषयति इत्युक्तं प्राक्। परं "सुपा" इत्यधिकारात् उत्तरपदे तिङः प्रसङ्ग एव नास्ति कुतो निषेधः 'अतिङ्' इति ? तदाह अतिङ्ग्रहणमित्यादि। अयमाशयः—अस्मादेव 'अतिङ्'-ग्रहणादनुमीयते गतिसमासे उपपदसमासे च 'सुपा' इत्यस्य न सम्बन्धः। उत्तरपदे सुबुत्पत्तेः प्रागेव समासो भवति। अतएव प्राग्लौकिकविग्रहे कुम्भ अस् कार इति कारशब्दः अविभक्तिकः प्रयुक्तः। एतच्च प्राचां "गतिकारको—" इति परिभाषाया अनुकूलम्। अयञ्च परिभाषार्थ—गतेः कारकस्य उपपदस्य च कृदन्तेन सह नित्यसमासो वाच्यः. स च समासः कृदन्ते सुबुत्पत्तेः प्रागेव भवति। स्त्रीप्रत्यययोगः सुप्योगश्च समासात् परं क्रियते। तथाहि

व्याजिघ्रति इत्यर्थे व्याङ्पूर्वात् घ्राधातोः स्त्रियां क-प्रत्यये प्रथमं वे आङ्य 'घ्र' इति निर्विभक्तिकेन कृदन्तेन तत्पुरुषः। तत्पुरुषः पुनस्त्रिपदेन न भवति इति आङो 'घ्र' इत्यनेन उपपदसमासे कृते, वेराघ्र इत्यनेन गतिसमासः क्रियते। तेन जातं 'व्याघ्र' इति निर्विभक्तिकं रूपम्, व्याजिघ्रतीय-मित्यर्थस्तु नायातः। समर्थे प्रति यतमानेन प्रथमं स्त्रीत्वस्य लिङ्गमासन्नीय ततः कर्तृत्वस्य। तेन जातिलक्षणे ङीषि (५१८—४।१।६३) सुपि च व्याघ्री। सुबुत्पत्तेः परं समासे तु 'घ'-शब्दे सुब्योगात् पूर्वं लिङ्गयोगः। ततो 'घ्र' शब्दस्य जातिपरत्वाभावात् टाबेव। तेन जातं 'घ्रा' इति। समासे 'व्याघ्रा' इति। व्याघ्रीति तु न सिद्ध्यति॥ एवम् अश्वेन क्रीता इत्यर्थे प्रथमम् 'अश्वेन' इत्यस्य 'क्रीत' इति निर्विभक्तिकेन क्तान्तेन समासः। तेन 'अश्वक्रीत' इति जाते स्त्रीत्वार्थं कर्मत्वार्थं च लिङ्गयोगः सुब्योगश्च। ततः "क्रीतात् करणपूर्वात्" (५०९—४।१।५०) इति ङीषि सुपि च अश्वक्रीती। सुबुत्पत्तेः परं समासे अश्व-क्रीता इति स्यात्॥ कच्छेन पिबति इत्यर्थे कच्छेन इति सुबन्तोपपदे पा-धातोः "सुपि स्थः" (२९१६—३।२।४) इति योगविभागात् स्त्रियां कप्रत्यये प्रथमं कच्छेन इत्यस्य 'प' इति निर्विभक्तिकेन कृदन्तेन समासः। तेन कच्छप इतिरूपे जाते स्त्रीत्वार्थं ङीषि ततः सुपि कच्छपी। सुबुत्पत्तेः परं समासे तु 'कच्छपा' इति स्यात्॥ इह सर्वत्र टाबुत्पत्तेः परं समासे स्त्रीत्वस्य समासे अन्तर्भावात् स्त्रियामेव प्रातिपदिकं वर्तते परन्तु अदन्तत्वाभावात् ङीष् न भवति॥

७८३। अमैवाव्ययेन ॥२।२।२०॥

वृ०—। अमैव तुल्यविधानं यदुपपदं तदेव अव्ययेन सह समस्यते। स्वादुङ्कारम्। नेह—"कालसमयवेलासु तुमुन्" (३१७९—३।३।१६७); कालः समयो वेला वा भोक्तुम्॥ 'अमैव' इति किम्? अग्रे भोजम्—अग्रे भुक्त्वा। "विभाषाग्रे-प्रथमपूर्वेषु" (३३४५—३।४।२४) इति क्त्वाणमुलौ। अमा च अन्येन च तुल्यविधानमेतत्॥

An उपपद is not compounded with an indeclinable कृत्

except with णमुल् if the उपपद is enunciated with णमुल् alone and then the समास is obligatory. Thus स्वादुङ्कारम्—having sweetened—is a नित्यसमास with अम् ( णमुल् )। But there is no समास with भोक्तुम् in कालः &c.—though भोक्तुम् is an अव्यय and कालः etc. are उपपद। Why say अमैव—enunciated with णमुल् alone? Witness the uncompounded form in अग्रे etc. because by "विभाषाग्रे—" ( 3345—3. 4. 24 ) the उपपद arises not in connection with णमुल् alone, but with णमुल् as well as क्त्वा।

मित—। उपपदमित्यस्ति। 'अम्' इति णमुल्खमुञौ। 'अमैव' इत्युपपद-विशेषणम्। अमा एव यत् उपपदम्, अमा एव सह यस्य उपपदत्वम्, येन सूत्रेण अम् एव केवलं विधीयते तत्र यत् उपपदं तत्, इति फलितम्। तदाह 'अमैव तुल्यविधानं यत् उपपदं तत्' इति॥ 'अव्ययेन समस्यते' इत्युच्यते। केनाव्ययेन? प्रसङ्गात् अमा इति लभ्यते। अमैव तुल्यविधानत्वे अव्ययान्तरं प्रति उपपदत्वमेव नास्ति कुतः समासस्तेन? तर्हि यत्र णमुल् च अन्यश्च विधीयते तत्र अन्येन समासनिवृत्त्यर्थमिदम्॥ 'तदेव समस्यते' इत्युच्यते 'तत् समस्यते' इति तु गौणम्। कुतोऽयमेवकारः? पूर्वसूत्रे उपपदमात्रस्य समास उक्तः, तस्य अव्ययेनापि सिद्धः समासः। एवं सिद्धे सति यत् पुनरिह उपपदविशेषस्य समासविधानं, तन्नियमार्थं भविष्यति, ईदृशमेवोपपदमव्ययेन समस्यते नान्यदिति। अत आह तदेवेति॥ स्वादुङ्कारम् इति स्वादुशब्दे निपातनात् मकारान्ते उपपदे कारमिति णमुला नित्यसमासः। "स्वादुमि णमुल्" (३३४७—३।४।२६ ) इति णमुला एव तुल्यविधानमिदमुपपदम्॥ अव्ययान्तरेण उपपदं न समस्यते। तथा च कालादीनां तुमुना उपपदत्वं न तु अमा तेन न समासः॥ अग्रे भोजम् इति णमुल्प्रत्ययेन क्त्वाप्रत्ययेन च तुल्यविधानमुपपदं न तु अमैव, तेन न समासः॥ उपपद-समास एवेह नियम्यते। गतिसमासस्तु येन केनचिदप्यव्ययेन भवति। तेन निश्चित्य उपगन्तुम् इत्यादयो निर्बाधाः॥

७८४ । तृतीयाप्रभृतीन्यन्यतरस्याम् ॥ २।२।२१ ॥

दी—। "उपदंशस्तृतीयायाम्"। ( ३३६८—३।४।४७ ) इत्यादिन्युपपदानि अमन्तेन अव्ययेन सह वा समस्यन्ते। मूलकेनोपदंशं भुङ्क्ते—मूलकोपदंशम् । उच्चैःकारम् ॥

Upapadas enunciated in the rules commencing with "उपदंशः—" ( 3368—3. 4. 47 ) are optionally compounded with the corresponding अमन्त indeclinable. Thus मूलकेन etc. uncompounded and मूलकोप etc. compounded. Again in उच्चैः etc.—उच्चैः is an उपपद by "अव्यये—" ( 3381—3. 4. 59 ) but it is enunciated along with णमुल् and क्त्वा as well ; yet it is optionally compounded with णमुल् by this rule.

मित—। 'अमैव इत्यनुवर्त्तते, अर्थस्तु 'अमैव समासः' इति । इह तृतीयाप्रभृतिषु यानि अमैव तुल्यविधानानि तेषां पूर्वेण नित्ये प्राप्ते विकल्पार्थं वचनम्, यानि तु अमा च अन्येन च तुल्यविधानानि तेषामप्राप्ते विकल्पः। मूलकेन इत्यादीनां नित्ये प्राप्ते विकल्पः, उच्चैःकारमित्यत्र "अव्यये—" ( ३३८१—३।४।५९ ) इति क्त्वाप्रत्ययेन णमुला च तुल्यविधानत्वात् अप्राप्ते ॥ अमैव समासो नान्येन । तथा हि "पर्याप्ति-वचनेषु—" (३१७८—३।४।६६ ) इति तृतीयाप्रभृतिषु पठ्यते, परं तुमुनोऽयं विधि-र्न णमुलः । तेन न समासः—पर्याप्तो भोक्तुम् ॥

७६५ । क्त्वा च ॥ २।२।२२ ॥

दी—। तृतीयाप्रभृतीन्युपपदानि क्त्वान्तेन सह वा समस्यन्ते। उच्चैःकृत्य—उच्चैः कृत्वा "अव्ययेऽयथाभिप्रेत—" (३३८१—३।४।५।८) इति क्त्वा । 'तृतीयाप्रभृतीनि' इति किम् ? अलं कृत्वा । खलु कृत्वा ।

Upapadas enunciated in the rules commencing with "उप-दंशः—" (3368—3.4.47) are optionally compounded with the

corresponding क्त्वान्त indeclinable. Thus उच्चैः etc.—Aloud. The क्त्वा is by "अव्यये—" (3381—3. 4. 59). समास is not available outside the range तृतीया प्रभृति। Thus अलं कृत्वा etc.—need not be done. The क्त्वा is by "अलंखल्वोः—" (3316—3. 4. 11) which precedes "उपदंशः—" (3368—3. 4. 47)

मित—। 'क्त्वा' इति क्त्वा-शब्दस्य तृतीयैकवचनम्। धातु-शब्देन धात्वधिकारोक्तः प्रत्ययोऽपीह गृह्यते। तेन "आतो धातोः" (२४०—६।४।१४०) इत्याकारलोपे 'क्त्वा' इति रूपम्। तथा अन्यत्रापि "—क्त्वो ल्यप्" (३३३२—७।१।३७) इति। 'तृतीयाप्रभृतीनि' इति सर्वमस्ति। "अव्ययेऽयथा—" इति तृतीयाप्रभृतिषु सूत्रम्। अतो विकल्पः। अप्राप्ते विकल्पः। तृतीयप्रभृतिषु यत्र यत्र क्त्वा विधीयते तत्र तत्र वैकल्पिकः समासः। तिर्य्यक्कृत्वा—तिर्य्यक्कृत्य॥ अलं कृत्वा इत्यादिषु "अलंखल्वोः..." (३३१६—३।४।१८) इति क्त्वा, स च तृतीयादीनां पूर्ववर्त्ती विधिः अतो न समासः॥

७८६। तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः॥ ५।४।८६॥

दी—। संख्याव्ययादेरङ्गुल्यन्तस्य तत्पुरुषस्य समासान्तः अच् स्यात्। द्वे अङ्गुली प्रमाणमस्य द्व्यङ्गुलं दारु। निर्गतमङ्गुलिभ्यो निरङ्गुलम्।

The affix अच् is the समासान्त of a तत्पुरुष beginning with a numeral or an indeclinable and ending with अङ्गुलि। Thus द्व्यङ्गुलम्—measuring two finger-breadths; निरङ्गुलम्—projecting both ways when grasped with the fingers.

मित—। अच् इत्यनुवर्त्तते। संख्याव्ययादेस्तत्पुरुषस्य अन्तावयवः अच् स्यात् अङ्गुलेः परम्, इत्यन्वयः। यद्वा—संख्याव्ययादेस्तत्पुरुषस्य यो अङ्गुलिशब्द उत्तरपदम् तस्मात् अच् स्यात् समासान्तः। आद्ये तत्पुरुषस्य इति समासान्तापेक्षया षष्ठी, द्वितीये अङ्गुल्यपेक्षया उभयत्र अङ्गुलेः इति पञ्चमी॥ द्वे अङ्गुली प्रमाणमस्य इति प्रमाणे मात्रच् प्रत्ययः। तदर्थे 'द्वे अङ्गुली' इत्येतयोः "तद्धितार्थ—" (७२८—२।१।५१) इति तत्पुरुषो द्विगुसंज्ञकः। अनेन अच् तद्धिता। "यस्येति च" (३११

—६।४।१४८ ) इतीकारलोपे "द्विगोर्नित्यम्" ( १८३८—५।२।३७ वा ) इति मात्रचो लुकि द्वाङ्गुल अच् इति स्थितम् । द्वाङ्गुलम् ॥ निरङ्गुलमिति प्रादितत्पुरुषे अचि इकारलोपे रूपम् ॥

७८७। अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ॥५।४।८७॥

दी—। एभ्यो रात्रेरच् स्यात्, संख्याव्ययादेः। अहर्ग्रहणं द्वन्द्वार्थम्। अहश्च रात्रिश्च अहोरात्रः। सर्वा रात्रिः सर्वरात्रः। पूर्वं रात्रेः पूर्वरात्रः। संख्यातरात्रः। पुण्यरात्रः। द्वयो रात्र्योः समाहारो द्विरात्रम्। अतिक्रान्तो रात्रिम् अतिरात्रः।

The word रात्रि coming after अहन्, सर्व, an एकदेश, संख्यात, and पुण्य also, in a तत्पुरुष, takes अच् as a समासान्त। By 'also' संख्या and अव्यय are included here. अहन् is mentioned for a द्वन्द्व compound with रात्रि। Thus अहोरात्रः means अहश्च रात्रिश्च with अच् added and इ of रात्रि dropped; the compound being in the masculine by "रात्राह्नाहाः—" ( 814—2.4.29 ). सर्वरात्रः has पुंवद्भाव by "पुंवत् कर्मधारय—" (746—6.3.42) etc. द्विरात्रम् is neuter by "संख्यापूर्वं रात्रं क्लीबम्" (814, Varit ).

मित—। अहन्शब्दे पूर्वपदे रात्रिशब्दे चोत्तरपदे तत्पुरुषो न दृश्यते। द्वन्द्वे च "अहोरात्रे" ( ३९९९—२।४।२८ ) इति समासान्तो दृश्यते। तदाह अहर्ग्रहणं द्वन्द्वार्थमिति। अहश्च रात्रिश्च इति समाहारे "रूपरात्रि—" (१७२—८।२.६८, वा ) इति रुत्वम्। "हशि च" (१६८—६।१।११४) इत्युत्वम्। अचि इकारलोपः। समाहारस्य एकत्वादेकत्वम्। "रात्राह्नाहाः—" ( ८१४—२।४।२९ ) इति पुंस्त्वम् ॥ सर्वरात्र इति "पूर्वकालैकसर्व—" (७२८—२।१।४९) इति समासः, "पुंवत् कर्म—" (७४६—६।३।४२) इति "सर्वनाम्नो वृत्तिमात्रे—" (७२८—२।१।५१, वा) इति वा पुंवत् ॥ द्विरात्रमिति "संख्यापूर्वं रात्रम्—" (८१४, वा) इति क्लीबत्वम् ॥

७८८। राजाहःसखिभ्यष्टच् ॥५।४।९१॥

टी—। एतदन्तात् तत्पुरुषात् टच् स्यात्। परमराजः। अतिराजी। कृष्णसखः।

A तत्पुरुष ending in राजन्, अहन्, and सखि takes the समासान्त affix टच्। Thus परमराजः—a great king. अतिराजी—a woman surpassing the king himself. कृष्णसखः—Krishna's friend.

मित—। 'तत्पुरुषस्य' इत्यनुवर्त्तते। तत्पुरुषस्य यो राजन्-शब्दः, अहन्-शब्दः, सखिशब्दश्च ततः समासान्तष्टच्। पञ्चमीसामर्थ्यात् एषामुत्तरपदता गम्यते। तदाह 'एतदन्तात् तत्पुरुषात्' इति। परमराज इति टचि "नस्तद्धिते" (६७९—६।४।१४४) इति टिलोपः। टचः टित्त्वस्य फलं दर्शयति राजानमतिक्रान्ता इयमिति स्त्रियामतिराजीति—"टिड्ढाणञ्—" (४७०—४।१।१५) इति ङीप्॥

७८८। अह्नष्टखोरेव ॥६।४।१४५॥

टी—। एतयोरेव परतः अह्नष्टिलोपः स्यान्नान्यत्र। उत्तमाहः। द्वे अहनी भृतो (? भूतो) द्व्यहीनः क्रतुः। तद्धितार्थे द्विगुः। "तमधीष्टः—" (१७४४—५।१।८०) इत्यधिकारे "द्विगोर्वा" (१६५०—५।१।८६) इत्यनुवृत्तौ "रात्र्यहः संवत्सराच्च" (१७५१—५।१।८७) इति खः॥ लिङ्गविशिष्टपरिभाषाया अनित्यत्वान्नेह—मद्राणां राज्ञी मद्रराज्ञी॥

The word अहन् drops its टि ( अन् ) only when ट or ख follows but not with any other affix. Thus उत्तमाहः with ट। As an instance of ख we have द्व्यहीनः meaning "in progress for two days"—This is a द्विगु with a view to attach the तद्धित affix ख। The context is "तमधीष्टः—" (1744—5.1.80); the rule "द्विगोर्वा" (1750—5.1.86) attaches itself to the rule "रात्र्यहः—" (1751—5.1.87). मद्राणां राज्ञी gives मद्रराज्ञी without टच् because the maxim "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" (748, Mitabhashini) is not universal, and does not affect the समासान्त section.

मित—। टच् खच् टखौ। तयो:। हलन्तं प्रातिपदिकम्। परसप्तमी। तदाह 'एतयोरेव परत:' इति॥ उत्तमाहन् टच् इति स्थिते टिलोप:। "राजाह्नाहा:—" (८१४—२।४।२९) इति पुंस्त्वम्॥ भृत इति लिपिकरप्रमादज: पाठ:। वेतनेन क्रीत इति भृतशब्दस्यार्थ: स च क्रतौ न सङ्गच्छते। भूत इत्येव पाठ:। भूत: ख्सत्तया व्याप्तकाल:. कालश्च ह्यहात्मक:। अथवा ऋत्विजो भृता: इति क्रतुरपि भृत इत्युच्यते। ततो भृत इति पाठ:। द्वे अहनी भूत भृतो वा इत्यर्थे 'ख' इति तद्धित: कर्त्तव्य:। अस्मिन् कर्त्तव्ये द्वे अहनी ख इति जाते आद्ययोर्द्विगु: (७२८—२।१।५१)। द्व्यहन् ख इति जाते "राजाह:—" (७८८—५।४।९१) इति टच् प्राप्त:, समासान्तविधिरनित्य इति तु न ज्ञात:। ततष्टिलोपे द्व्यहीन। ख-प्रत्ययस्तु "समाया: ख:" (१७४९—५।१।८५) इत्यत्र प्रक्रान्त उपरिष्टादनुवर्त्तय। ततो "द्विगोर्वा" इत्यप्यनुवर्त्तते। एतै: सहान्वये 'राजाह:' इत्यस्य 'संवत्सरान्ता-द्विगोर्वा ख:' इत्यर्थ: सम्पद्यते। तेन सर्वं पूर्ण ख:॥ कथं मद्रराज्ञीति? राजन्-शब्दविशिष्टस्य राज्ञीशब्दादपि भवति। ततो मद्रराज्ञी टच् इति स्थिते,"भस्याढे—" (८३६, वा) इति पुंवद्भावे मद्रराजन् टच् इति जाते, टिलोपे, स्त्रियां मद्रराजीति स्यात्। उत्तरमाह—लिङ्गविशिष्टपरिभाषाया: "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" (७४८, मित— ) इत्यस्या: अनित्यत्वात् परिभाषेयं सर्वत्र न प्रवर्त्तते, समासान्तेषु लिङ्गविशिष्टस्य ग्रहणं नास्ति। तेन राज्ञीशब्दाच्च टच्॥

७९०। अह्नोऽह्न एतेभ्य:॥ ५।४।८८॥

दी—। सर्वादिभ्य: परस्य अहन्शब्दस्य अह्नादेश: स्यात् समासान्ते परे।

The word अहन् coming after a संख्या, an अव्यय, an एकदेश and the words सर्व and संख्यात changes into अह्न, a समासान्त following.

मित—। 'तत्पुरुषस्य' इत्यनुवर्त्तते। तत्र च "राजाह:—" (७८८—

५।४।९१ ) इति समासान्तष्टच् भवति। तदाह 'समासान्ते परे इति'। 'एतेभ्यः' इति प्रागुक्ताः परामृश्यन्ते। तानि च "तत्पुरुषस्य—" ( ७८६—५।४।८६ ) इत्यतः संख्या, अव्ययानि च, "अहःसर्व—" ( ७८७—५।४।८७ ) इत्यतः अहन्, सर्व, एकदेश, संख्यात, पुण्य इत्यपि। तत्र अहन्शब्दात् परः अह्नशब्दो न भवति पुण्यशब्दाच्च प्रतिषिद्धः अह्नादेशः (७९४—५।४।९०)। शिष्टानि तु गृह्यन्ते॥

७९१। अह्नोऽदन्तात्॥ ८।४।७॥

दी—। अदन्तपूर्वपदस्थाद्रेफात् परस्य अह्नः अह्नादेशस्य नस्य णः स्यात्। सर्वाह्णः। पूर्वाह्णः। संख्याताह्णः। द्वयोरह्नोर्भवः —"कालाट्ठञ्" ( १३८१—४।३।११ )। "द्विगोर्लुगनपत्ये" (१०८०—४।१।८८) इति ठञ् लुक्—द्व्यह्नः। स्त्रियामदन्तत्वात् टाप् द्व्यह्ना। द्व्यह्नप्रियः। अत्यह्नः॥

The word अह्न, substituted for अहन्, changes its न into ण if the cause for the change ( र ) is in a पूर्वपद that ends in short अ। Thus सर्वाह्णः &c. ( 790 ) with a cerebral ( 791 ). द्व्यह्न is compounded with a view to attach the तद्धित affix ठञ् in the sense "तत्र भवः" by the rule "कालाट्ठञ्" ( 1381—4. 3. 11 ). The ठञ् disappears by "द्विगोर्लुक्—" ( 1080—4. 1. 88 ) and अहन् changes to अह्न।

मित—। 'अह्नः' इति अहन्शब्दस्य य आदेशः अह्नशब्दः, तस्य प्रथमाया एकवचनम्। षष्ठ्यर्थे प्रथमा सौत्री। अह्नशब्दस्य इत्यर्थः। "रषाभ्याम्—" ( २३५—८।४।१ ) इत्यतः 'रषाभ्यां नो णः' इत्यनुवर्तते। "पूर्वपदात्—" ( ८५७—८।४।३ ) इत्यतः 'पूर्वपदात्' इति च। "अट्कु—" (१९७—८।४।२ ) इत्यप्यस्ति। तदेषोऽन्वयः—अदन्तात् पूर्वपदात् रषाभ्यां परस्य अह्नशब्दस्य नो णः अडादिव्यवायेऽपि। एतदेवाह अदन्तपूर्वेति। अह्नादेशनिमित्तेषु षकाराभावादाह रेफादिति। 'द्व्यह्नः' इति तद्धिते कर्त्तव्ये द्विगुः। द्वयोरह्नोर्भव इति भवार्थे ठञ्। द्वयोः अह्नोः ठञ् इति

स्थिते पूर्वयोर्द्विगौ द्वि अह्न् टच् ठञ् इति जाते संख्याया: परम् अह्नादेशे द्व्यह्न ठञ् इति। "द्विगोर्लुक्—" (१०८०—४।१।८८) इति ठञ्लुकि द्व्यह्न:। 'द्व्यह्ना' इति द्वयोरह्नोर्भवा। इह लुकः स्थानिवद्भावेन ठञ उत्तरं विहितो ङीप् प्राप्त:, स तु "अपरिमाण—" (४८०—४।१।२२) इति निषिध्यते, तेन टाबेव॥ द्व्यह्नप्रिय इति उत्तरपदे द्विगु:। द्वे अह्नी प्रिये यस्य इति विग्रह:॥ अति-गतमह्न: अत्यह्न:॥ नन्विह सूत्रे 'अह्न:' इत्यह्नन्शब्दात् षष्ठी इति व्याख्याने को दोष: ? उच्यते—तथा सति "दीर्घाह्नी शरत्" इत्यत्र णत्वं प्रसज्यते, भाष्ये तु दन्त्य: पाठ:। अतएवेह अकारान्तादह्नशब्दात् प्रथमा परिकल्प्यते इत्युत्तरत्र वक्ष्यति दूषयिष्यति च॥

७८२। क्षुभ्नादिषु च॥ ८।४।३९॥

**दी—। एषु णत्वं न स्यात्। दीर्घाह्नी प्रावृट्। एवञ्च एतदर्थम् 'अह्न' इत्यदन्तानुकरणे क्लेशो न कर्त्तव्य: "प्रातिपदि-कान्त—" (१०५५—८।४।११) इति णत्ववारणाय क्षुभ्नादिषु पाठस्य आवश्यकत्वात्॥ 'अदन्तात्' इति तपरकरणात्— परागतमह्न: पराह्न:॥**

Words listed with क्षुभ्ना leading do not change their न into ण। Thus दीर्घाह्नी is deemed to be of the क्षुभ्नादि class and read with a dental न। If so, it is unnecessary to explain अह्न: in the previous rule as the प्रथमा of अह्न with अ final to defend the dental here. It cannot be said that by so doing the necessity of classing दीर्घाह्नी with क्षुभ्ना is avoided; for, the rule "प्रातिपदिकान्त—" (1055—8. 4. 11) still operates and makes ण optional in दीर्घाह्न्। If, however, listed with क्षुभ्ना, this rule too is barred. पराह्न with dental is with परा preceding, hence, the पूर्वपद not ending is short अ, we do not get ण।

मित—। 'क्षुभ्ना' इत्येवमादिषु शब्देषु निमित्ते सत्यपि णत्वं न भवति।

अस्येहप्रयोजनं दीर्घाह्नीशब्दे णत्वप्रतिषेधः। यदुक्तं पूर्वसूत्रव्याख्याने अह्न इत्यकारान्तात् प्रथमेति, तदर्थं नालम्। तेन "अह्नो—" (७९१) इति सूत्रं बाध्यते सत्यं किन्तु 'प्रातिपदिकान्तनुम्विभक्तिषु च" (१०५५) इत्यस्य तु न निवृत्तिः। तथा च दीर्घाण्यहान्यस्यामिति विग्रहे दीर्घाहन् ङीप् इति स्थिते अकारलोपे दीर्घाह्नीति रूपम्। तत्र नकारो दीर्घाहन् इति प्रातिपदिकस्य अन्ते स्थित इति सूत्रस्य प्राप्तिः। सा च क्षुभ्नादिषुपाठेनैव निवार्य्येते न पुनरह्नशब्दस्य प्रथमान्तताव्याख्यानेन। तन्मास्तु तथाविधं व्याख्यानम् अहन्शब्दस्य षष्ठ्यां रूपमित्येवास्तु॥

७९३। न संख्यादेः समाहारे॥ ५।४।८९॥

टी—। समाहारे वर्त्तमानस्यसंख्यादेरह्नादेशो न स्यात्। 'संख्यादेः' इति स्पष्टार्थम्। द्वयोरह्नोः समाहारो द्व्यहः। त्र्यहः।

The substitute अह्न is not available in a तत्पुरुष in the sense of समाहार with a numeral leading. The qualification 'with a numeral leading' (संख्यादेः) is added merely for a clear statement. Thus द्व्यहः means a समाहारः of two days अन् disappears as before.

मित—। 'अह्नोऽह्न इत्यस्मि। संख्याव्ययादेः सर्वैकदेशसंख्यातात्र अह्नादेश उक्तः। एषु संख्यादेरेव समाहारः सम्भवति नान्यस्य। तत् "न समाहारे" इत्येतावति उक्ते 'न संख्यादेः' इत्येतदर्थादायाति स्पष्टोक्तिं नापेक्षते। तथापि स्पष्टार्थमिह संख्यादेरित्युपात्तम्॥ द्व्यहादिषु टच्टिलोपादि प्राग्वत्॥

७९४। उत्तमैकाभ्याञ्च॥ ५।४।९०॥

टी। आभ्यामह्नादेशो न। उत्तमशब्दः अन्त्यार्थः पुण्यशब्दमाह। "पुण्यैकाभ्याम्" इत्येव सूत्रयितुमुचितम्। पुण्याहम्। सुदिनाहम्। सुदिनशब्दः प्रशस्तवाची। एकाहः। उत्तमग्रहणमुपान्त्यस्यापि संग्रहार्थमित्येके। संख्याताहः।

अह्न is not substituted after एक and the last word above. उत्तम means 'last' and therefore refers to पुण्य in the above list. The rule is better worded with पुण्यैकाभ्याम्। Thus पुण्याहम् &c. सुदिन means 'fair' 'auspicious'. Some say उत्तम here is deliberately used to include the last but one also. Thus सङ्ख्याताह:।

मित—। 'अह्नोऽह्न:' इत्यस्ति, नेति चानुवर्तते। उत्तम ऊर्ध्वतम: अन्त्य इत्यर्थ:। "अह:सर्व—" (७८७—५।४।८७) इति सूत्रे अन्वय:। तदुच्यते 'पुण्यशब्दमाह' इति। 'पुण्यैकाभ्याम्' इत्युक्तौ स्पष्टतरं स्यात्। पुण्याहसुदिनाहयो: "पुण्यसुदिनाभ्याम्—" (८२१—२।४।१७, वा) इति क्लीबत्वम्॥ उपगतम् अन्त्यम् उपान्त्यम् अन्त्यात् पूर्वम्, संख्यातशब्द इति शेष:। अत्र पक्षे अरुचिज्ञापनाय आह 'इत्यन्ये' इति॥

## ७९५। अग्राख्यायामुरस:॥ ५।४।९३॥

**टो—। टच् स्यात्। अश्वानामुर इव अश्वोरसम्, मुख्योऽश्व इत्यर्थ:।**

After उरस् final in a तत्पुरुष, टच् is added as a समासान्त if उरस् means 'best'. Thus अश्वोरसम्—like the chest among horses i. e., the best horse.

मित—। 'तत्पुरुषस्य' इत्येव। 'अग्र' प्रधानम्। आख्या अर्थ:। तत्पुरुषस्य उरस्शब्द: अन्तावयव: अग्राख्यायां प्रधानार्थे वर्तते तस्मात् टच् स्यात् समासान्त: इत्यर्थ:। यदा च उरस्शब्द उपमानं तदैवास्य प्रधानार्थता। तदाह 'उर इव' इति। अश्वेषु यथा उर: प्रधानं तथायमश्वेषु। उर इव उर इति लक्षणया प्रधानमिति फलितम्। निर्धारणमिह नास्ति, अश्वानामिति शेषे षष्ठी। नागेशस्तु 'अग्राख्यायाम्' इति सयकारं पठति। अग्रे भव: अग्र्य: प्रधानमित्यर्थ:॥

७८६। अनोऽश्मायःसरसां जातिसंज्ञयोः ॥ ५।४।९४ ॥

**दी—। टच् स्याज्जातौ संज्ञायाञ्च। उपानसम्। अमृताश्मः। कालायसम्। मण्डूकसरसम्। इति जातिः॥ महानसम्। पिण्डाश्मः। लोहितायसम्। जलसरसम्। इति संज्ञा॥**

In a तत्पुरुष, टच् is added as a समासान्त after अनस्, अश्मन्, अयस् and सरस् to signify a class or a proper name. Thus, as class names, उपा &c.—a kind of cart, अमृत &c. a kind of stone, काल &c.—a kind of iron, मण्डूक etc.—a frog-pond; instances of proper names are महा etc.

मित—। अनः क्लीबे शकटम्। अश्मा पुंसि प्रस्तरः। अयः क्लीबे लौहम्। अनसादीनां द्वन्द्वः। पञ्चम्यर्थे षष्ठी सौत्री। अनः प्रभृतिभ्यस्तत्पुरुषान्तावयवेभ्यष्टच् स्यात् समासान्तो जातौ संज्ञायाञ्च विषये॥ समासान्ताः स्वार्थिकाः प्रत्यया इति प्रकृतिवल्लिङ्गवचनानि। "परवल्लिङ्गम्—" (८९२—२।४।२६) इति अमृताश्मः पिण्डाश्म इति पुंसि, क्लीबे चेतराणि॥

७८७। ग्रामकौटाभ्याञ्च तक्ष्णः॥ ५।४।९५॥

**दी—। ग्रामस्य तक्षा ग्रामतक्षः। साधारण इत्यर्थः। कुट्यां भवः कौटः,स्वतन्त्रः। स चासौ तक्षा च कौटतक्षः।**

The word तक्षन्, a carpenter, coming after ग्राम or कौट in a तत्पुरुष will have the समासान्त affix टच् added after it. Thus ग्राम etc.—a village carpenter working at the house of any one in the village that might require his services; कौट etc. a carpenter working at his own shop.

मित—। तक्षा सूत्रधरः। तत्पुरुषे एव। ग्रामस्य बहूनां साधारण इत्यर्थः। इत्यर्थं यत्र कुत्रापि गत्वा कर्मकरः। कुटी पण्यशाला। तत्रैव कर्मकरः स्वतन्त्र इत्यर्थः। उभयत्र टचि टिलोपः॥

७९८। अतेः शुनः ॥ ५।४।९६ ॥

**टी—। अतिश्वो वराहः। अतिश्वी सेवा।**

The word श्वन् coming after अति in a तत्पुरुष takes टच् as समासान्त। Thus अतिश्वः etc.—the boar is faster than the hound ; अतिश्वी etc.—service beyond that of the dog even, i. e., meaner than or surpassing that of the dog even.

मित—। 'अतेः' इति पञ्चमी। 'शुनः' इति पञ्चमी वा षष्ठी वा। पञ्चमीपक्षे—तत्पुरुषे अतिशब्दात् परो यः श्वन्शब्दः समासचरमावयवः ततः परं टच् स्यात् समासान्त इत्यर्थः। षष्ठीपक्षे—तस्य अन्ते टच् स्यात् समासान्तः इत्यर्थः। श्वानमतिक्रान्तो वेगेन अतिश्वः। टचि टिलोपः॥ टचष्टित्करणफलं दर्शयति—श्वानमतिक्रान्ता, सर्वप्रयत्नेन कृता इत्यर्थः, अतिश्वी सेवा। "टिड्ढाणञ्—" ( ४७०—४।१।१५ ) इति ङीप्। नागेशस्तु श्वानमतिक्रान्ता नीचतया अतिश्वी अतिनीचा सेवा इत्याह॥

७९९। उपमानादप्राणिषु ॥ ५।४।९७ ॥

**टी—। अप्राणिविषयकोपमानवाचिनः शुनष्टच् स्यात्। आकर्षः श्वेव आकर्षश्वः। 'अप्राणिषु' किम्? वानरः श्वेव वानरश्वा॥**

टच् comes after श्वन् which is intended as a standard of comparison and is final in a तत्पुरुष, the reference being to something inanimate, i. e., if something inanimate is compared to श्वन्। Thus आकर्षश्वः meaning an wooden आकर्ष resembling a dog in shape. Why say अप्राणिषु? Witness वानरश्वा without टच्, the sense being—a monkey, which is not अप्राणिन्, resembling a dog.

मित—। तत्पुरुषोत्तरपदात् उपमानवाचकात् श्वन्शब्दात् टच् स्यात् समासान्तः अप्राणिषु विषये अप्राणी चेदुपमेयः पूर्वपदम् इत्यर्थः। पञ्चाङ्गुलो धान्यादिकर्षकः काष्ठविशेष आकर्षः, येन आतपे शोषणार्थं धान्यादिकं प्राङ्गने आकृष्य विक्षिप्यते आतपाभावे च संक्षिप्यते सः॥ उपमानादेव। कृष्ण' श्वा कृष्ण श्वा इति न टच्॥

८०० । उत्तरमृगपूर्वाच्च सक्थ्नः ॥ ५।४।९८ ॥

टी— । चादुपमानात् । उत्तरसक्थम् । मृगसक्थम् । पूर्वसक्थम् । फलकमिव सक्थि फलकसक्थम् ॥

टच् comes after सक्थि in a तत्पुरुष if preceded by उत्तर, मृग and पूर्व। The च in the rule gives टच् also when an उपमान precedes. Thus उत्तर etc.—The lower part of the thigh etc. Also फलक etc.—thigh flat like a plank.

मित— । उत्तरश्च मृगश्च पूर्वश्च उत्तरमृगपूर्वम् । एकवद्भावः । एषां शब्दानाम् अन्यतमे पूर्वपदे परपदं यः सक्थिशब्दः तदन्तात् तत्पुरुषात् टच् स्यात् समासान्तः । चकारात् उपमानपूर्वपदेऽपि सक्थिशब्दाट्टच् भवति ॥ उत्तरं सक्थ्नः, पूर्वं सक्थ्नः इत्येकदेशिसमासः । मृगस्य सक्थि इति षष्ठीसमासः । फलकसक्थमिति मयूरव्यंसकादि इति नागेशः । यद्वा—फलकमिव फलकम् । तच्च तत् सक्थि च इति विशेषणसमासः । सर्वत्र टचि टिलोपः ॥

८०१ । नावो द्विगोः ॥ ५।४।९९ ॥

टी— । नौशब्दान्ताद्द्विगोष्टच् स्यात्, न तु तद्धितलुकि । द्वाभ्यां नौभ्यामागतो द्विनावरूप्यः । "द्विगोर्लुगनपत्ये" (१०८८—४।१।८८) इत्यत्र 'अचि' इत्यस्यापकर्षणात् हलादेः न लुक् । पञ्चनावप्रियः । द्विनावम् । त्रिनावम् ॥ 'अतद्धितलुकि' इति किम् ? पञ्चभिर्नौभिः क्रीतः पञ्चनौः ॥

A तत्पुरुष, of the द्विगु variety with नौ final, takes टच्, but not if some तद्धित affix has disappeared. Thus द्विनावरूप्यः proceeding or resulting from two boats—a तद्धितार्थद्विगु with टच् after नौ because the तद्धित affix रूप्य in the sense तत आगतः does not disappear. The reason for the retention of the affix is that, in the rule "द्विगोर्लुक्—" (1080—4.1.88), अचि is incorporated from the next rule ("गोत्रेऽलुगचि"); hence an affix with a consonant

leading, such as कृष्ण, is not elided. Similarly पञ्चनाव etc. is an उत्तरपदद्विगु with no तद्धित elided because none added. द्विनावम् etc. are instances of समाहारद्विगु। Why say 'अतद्धितलुकि'? Witness पञ्चनौः—bought in exchange for five boats—without a टच् because the affix ठक् has disappeared from it.

मित—। "गोरतद्धितलुकि" (७२९—५।४।९२) इत्यतः 'अतद्धितलुकि' इति मण्डूकप्लुत्या अनुवर्तते। तदाह न तु तद्धितलुकि इति॥ द्वाभ्यां नौभ्याम् आगत इत्यर्थे "हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः" (१४६१—४।३।८१) इति रूप्यप्रत्ययः। तस्य प्रत्ययस्य विषये "तद्धितार्थ"—(७२८—२।१।५१) इति समासः, टच्—द्विनावरूप्यः। अत्र अनपत्येऽपि लोपाभावे कारणमाह 'अचि इत्यपकर्षणात्' इति। अपकर्षणञ्च "गोस्त्रोऽलुगचि" (१०८१—४।१।८९) इत्यतः॥ पञ्च नावः प्रिया अस्य इति बहुव्रीहौ पूर्वयोर्द्विगुः, टच्—पञ्चनावप्रियः॥ द्वयोर्नावोः समाहार इति द्विगुः, टच्—द्विनावम्। "सनपुंसकम्" (८२१—२।४।१७) इति क्लीवत्वम्। ननु टचि कृते अकारान्तत्वात् "अकारान्तोत्तरपदो—" (८२१, वा) इति स्त्रियां ङीवस्तु। मास्तु, अकारोऽयं समासस्यान्तावयवो न तु उत्तरपदावयवः॥ एवं त्रिनावम्॥ पञ्चनौः इत्यत्र "तेन क्रीतम्" (१७०२—५।१।३७) इत्यर्थे "आर्हादगो—" (१६८१—५।१।१९) इति ठकि कर्तव्ये "तद्धितार्थ—" इति समासः। "अध्यर्द्धपूर्वद्विगोः—" (१६९३—५।१।२८) इति ठको लुक्। तेन न टच्॥

८०२। अर्धाच्च॥ ५।४।१००॥

दी—। अर्धान्नावष्टच् स्यात्। नावः अर्द्धम् अर्द्धनावम्। क्लीवत्वं लोकात्॥

नौ final in a तत्पुरुष takes टच् if अर्द्ध leads. Thus अर्द्धनावम् meaning 'half the boat'. Feminine was expected, but we have neuter through usage.

मित—। 'नावः' इत्यनुवर्तते। नौशब्दान्तात् अर्धशब्दपूर्वपदात् तत्पुरुषादित्यर्थः।

अत एकदेशिसमासमुदाहरति। "परवल्लिङ्ग—" ( ८१२—२।४।२६ ) इति स्त्रीत्वे प्राप्ते "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति भाष्यरीत्या क्लीबत्वम् ॥

## ८०३। खार्याः प्राचाम् ॥ ५।४।१०१ ॥

टी—। द्विगोरर्द्धाच्च खार्याःटच् वा स्यात्। द्विखारम्—द्विखारि। अर्द्धखारम्—अर्द्धखारी ॥

खारी final in a द्विगु or after अर्द्ध in a तत्पुरुषः, takes टच् according to the older grammarians. i.e., the टच् is optional. Thus द्विखारम्—two खारी measures—with टच् added, द्विखारि without टच्। Similarly अर्द्ध etc. the neuter here being through usage.

मित—। 'द्विगोः' इति 'अर्द्धाच्च' इत्यप्यनुवर्त्तते। खारीशब्दान्तात् द्विगोः खारीशब्दान्तात् अर्द्धपूर्वपदात् तत्पुरुषाच्च इत्यर्थः। 'प्राचाम्' इति विकल्पबोधकम्। एकं प्राचीनानामन्यदर्वाचीनानामिति विकल्पः। तदाह 'टच् वा' इति। द्विखारमिति समाहारे टचि नपुंसकम्। टजभावे नपुंसकह्रस्वे द्विखारि॥ अर्द्धखारमिति अद्विगुत्वात् परवल्लिङ्गतया स्त्रीत्वे प्राप्ते क्लीबत्वं लोकात्। 'अर्द्धखारि' इति टजभावे नपुंसकह्रस्वः, न तु उपसर्जनह्रस्वः, "एकविभक्तौ—" ( ७१३, वा ) इति उपसर्जनसंज्ञाया एव अभावात् ॥

## ८०४। द्वित्रिभ्यामञ्जलेः ॥ ५।४।१०२ ॥

टी—। टच् वा स्यात् द्विगौ। द्व्यञ्जलम्—द्व्यञ्जलि। 'अतद्धितलुकि' इत्येव द्वाभ्यामञ्जलिभ्यां क्रीतो द्व्यञ्जलिः।

अञ्जलि final in a द्विगु with द्वि or त्रि leading takes टच् optionally. Thus द्व्यञ्जलम् etc.—two handfuls. The restriction अतद्धितलुकि persists. Thus द्व्यञ्जलिः without टच्, in the sense "bought with two handfuls of grain", the affix ठञ् having disappeared from it by "अध्यर्द्ध—" ( 1623—5. 1. 28 )

मित— । 'प्राचाम्' इत्यनुवर्तते 'द्विगोः' इति च । द्विगोः द्वित्रिभ्यामुत्तरे यः अञ्जलिशब्दः ततः समासान्तष्टच् वा स्यादित्यर्थः । द्वाभ्यामञ्जलिभ्यां क्रीत इत्यत्र अञ्जलिशब्दो लक्षणया अञ्जलिपरिमिते शस्ये वर्तते । तेनायं परिमाणवाची द्व्यञ्जलिशब्दः । ततश्च "आर्हात्—" ( १६८१—५।१।१९ ) इति ठकि अप्राप्ते "प्राग्वतेष्ठञ्" ( १६८०—५।१।१८ ) इति ठञ् । तस्य "अध्यर्ध—" ( १५९२+५।१।२८ ) इति लुक्, तेन च न टच्—द्व्यञ्जलिः ॥

८०५ । ब्रह्मणो जानपदाख्यायाम् ॥ ५।४।१०४ ॥

दी— । ब्रह्मान्तात् तत्पुरुषात् टच् स्यात् समासेन जानपदत्वमाख्यायते चेत् । सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः ।

A तत्पुरुष ending in ब्रह्मन् takes टच् if the compound implies that the ब्रह्मन् is a provincial. Thus सुराष्ट्रब्रह्मः—A provincial Brahmana coming from Surashtra.

मित— । ब्रह्मा ब्राह्मणः । जनपदे भवः जानपदः । तस्य आख्या कथनम् । तस्यां द्योत्यायाम् । यो हि जनपदः साक्षात् नाम्ना निर्दिष्टः तत्र भवत्वे चेदनाग्रहः, किन्तु जानपदोऽयं ब्राह्मण इतिमात्रं चेद्वक्तुमिष्यते तदैव टच् ॥ सुराष्ट्रेषु ब्रह्मा इति अर्थकथनं सुराष्ट्रस्थब्रह्मा इति विग्रहः सप्तमीतत्पुरुष इह दुर्लभः । सुराष्ट्रब्रह्म इति न हि सौराष्ट्रत्वमाख्यातुमिष्यते किन्तु जानपदत्वम् । एवं शूरसेनब्रह्म इत्यादयोऽपि ॥ 'जानपदाख्यायां' किम् ? पाटलिपुत्रस्य ब्रह्मा पाटलिपुत्रब्रह्मा । पाटलिपुत्रमिति नगरं न जनपदः । देवानां ब्रह्मा देवब्रह्मा नारदः ॥

८०६ । कुमहद्भ्यामन्यतरस्याम् ॥ ५।४।१०५ ॥

दी— । आभ्यां ब्रह्मणो वा टच् स्यात् तत्पुरुषे । कुत्सितो ब्रह्मा कुब्रह्मः—कुब्रह्मा ।

ब्रह्मन् final in a तत्पुरुष optionally takes टच् if coming after कु or महत् । Thus कुब्रह्मा or कुब्रह्मः—a wicked Brahmana. For महत्

compounding in the sense महान् ब्रह्मा—a great Brahmana—we look forward.

मित—। 'ब्रह्मणः' इति वर्त्तते। ब्रह्मन्शब्देन कुशब्दस्य "कुगति—" (७६१—२।२।१८) इति समासः। महच्छब्दस्य तु "विशेषणं विशेष्येण—" (७२६—२।१।५७) इति। महान् ब्रह्मा इति विग्रहे—

८०७। आन्महतः समानाधिकरणजातीययोः ॥६।३।४६॥

**टी—। महत आकारः अन्तादेशः स्यात् समानाधिकरणे उत्तरपदे जातीये च परे। महाब्रह्मः—महाब्रह्मा। महादेवः। महाजातीयः॥ समानाधिकरणे किम्? महतः सेवा महत्सेवा।**

महत् will have its final letter changed into आ, i. e., महत् will become महा, if a collocative (समानाधिकरण) or the affix जातीयर् follows. Thus महाब्रह्मः or महाब्रह्मा—a great Brahmana, or the image of ब्रह्मन् in a श्मशान। Similarly महादेवः &c. Why say समानाधिकरणे? Witness महत्सेवा—the service of the great—with महत् unchanged.

मित—। 'जातीय' इति जातीयर् प्रत्ययो गृह्यते। "प्रकारवचने जातीयर्—" (२०२४—५।३।६९)। "अलुगुत्तरपदे—" (९५८—६।३।१) इत्यतः 'उत्तरपदे' इत्यधिक्रियते। तत्र 'समानाधिकरण' इत्यनेनैव सम्बध्यते न 'जातीय' इत्यनेन, असम्भवात्। तदाह 'समानाधिकरणे उत्तरपदे' इति॥ महाब्रह्म इति "श्मशानाद्यधिष्ठातो ब्रह्मा इति वा अर्थः। तत्रापि मूर्त्तिविशेषस्याया: तन्त्रेषु प्रसिद्धत्वात्" इति नागेशः॥

**टी—। लाक्षणिकं विहाय प्रतिपदोक्तः "सन्महत्—" (७४०—२।१।६१) इति समासो ग्रहीष्यते इति चेत् 'महाबाहुः' न स्यात्। तस्मात् "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य" इति परिभाषा नेह प्रवर्त्तते, समानाधिकरणग्रहणसामर्थ्यात्।**

The maxim "लक्षणप्रतिपदोक्तयोः—" here apparently requires that, when speaking of the समास of महत्, only *Samasas* enunciated by specifically mentioning ( प्रतिपदोक्त ) the word महत् are to be understood, and not such *Samasas* as are, in the ordinary course of the operation of a rule, available for महत् also (लाक्षणिक) without specific mention of महत् । In that case the समास of महत् here is to be that enunciated in "सन्महत्—" ( 740—2.1.61 ), But then समानाधिकरण, in the rule here, becomes superfluous ; for, the rule "सन्महत्—" is already enunciated as a समानाधिकरण समास । Consequently we must assume that the maxim "लक्षणप्रतिपदोक्तयोः—" does not apply to the present base. In other words, महत् here covers both kinds of cases, लाक्षणिक as well as प्रतिपदोक्त। Hence महान् बाहुरस्य is also subject to this rule and gives महाबाहुः। Had the maxim been allowed scope here also, the बहुव्रीहि form would have been महद्बाहुः ।

मित— । इह प्राप्तिर्द्विधा । एका सूत्रोक्तसामान्यलक्षणात् प्राप्तिः, या प्रकृते च अप्रकृते चास्ति । तद् यथा—महच्छब्दस्य समासप्रसङ्गे "षष्ठी" (७०२—२।२।८) इति महतः सेवा महत्सेवा इत्यत्र प्राप्नोति, परं वृक्षस्य शाखा वृक्षशाखा इत्यादिष्वपि । इयं नाम 'लाक्षणिकी' प्राप्तिः । द्वितीया तु प्राप्तिः प्रकृते एव वर्तते नान्यत्र । तद् यथा—"अर्धं नपुंसकम्" (७१२—२।२।२ ) इति अर्धपदमुक्त्वा विहितत्वात् तत्रैव प्राप्नोति नान्यत्र । इयञ्च 'प्रतिपदोक्ता' प्राप्तिः ॥ अथात्र यो महच्छब्दे पूर्वपदे समास उच्यते स लाक्षणिको वा प्रतिपदोक्तो वा? ननु प्रतिपदोक्त एव । "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य" इति परिभाषया उभयसम्भवे प्रतिपदोक्ता प्राप्तिर्गृह्यते न लाक्षणिकी ॥ तथा सति महतः सेवा महत्सेवा इत्यप्रसङ्ग एव आत्वस्य, असत्यपि 'समानाधिकरणग्रहणे' लाक्षणिकत्वादेव आत्वमत्र नैव भविष्यति । किञ्च महान् बाहुरस्य महाबाहुरिति लाक्षणिके बहुव्रीहौ, सत्यपि इह समानाधिकरण-

ग्रहणे, आत्वं न सिध्येत् । अत समाधिमाह 'लक्षणप्रतिपद—' इति परिभाषा नेह प्रवर्त्तते इति । आत्वविधिरेष लाक्षणिके प्रतिपदोक्ते च समासे तुल्यं प्रवर्त्तते इत्यर्थः । कुत एवमिति चेत् 'समानाधिकरणग्रहणसामर्थ्यात्' । अयमाशयः—प्रतिपदोक्ते एव चेदस्य प्रवृत्तिः स्यात् "सन्महत्—" (७४०) इति समास एव गृह्येत । स च समानाधिकरणे एव विहितः । तदिह पुनः 'समानाधिकरणग्रहणं' न स्यात् ॥

**टी— । 'आत्' इति योगविभागादात्वम्, "प्राग्एकादशभ्यः" —(१९९५—५।३।४९) इति निर्देशाद्वा—एकादश ।**

If आत् be separated ( योगविभाग ) from the rule "आन्महतः—" it will stand by itself as a rule meaning—"आ of the पूर्वपद may be allowed in a compound." This defends आ of एका in एकादश । Or we may defend this from निपातन in the rule "प्रागेका—" (1995—5.3.49 ).

मित— । उत्तरसूत्रविषयकमेतत् लिपिकरप्रमादादिहोपन्यस्तमिवाभाति । ननु यदि द्रष्टनीरेव आत्वं कथमेकादश इति ? उच्यते—"आन्महतः—" इत्यत्र 'आत्' इति योगविभागः कर्त्तव्यः । अथवा भाष्ये योगविभागो न दृश्यते इति चेदरुचिः "प्रागेकादशभ्यः—" इति निपातनादात्वमवेहि ॥ जातीयरमुदाहरति—

**टी— । महतीशब्दस्य "पुंवत् कर्मधारय—" (७४६—६।३।४२) इति पुंवद्भावे कृते आत्वम् । महाजातीया ।**

Attaching जातीयर् to महती by the rule "प्रकारवचने—" (2024—5.3.69 ). in the sense महत्याः प्रकार इव प्रकारो यस्याः we get महत् through पुंवद्भाव by 'पुंवत्—(746) ; and the महत् becomes महा yielding महाजातीया ।

मित—महत्याः प्रकार इव प्रकारो यस्याः इत्यर्थे महतीशब्दः प्रकारवत्यां वर्त्तते । ततः 'प्रकारवचने जातीयर्" (२०२४—५।३।६९) इति स्वार्थे

जातीयर् प्रत्ययः। प्रत्ययस्य उत्तरपदत्वाभावात् पृथग्वचनम् ॥ महती जातीयर् इति स्थिते पुंवद्भावः तत आत्वम्। इह 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषा न प्रवर्त्तते इति भाष्ये स्थितम्। तेन पुंवद्भावं व्युत्क्रम्य महतीशब्दस्यैव न आत्वम् ॥ प्रवृत्तायामप्यस्यां परिभाषायां जातीयरप्रत्यये न दोषः। तत्र हि "तसिलादिषु—" (८२६—६।३।३५) इति पुंवद्भावः, लिङ्गविशिष्टपरिभाषया पुनः "आन्महतः—" इति आत्वञ्च प्राप्नोति। परत्वात् आत्वेन पुंवद्भावस्य बाधः स्यात्। "पुंवत् कर्मधारय—" इति पुनर्जातीयरो ग्रहणात् स बाधो निवर्तेत। तेन प्रथमं पुंवत्पश्चाच्च "आन्महतः—" इत्यात्वम्। "सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव" इति नेह प्रवर्त्तते। गतिरेव न स्यात् कुतो विप्रतिषेधो बाधा वा? तदाह पुंवद्भावे कृते आत्वम्' इति ॥

दी—। "महदात्वे घासकरविशिष्टेषूसंख्यानं पुंवद्भावश्च" (वार्त्तिक)। असमानाधिकरणार्थमिदम्। महतो महत्या वा घासो महाघासः। महाकरः। महाविशिष्टः।

"The substitution of आ in महत् has to be enjoined when घास कर or विशिष्ट is the उत्तरपद, also there is पुंवद्भाव"। This is for cases where there is no collocation. Thus महाघासः in the sense—grass for the great. Similarly महाकरः meaning—the hand of the mighty, &c.

मित—। महाविशिष्टशब्दे महत्या विशिष्ट इति तृतीयान्तेन विग्रहः।

दी—। "अष्टनः कपाले हविषि" (वार्त्तिक)। अष्टाकपालः।

"अष्टन् takes the substitute आ when कपाल is the उत्तरपद and the reference is to sacrificial offerings." Thus अष्टाकपालः—an offering cooked in eight pans.

मित—। कपाले उत्तरपदे अष्टनः आत् स्यात् हविर्ष्ये द्योत्ये समासेन। अष्टसु कपालेषु संस्कृतः इत्यर्थे कर्त्तव्ये द्विगुः। ततो "द्विगोर्लुक—" (१०८०—४।१।८८) इत्यणो लुक् ॥ एतदपि उत्तरसूत्रसम्बद्धमेव ॥

टी—। "गवि च युक्ते" (वार्त्तिक)। गोशब्दे परे युक्त इत्यर्थे गम्ये अष्टन आत्वं स्यात्। अष्टागवं शकटम्। "अच् प्रत्यन्वव—" (२४३—६।३।७५) इत्यत्र 'अच्' इति योगविभागात् बहुव्रीहावपि अच्॥ अष्टानां गवां समाहारः अष्टगवम्। तद्युक्तत्वात् शकटमष्टागवमिति वा॥

"अष्टन् becomes अष्टा when गो is the उत्तरपद and the sense 'yoked' is implied." Thus अष्टा i.e.—A cart with eight oxen yoked on to it. Here we have a बहुव्रीहि in the sense अष्टौ गावः अस्मिन्। अच् comes in as a समासान्त by योगविभाग in the rule "अच् प्रति—" (943). Or, first derive अष्टगवम् by समाहार in the sense "a batch of eight oxen." Next transfer this epithet to the cart from the fact that this batch is yoked to it, and change अष्ट into अष्टा by this Varttika.

मित—। अस्यापि उत्तरसूत्रे एव प्रसङ्गः। 'उत्तरपदे' इत्यधिक्रियते, तदाह 'गोशब्दे परे' इति॥ इह प्रकरणे विशिष्य कश्चित् समासो नाधिकृतः, तत् तुल्या एव प्राप्तिर्यथा तत्पुरुषे तथा बहुव्रीह्यादिषु च। किञ्च समासान्तोऽपि यथा तत्पुरुषे टच् तथा बहुव्रीहौ अच् सुलभ एव। अष्टौ गावः अस्मिन् युक्ता इत्यर्थे बहुव्रीहौ अचि समासान्ते अष्टागवं शकटम्॥ योगविभागोऽयं वृत्तावुक्तो भाष्ये तु न दृश्यते इति व्याख्यानान्तरमाह 'समाहारः' इति। 'अष्टगवम्' इति द्विगुः। तदन्यथा यत् अष्टगवयुक्तं तत् यदा उच्यते तदा अनेन वार्त्तिकेन अष्टन आत्वे अष्टागवमिति॥

८०८। द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ॥६।३।४७॥

टी—। आत् स्यात्। द्वौ च दश च द्वादश, द्व्यधिका दश इति वा। द्वाविंशतिः। अष्टादश। अष्टाविंशतिः। 'अबहुव्रीह्यशीत्योः' किम्? द्वित्राः। द्व्यशीतिः॥

द्वि and अष्टन् take the substitute आ if a numeral is the उत्तरपद but not in a बहुव्रीहि or if अशीति follows. Thus द्वादश meaning—

'two and ten' or 'ten increased by two.' Similarly द्वाविंशति etc. Why say 'अबहु—'? Witness द्वित्राः without the transformation द्वा, because the compound is a बहुव्रीहि। Similarly द्व्यशीतिः does not change द्वि into द्वा।

मित—। द्विशब्दस्य अष्टन् शब्दस्य च आत् स्यात् संख्याशब्दे उत्तरपदे न तु बहुव्रीहौ न वा अशीतौ उत्तरपदे इत्यर्थः। द्वौ च दश च इति समाहारः। द्व्यधिका दश इति शाकपार्थिवादि। द्वाविंशतिः इत्यपि समाहारः। स्त्रीत्वं लोकात्। एवमन्यत्रापि॥ द्वौ वा त्रयो वा इति विग्रहे "संख्ययाव्यय—" (८४३—२।२।२५) इति बहुव्रीहिः। तत आत्वप्रतिषेधे "बहुव्रीहौ संख्येये—" (८५१—५।४।७३) इति डचि च द्वित्राः॥ एतदनन्तरं पूर्वसूत्रस्थम् "आदिति योगविभागात्—' इत्यादि, "अष्टनः कपालि—" इत्यादि च पाठ्यम्॥

दी—। "प्राक् शताद्वक्तव्यम्" (वार्त्तिक)। नेह—द्विशतम्। द्विसहस्रम्॥

"It should be noted that the उत्तरपद must be below a hundred." Thus द्विशतम् etc. do not change.

मित—। शतात् प्राक् या संख्या तस्मिन्नेवोत्तरपदे द्व्यष्टनोः प्रागुक्तमात्वं वक्तव्यमित्यर्थः। तेन शते उत्तरपदे न—द्विशतम्। द्वे शते इति विग्रहः॥ एवं द्विसहस्रम्॥

८०८। त्रेस्त्रयः ॥६।३।४८॥

दी—। त्रिशब्दस्य 'त्रयस्' स्यात् पूर्वविषये। त्रयोदश। त्रयोविंशतिः। बहुव्रीहौ तु त्रिदश त्रिदशाः, सुजर्थे बहुव्रीहिः। अशीतौ त्र्यशीतिः। 'प्राक् शतात्' इत्येव—त्रिशतम्। त्रिसहस्रम्॥

Under similar conditions त्रि becomes त्रयस्। Thus त्रयोदश etc. The change does take place in a बहुव्रीहि। Hence त्रिदशाः, which is a बहुव्रीहि involving the sense of the affix सुच्—

'three times ten', etc. thirty. With अशीतिः again we get त्र्यशीतिः without the change, The restriction 'below a hundred' also exists here ; thus त्रिशतम् &c.

मित—। 'त्रयोदश' इति सन्धिवेलादिषु पाठात् 'त्रयस्' इति सकारान्त आदेशः। 'पूर्वविषये' प्राक्शतीयायाम् अशीतिभिन्नायां संख्यायामुत्तरपदे अबहुव्रीहिविषये च॥ 'त्रयोदश' इति समाहारः, शाकपार्थिवादिकर्मधारयो वा॥ इत्तौ 'त्रिदंश' इति विग्रहवाक्यम्। 'त्रिः' इति सुजन्तः। त्रिरावृत्ता 'दश' इत्यर्थः। "संख्ययाव्यय—" (८४३—२।२।२५) इति बहुव्रीहिः। "बहुव्रीहौ संख्येये—" (८५१—५।४।७३) इति डच् समासान्तः। त्रिदशाः त्रिंशदित्यर्थः। समासेनैव सुच्प्रत्ययस्य अर्थं उक्त इति इत्तौ सुच् न दृश्यते, शुद्ध एव त्रिशब्द उपलभ्यते। तदाह 'सुजर्थे बहुव्रीहिः' इति॥

८१०। विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ॥६।३।४९॥

टी—। द्व्यष्टनोस्त्रेश्च प्रागुक्तं वा स्यात् चत्वारिंशदादौ परे। द्विचत्वारिंशत्—द्वाचत्वारिंशत्। अष्टचत्वारिंशत्—अष्टाचत्वारिंशत्। त्रिचत्वारिंशत्—त्रयश्चत्वारिंशत्। एवं पञ्चाशत्षष्टिसप्ततिनवतिषु॥

The change in द्वि, अष्टन् and त्रि, as noted above, is optional if the उत्तरपद is a numeral from चत्वारिंशत् onwards. Thus द्विचत्वारिंशत् or द्वाचत्वारिंशत् etc. Similarly with पञ्चाशत्, षष्टि, सप्तति and नवति।

मित—। 'प्रागुक्तम्' इति द्व्यष्टनोरात्वं त्रेश्च त्रयस्। 'चत्वारिंशदादिः' इह प्राक्शतीया संख्या। तत्र चत्वारिंशत्, पञ्चाशत्, षष्टिः, सप्ततिः, नवतिश्च। अशीतौ तु प्रतिषिद्धो विकारः॥

८११। एकादिश्चैकस्य चादुक् ॥६।३।७६॥

टी—। एकादिर्नञ् प्रकृत्या स्यात् एकस्य चादुगागमश्च। नञो विंशत्या समासे कृते एकशब्देन सह 'तृतीया' इति योग-

**विभागात् समासः। अनुनासिकविकल्पः। एकेन न विंशति एकान्नविंशतिः—एकाद्नविंशतिः एकोनविंशतिरित्यर्थः॥**

नञ् stands unchanged coming after एक, and एक then takes the augment अदुक् or आदुक् ( अद् )। Thus, with the exposition एकेन न विंशतिः we first compound न and विंशतिः into नविंशतिः with नञ् unchanged ; next एकेन is compounded with it by योगविभाग of तृतीया in the rule "तृतीया तत्कृत—" ( 692—2.1.30 ). Eliding the सुप् and changing एक into एक अद् or एक आद् we get एकाद्नविंशतिः। This optionally changes द् into न् by "यरोऽनु—" (116—8.4.45) ; hence the additional form एकान्नविंशतिः meaning एकोनविंशतिः, etc., nineteen.

मित—। "नलोपो नञः" ( ७५६—६।३।७३ ) इत्यतो 'नञः' इत्यनुवृत्तं "नभ्राड्—" (७५८—६।३।७५) इत्यत्र 'नञ्' इति प्रथमया विपरिणतम्। तत्तस्मादेव 'प्रकृत्या' इत्यप्यनुवृत्तम्। एताभ्यां सह 'एकादिश्च नञ् प्रकृत्या' इत्याद्यन्वयो लभ्यते। आगमस्तु 'अदुक्' इति वृत्तिकारः, 'आदुक्' इति हरदत्तः। उभयत्र दीर्घे एकादेशे 'एकाद' इति रूपम्। अदुकि "अतो गुणे" (१९१—६।१।९७) इति न प्रवर्तते, पदत्वादेकशब्दस्य॥ 'एकेन' इति हेतौ तृतीया। तस्य समासो न विहितः। तत्र आह 'योगविभागात् समास' इति। "तृतीया तत्कृत—" (६९२—२।१।३०) इति सूत्रे योगविभागः इत्याशयः। अस्य तु योगविभागस्य भाष्ये अदर्शनात् सुप्सुपा मयूरव्यंसकादिर्वेति युक्तम् इति नागेशः॥ "यरोऽनु—" ( ११५—८।४।४५ ) इति 'अनुनासिकविकल्पः'॥

**टो—। "षष उत्वं दतृदशधासूत्तरपदादेः ष्टुत्वञ्च धासु वेति वाच्यम्" ( वार्त्तिक )। षोडन्। षोडश। षोढा—षड्धा॥**

"With दतृ, दश and धा following, षष् changes its final into उ and the द or ध changes into ड or ढ, but this is optional

with धा"। Thus षोडन्—having six teeth, षोडश—sixteen, षोढा or षड्धा—in six ways.

मित—। 'दत्' इति दन्तशब्दस्य "वयसि दन्तस्य—" (८८०—५।४।१४१) इत्यादेशः। ऋकार इत्। दत् इति स्थितम्। धा इति प्रत्ययः, अतएव नानाधिकरणवाचित्वाद्बहुत्वे 'धासु' इति बहुवचनम्। 'टु' इति टवर्गः॥ तेन—दद्दशधासु परतः षष उत्वं भवति, उत्तरपदस्य च आदिवर्णः तस्य च टवर्गादेशो भवति। धाप्रत्यये परे तु विकल्पः—इत्यर्थो लभ्यते। इह त्रीणि वाक्यानि, आद्ये उत्वं विधीयते, द्वितीये टवर्गः, तृतीये विकल्पः। उत्वं षषः, टुत्वमुत्तरपदादेः। परं 'धा' इति प्रत्ययः, न उत्तरपदम्, तेन प्रथमयोर्वाक्ययोः 'धा' इत्यस्य टुत्वं न विधीयते, षष उत्वे 'धा' इत्यपि निमित्तम् इत्येतावदेव उच्यते। तत्तु निमित्तं परवर्तिन्या 'धासु वा' इत्यनया सप्तम्यापि कथ्यते। तत् 'दद्दशधासु इत्यत्र 'धासु' इति व्यर्थम्॥ वस्तुतस्तु वार्त्तिकमिदं लिपिकरैरन्यथापादितमिव भाति। भाष्ये तु "षष उत्वं दद्दशसूत्तरपदादेष्टुत्वञ्च" इत्येकं वार्त्तिकम्, "धासु वेति वक्तव्यम्" इति द्वितीयम्। तत्र प्रथमात् 'उत्वम्' 'टुत्वम्' इति द्वयमपि अनुवर्त्तते परेण च सम्बध्यते। तेन धासु उत्वं चेत् टुत्वमपि, न चेदुत्वं नापि टुत्वम्। आद्ये षष् धा इत्युत्वे षउ धा, टुत्वे षउ ढा, षोढा। द्वितीये षष् धा इति जश्त्वे षड्धा इति॥ एतच्च हरदत्तानुरोधेन। कैयटस्तु उत्वाभावेऽपि टुत्वमिच्छति। तन्मते षड्ढा इति द्वितीये रूपम्। नागेश आह—"कैयटोक्तं युक्तं भाष्येऽपि 'षड्ढा' इत्येव पाठस्य प्रायेणोपलम्भात्"। 'प्रायेण' इत्युच्यते तन्नहि षड्ढा इति सार्वत्रिकः पाठः, क्वचित् षड्धा अपि दृश्यते। किञ्च नायमस्ति नियमः यत् प्रायिकमेव आदेयं हेयमेव कादाचित्कमिति। एकोऽपि ग्रन्थः सुलिखितः शतादपि विशिष्यते दुर्लिखितेभ्यः। तन्मन्ये हरदत्तोक्तमेव न्याय्यम्॥ षट् दन्ता अस्य इति विग्रहे "वयसि—" इति दत्रादेशे, षष्शब्दस्य उत्वे षोभावे दकारस्य डकारे षोडत् इति प्रातिपदिकम्। सुपि षोडन्॥ षट् च दश च इति षडधिका दश इति वा विग्रहे षोडश॥

८१२। परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः॥२।४।२६॥

दी—। एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्द्धपिप्पली ॥

The gender of द्वन्द्व and तत्पुरुष compounds is that of the final member. Thus कुक्कुट etc.

मित—। समाहारस्य नपुंसकलिङ्गता विहिता। तदिह 'द्वन्द्व' इति इतरेतरयोगो गृह्यते। तस्य उभयपदार्थप्रधानत्वात् भिन्नलिङ्गयोः समासे लिङ्गमनियतं भवति। तदिह लिङ्गं परवत् स्यात् इति नियम्यते। कुक्कुटमयूर्यौ मयूरीकुक्कुटौ इत्येक एवार्थः। तथापि परपदमाश्रित्य लिङ्गं भिद्यते॥ तत्पुरुषस्तु उत्तरपदार्थप्रधानः, तेन वृक्षशाखा इत्यादिषु विनापि वचनेन स्त्रीत्वादिकं लभ्यते एव। एकदेशितत्पुरुषे तु पूर्वपदार्थप्रधानतया पूर्ववल्लिङ्गे प्राप्ते परवल्लिङ्गता विधीयते। तदुदाहरति अर्द्धपिप्पलीति॥ अतिप्रसङ्गं निरस्यति—

दी—। "द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वाच्यः" (वार्त्तिक)। पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः। प्राप्तो जीविकां प्राप्तजीविकः। अलं कुमार्य्यै अलंकुमारिः। अतएव ज्ञापकात् समासः। निष्कौशाम्बिः।

"This should be prohibited in द्विगु compounds, compounds withe प्राप्तः आपन्न and अलम् leading, and in गतिसमास। Thus पञ्चकपाल is not neuter with कपाल, but has the gender of the विशेष्य। Similarly प्राप्त etc. आपन्न etc. The compound अलंकुमारिः in the sense "master of the girl" is sanctioned by this very *Varttika*, and is masculine. Likewise निष्कौशाम्बि is in the masculine.

मित—। 'द्विगु' इति "तद्धितार्थ—" (७२८—२।१।५१) इत्यनेन समासः। 'प्राप्तापन्न' इति "प्राप्तापन्ने च—" (७१५—२।२।४) इति समासः। 'अलंपूर्व' इति न केनचित् सूत्रेण विहितः समासः, तदाह 'अतएव' अस्मादेव वार्त्तिकात् 'ज्ञापकात् समासः'। निषेधसामर्थ्यात् अस्ति समास इत्यर्थः। 'गतिसमास' इति गतेः

समासो येन इति बहुव्रीहिणा "कुगति—" (७६१—२।२।१८) इति सूत्रस्थः प्रादिसमासः ॥ एषु परवल्लिङ्गता न भवति इत्यर्थः। तेन प्राधान्येन विवक्षितो योऽर्थः तदनुगतमेषु लिङ्गमिति फलितम्। न्यायसिद्धमेतन्न वचनमापेक्षमित्यपेक्षितं वार्त्तिकमिदं भष्ये। सूत्रञ्च "परवल्लिङ्गं द्वन्द्वे कर्दमिनोः" इत्येवं कर्त्तव्यमित्याकम् ॥

## ८१३। पूर्ववदश्ववड़वौ ॥२।४।२७॥

दी—। द्विवचनमतन्त्रम्। अश्ववड़वौ। अश्ववड़वान्। अश्ववड़वैः।

The gender of अश्ववड़वौ is that of the first member in the compound. The duality is not essential. Thus अश्ववड़वौ etc.—the horse and the mare etc.—all in the masculine because अश्व is masculine.

मित—। अश्वश्च वड़वा च इति विग्रहे "विभाषा वृक्ष—" (९१६—२।४।१२) इति वैकल्पिक एकवद्भावः। तस्य तु "स नपुंसकम्—" (८२१—२।४।१७) इति नपुंसकत्वम्। पक्षे एकवद्भावाभावे अश्ववड़वौ इति पुंसि। परवल्लिङ्गतापवादः। 'द्विवचनमेव तन्त्र' मास्तम् इति न मन्तव्यम्। अश्वाश्च वड़वाश्च इति विग्रहेऽपि पक्षे इतरेतरयोगे अश्ववड़वाः इति पुंसि भवति। तान् अश्ववड़वान् पुंस्त्वप्रदर्शनार्थं शसि रूपं न्यस्तम्, जसि तु स्त्रीपुंसयोरेकरूपता ॥ अश्ववड़वौ इति प्रथमायां द्वितीयायामपि भवति। एतेन प्रथमाद्वितीययोरेव विधिः इति न भ्रमितव्यम्। तृतीयादिष्वपि भवति, तदाह अश्ववड़वैः इति ॥

## ८१४। रात्राह्नाहाः पुंसि ॥२।४।२९॥

दी—। एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव। अनन्तरत्वात् परवल्लिङ्गतापवादोऽप्ययं परत्वात् समाहारनपुंसकतां बाधते। अहोरात्रः। रात्रेः पूर्वभागः पूर्वरात्रः। पूर्वाह्णः। द्व्यहः।

द्वन्द्व and तत्पुरुष compounds ending in रात्र, अह्न and अह, with the समासान्त affixes अच् and टच् attached, are in the masculine.

This restriction coming immediately after "परवल्लिङ्गम्—" (812—2.4.26) supersedes that rule and, being subsequent, also bars the neuter enjoined of समाहार compounds. Thus अहोरात्रः ( द्वन्द्व ), पूर्वरात्रः ( तत्पुरुष ), पूर्वाह्णः ( तत्पुरुष ), द्व्यहः ( समाहार )।

मित—। रात्रिशब्दान्तात् तत्पुरुषात् द्वन्द्वाच्च समासान्ते अचि कृते क्वचित् समासाङ्गस्य 'रात्र' इति रूपं भवति, अहन्शब्दान्तात् तत्पुरुषात् टचि 'अह्न' इति 'अह' इति वा। तदा तु समासः पुंसि प्रयुज्यते। परवल्लिङ्गतायां रात्रान्तस्य स्त्रीत्वे अहन्नन्तस्य च क्लीबत्वे प्राप्ते इदं वचनम्। तदाह 'परवल्लिङ्गतापवादोऽयम्' इति॥ किञ्च द्व्यहः इत्यादिषु समाहारविषयेषु "स नपुंसकम्" (८२१—२।४।१७) इति नपुंसकत्वम् अनेन च पुंस्त्वमिति विप्रतिषेधः प्रसज्यते। ततो "विप्रतिषेधे परम्—" ( १७५—१।४।२ ) इतिपरवर्तित्वादस्य सूत्रस्य पुंस्त्वमेव भवति। तदाह 'अयं परत्वात् समाहारनपुंसकतां बाधते' इति॥ अहोरात्र इति द्वन्द्वः। "अहः सर्वैक—" ( ७८७—५।४।८७ ) इत्यच्॥ पूर्वरात्र इति एकदेशितत्पुरुषः, प्राग्वदच्॥ पूर्वाह्ण इत्यप्येकदेशिसमासः। "राजाहः—" (७८८—५।४।९१) इति टच्। "अह्नोऽह्नः—" (७९०—५।४।८८) इत्यह्नादेशः॥ द्व्यह इति समाहारः। टच्। "न संख्यादेः—" ( ७९२—५।४।८९ ) इति अह्नादेशो न। इह 'द्व्यह' इति समुदायः अकारान्तः, उत्तरपदन्तु अह् इति हान्तमेव। तेन "अकारान्तोत्तरपदो द्विगुः—" ( ८२१ वा ) इति स्त्रीत्वं न भवति इति नागेशः। पं प्रचिन्तमिवैतद्भाति। अकारोऽयमुत्तरपदस्य अन्तः इति पक्षेऽपि परत्वादनेन पुंस्त्वमेव स्यात्॥

**दी—। "संख्यापूर्वं रात्रं क्लीबम्" (वार्त्तिक)। द्विरात्रम्। त्रिरात्रम्। गणरात्रम्।**

रात्र preceded by a संख्या in a तत्पुरुष is neuter. Thus द्विरात्रम् etc. These are all समाहार द्विगु। गण is a संख्या by "बहुगण—" ( 258—1.1.23 ).

मित—। 'संख्या पूर्वं' पूर्वपदं यस्मिन् तादृशं 'रात्रं' रात्रान्तस्तत्पुरुषः इत्यर्थः 'क्लीबम्'। 'रात्रम्' इति तदन्ततत्पुरुषे लक्षणा। समाहारे द्विरात्रमित्यादयः। "बहु-

गणवत्तु—" ( १५८—२।१।२३ ) इति गणशब्दोऽपि संख्या। गणानां रात्रीणां समाहार इति विग्रहः ॥

८१५। अपथं नपुंसकम् ॥ २।४।३० ॥

दी—। तत्पुरुषः इत्येव। अन्यत्र तु अपथो देशः। कृतसमासान्तनिर्देशान्नेह—अपन्थाः।

The compound अपथ is neuter. This is in a तत्पुरुष only. Witness अपथो देशः—a country without a good road—where the बहुव्रीहि has the gender of the corresponding विशेष्य। The enunciation being with a समासान्त attached, the optional form अपन्थाः, without a समासान्त, is masculine by "परवल्लिङ्गम्—" ( S12—2. 4. 26 ).

मित—। अपथम् इति तत्पुरुषो नपुंसकं स्यात्। 'तत्पुरुषः' इत्यनुवृत्तिलभ्यम्। "परवल्लिङ्गम्—" ( ८१२ ) इत्यतो 'द्वन्द्वतत्पुरुषयोः' इत्यनुवर्तते। असम्भवात् 'द्वन्द्व' इति नेह सम्बध्यते। 'तत्पुरुष' इति च प्रथमया विपरिणम्यते। तदाह 'तत्पुरुष इत्येव' इति ॥ अपथः इति बहुव्रीहिः। "ऋक्पू:—" ( ९००—५।४।७४ ) इति अप्रत्ययः समासान्तः। विशेष्यलिङ्गः। न पन्थाः इति विग्रहे "पथो विभाषा" ( ९५७—५।४।७२ ) इति समासान्ताभावे "परवल्लिङ्गम्—" ( ८१२ ) इति पथिन् शब्दस्य पुंस्त्वात् पुंस्त्वं अपन्थाः ॥

८१६। अर्धर्चाः पुंसि च ॥ २।४।३१ ॥

दी—। अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः। अर्धर्चः—अर्धर्चम्। ध्वजः—ध्वजम्। एवं तीर्थशरीरमण्डपीयूषदेहाङ्कुशकलशेत्यादि।

Words the अर्धर्चादि class are both masculine and neuter. Thus अर्धर्चः—अर्धर्चम् with the समासान्त affix अ attached. Similarly ध्वजः—ध्वजम्। So are तीर्थ etc.

मित—। अर्धम् ऋचः अर्धर्चः अर्धर्चं वा इत्येकदेशिसमासः। "ऋक्पू—"

( ८४०—५।४।७४ ) इति समासान्तः अ-प्रत्ययः। "परवल्लिङ्गम्—" ( ८१२—२।४।२६ ) इति नित्यस्त्रीत्वे प्राप्ते वचनम् ॥ अर्धर्चाः इति आद्यर्थे बहुवचनम्। अर्धर्चाः अर्धर्चादिगणे पठिताः शब्दा इत्यर्थः ॥

८१७। जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् ॥१।२।५८॥

दी—। एकोऽप्यर्थो वा बहुवद्भवति। ब्राह्मणाः पूज्याः—ब्राह्मणः पूज्यः।

In speaking of a class, the plural may be optionally used though the class is but a single object. Thus ब्राह्मणाः etc.

मित—। ब्राह्मणत्वं क्षत्रियत्वमित्यादिकं जातिः। सा च एकैव इति नित्यं व्यक्तिशब्दात् भावप्रत्ययान्तादेकवचनेन आख्यायते। यदा तु विनैव भावप्रत्ययं तस्याः 'जातेः' ब्राह्मणत्वादेः 'आख्या' आख्यानं कथनमिष्यते तदापि जातेरेकत्वादेक-वचनेनैव कथनं न्याय्यम्। बहुवचनस्यापि साधुत्वार्थमाह 'एकस्मिन्' जातिरूपे अर्थे अन्यतरस्यां विकल्पेन 'बहूनाम्' अर्थानां 'वचनम्' उक्तिः कथनं स्यात्। तदाह 'एकोऽप्यर्थो वा बहुवत्' इति। यद्वा—एकम् एकत्वम्। एकस्मिन् एकत्वे अपि बहुवचनं वा स्यादित्यर्थः। तेन वैकल्पिकं बहुवचनं लभ्यते ॥ विशेषणानामपि भवति अतः अनुप्रयोगः 'पूज्याः' 'पूज्यः' इति ॥

८१८। अस्मदो द्वयोश्च ॥ १।२।५९ ॥

दी—। एकत्वे द्वित्वे च विवक्षिते अस्मदो बहुवचनं वा स्यात्। वयं ब्रूमः। पक्षे अहं ब्रवीमि—आवां ब्रूवः इति वा।

The word अस्मद् takes the plural optionally when speaking of one person or two. Thus वयं ब्रूमः etc. Or again आवां ब्रूवः।

मित—। पूर्वसूत्रात् 'बहुवचनमन्यतरस्याम्' इत्यनुवर्तते। 'द्वयोः' अर्थयोः बहुवचनं वा इत्यर्थो भवति। 'च' इत्यनेन 'एकस्मिन्' इति समुच्चीयते। तदाह 'एकत्वे द्वित्वे च' इत्यादि ॥ 'आवां ब्रूवः' इत्यर्थे 'वयं ब्रूमः'। पक्षे सोऽपि भवति। एवम् 'अहं ब्रवीमि' इत्यर्थे 'वयं ब्रूमः' इत्यादि ॥

दी—। "अविशेषणस्य प्रतिषेधः" (वार्त्तिक)। पटुरहं ब्रवीमि।

The plural is prohibited if अस्मद् is qualified. Thus पटुः etc.—I, an expert, say so.

मित—। विशेषणान्वितस्य अस्मच्छब्दस्य प्रागुक्तं न स्यात् इत्यर्थः। "अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलञ्चात्मनः", "त्वंराज्ञा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः" इत्यादिषु विशेषणस्य विधेयत्वकल्पनया बहुत्वं सिध्यति इति हरदत्तादयः। नागेशस्तु तत्राप्यसिद्धिं मन्यमानः "अस्मच्छब्दस्य स्वघटिते समुदाये लक्षणा" इत्याह॥

८१८। फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे॥ १।२।६०॥

दी—। द्वित्वे बहुत्वप्रयुक्तं कार्य्यं वा स्यात्। पूर्वे फल्गुन्यौ—पूर्वाः फल्गुन्यः। पूर्वे प्रोष्ठपदे—पूर्वाः प्रोष्ठपदाः। 'नक्षत्रे' किम्? पूर्वे फल्गुन्यौ माणविके।

फल्गुनी and प्रोष्ठपदा optionally take the plural for dual while each means two stars. Thus पूर्वे etc. Why say नक्षत्रे? Witness पूर्वे etc.—The first two female children born with the moon in the Phalguni star—which does not allow the plural.

मित—। 'बहुवचनमन्यतरस्याम्' इत्यनुवर्त्तते। 'च' इति चकारेण पूर्वसूत्रात्, 'द्वयोः' इत्यनुकृष्यते॥ फल्गुनीति प्रोष्ठपदेति च प्रत्येकं नक्षत्रयुगलस्य आख्या। फल्गुनी च प्रोष्ठपदे च फल्गुनीप्रोष्ठपदाः। तासाम्। 'द्वयोः' इत्यपेक्षया षष्ठी। ततः 'फल्गुनीप्रोष्ठपदानां द्वयोः' अर्थयोः 'बहुवचनमन्यतरस्यां' वा भवति 'नक्षत्रे' ज्योतिषि अभिधेये इत्यर्थो जायते। नागेशस्तु 'नक्षत्रे' इति प्रथमाद्विवचनं मत्वा 'नक्षत्रे यद्यभिधीयेते' इत्येवं व्याचष्टे॥ द्वित्वाश्रयं द्विवचनं न्याय्यम्, अनेन तु बहुवचनमपि भवति। तदाह 'द्वित्वे बहुत्वप्रयुक्तं कार्य्यम्' इति॥ 'पूर्वाः फल्गुन्यः' इति द्वे तारके 'पूर्वाः प्रोष्ठपदाः' इति च॥ फल्गुनीभ्यां नक्षत्राभ्यां युक्तः कालः इति 'नक्षत्रेण—" (१२०४—४।२।३) इत्यण्। "लुबविशेषे" (१२०५—४।२।४) इति लुप्। "लुपि

शुक्रवत्—" ( १२६४—१।२।५१ ) इति द्विवचने फल्गुन्यौ कालः । माणविके इति द्वे कन्यके । ते च कन्यके फल्गुनीजाते इति "फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ" ( १४०८, वा ) इति टः । तस्य च "श्रविष्ठाफल्गुनी—" (१४०७—४।३।३४) इति लुक् । "टिड्ढाणञ्—" ( ४७०—४।१।१५ ) इति ङीप् । तेन सिद्धं 'फल्गुन्यौ' इति माणविकाविशेषणम् । इह बहुत्वं न भवति ॥

८२० । तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ॥ १।२।६३ ॥

दो— । बहुत्वं द्वित्ववद्भवति । तिष्यश्च पुनर्वसू च तिष्यपुनर्वसू । 'तिष्य—' इति किम् ? विशाखानुराधाः । 'नक्षत्र—' इति किम् ? तिष्यपुनर्वसवो माणवकाः ।

A द्वन्द्व compound of तिष्य and पुनर्वसु, though with a plural idea, always takes the dual. Thus, तिष्य is a single star and पुनर्वसु a double star ; their द्वन्द्व gives a plural idea, but it is तिष्यपुनर्वसू in the dual. Why say तिष्य etc. ? Witness विशाखा etc. in the plural. Why say नक्षत्र etc. ? Witness तिष्य etc.—children born some when the moon is in the तिष्य star and some when it is in the पुनर्वसु stars—in the plural as expected.

मित— । तिष्य इत्येका तारा पुंसि पुनर्वसु इति द्वे पुंस्येव । सूत्रे तु अनुकरणशब्दौ । तयोर्द्वन्द्वे तिष्यश्च पुनर्वसुश्च तिष्यपुनर्वसू, तयोः । नक्षत्राणां नक्षत्रवाचिनां द्वन्द्वः नक्षत्रद्वन्द्वः । तिष्यपुनर्वस्वोर्यो नक्षत्रद्वन्द्वः तस्मिन् न्यायप्राप्तस्य बहुवचनस्य नित्यं द्विवचनं भवति इत्यर्थः । तदेवाह 'बहुत्वं द्वित्ववद्भवति' इति ॥ द्वन्द्वे कृते तिसृणां ताराणां बोध इति बहुत्वेऽपि द्विवचनं नित्यं 'तिष्यपुनर्वसू' इति । 'तिष्य—' इत्युच्यते, अन्येषां तु यथा बोधस्तथा वचनम् । तथाहि विशाखे इति द्वे तारे, अनुराधाः इति तिस्रः द्वन्द्वे बहुत्वे बहुवचनमेव ॥ नक्षत्रवाचिनां द्वन्द्वे एव । यदा तु फल्गुनीशब्दवत् (८१९) अर्थान्तरे वर्तमानयोर्द्वन्द्वः तदा बहुवचनमेव । तथाः च—तिष्ये च नक्षत्रे युक्तः कालस्तिष्यः । तत्र जाता इति "सन्धिवेलादि—"

(१२८७—४।३।१६) इत्यण्। तस्य लुकि तिष्या माणवकाः। पुनर्वसुभ्यां नक्षत्राभ्यां युक्तः कालः पुनर्वसुः। तत्र जाताः पुनर्वसवो माणवकाः। तिष्याश्च पुनर्वसवश्च तिष्यपुनर्वसवो माणवकाः॥

८२१। स नपुंसकम् ॥ २।४।१७ ॥

दी—। समाहारे द्विगुर्द्वन्द्वश्च नपुंसकं स्यात्। परवल्लिङ्गापवादः। पञ्चगवम्। दन्तोष्टम्।

द्विगु and द्वन्द्व compounds implying समाहार are in the neuter. This bars the rule "परवल्लिङ्गं—" (812—2. 4. 26). Thus पञ्च etc—a collection of five oxen, &c.

मित—। 'सः' इति कः? 'यस्य एकवचनं विहितं सः इति एकवचनप्रकरणात्लभ्यते। कस्य च एकवचनं विहितम्? "द्विगुरेकवचनम्" (७३१—२।४।१) इति द्विगोः, "द्वन्द्वश्च—" (९०६—२।४।२) इत्यादिभिर्द्वन्द्वस्य च। तच्च समाहारे एव। तदाह 'समाहारे—' इत्यादि॥ पञ्चानां गवां समाहार इति टच् समासान्तः (७२९—५।४।९२)॥

दी—। "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" (वार्त्तिक)। पञ्चपूली।

A द्विगु, with an अकार final in its last member, is in the feminine. Thus पञ्च etc.—a collection of five pans or bundles of hay &c.

मित—। द्विगु समाहारद्विगुः। पूली भाजनविशेषः तृणगुच्छो वा। पञ्चानां पूलानां समाहारः इति वाक्ये समासे अनेन स्त्रीत्वे "द्विगोः" (४७९—४।१।२१ इति) ङीपि पञ्चपूली॥ अकार इति ह्रस्वदीर्घयोरुभयोरपि ग्रहणम्। तेन भुवं पातीति भूपाः कर्तरि क्विप्। पञ्चानां भूपां समाहारः पञ्चभूपी॥

दी—। "आबन्तो वा" (वार्त्तिक)। पञ्च खट्वी—पञ्चखट्वम्।

A द्विगु ending in आप् in its last member is optionally in the feminine. Thus पञ्चखट्वी (feminine) or पञ्चखट्वम् (neuter).

मित—। आबिति स्त्रियां विहितष्टाप्प्रत्ययः। टाबन्तोत्तरपदो द्विगुः समाहारे स्त्रियां वा स्यात्। पक्षे सूत्रेणैव नपुंसकम्। खट्वाशब्दस्य उपसर्जनह्रस्वः॥

दी—। "अनो नलोपश्च वा च द्विगुः स्त्रियाम्" (वार्त्तिक)। पञ्चतक्षी—पञ्चतक्षम्।

A द्विगु ending in अन् in its final member drops the न् and then it is optionally in the feminine. Thus पञ्च etc.

मित—। अनः इति अन्नन्तोत्तरपदस्य द्विगोः॥

दी—। "पात्राद्यन्तस्य न" (वार्त्तिक)। पञ्चपात्रम्। त्रिभुवनम्। चतुर्युगम्।

A द्विगु ending with a word of the पात्रादि class is not in the feminine. Thus पञ्च etc.

मित—। 'द्विगुः स्त्रियाम्' इत्यनुवर्त्तते, तत्र द्विगुरिति च षष्ठ्या विपरिणम्यते। 'विधिः' इत्यध्याहार्यम्। तेन 'पात्राद्यन्तस्य द्विगोः स्त्रियां न विधिः' इत्यन्वयो लभ्यते। एवं स्त्रीत्वे प्रतिषिद्धे सूत्रेण नपुंसकं भवति। पात्रादिराकृतिगणः प्रयोगतोऽनुसर्त्तव्यः॥

दी—। "पुण्यसुदिनाभ्यामह्नः क्लीवतेष्टा" (वार्त्तिक)। पुण्याहम्—सुदिनाहम्।

A तत्पुरुष, with पुण्य and सुदिन leading and having अहन् as final, is in the neuter. Thus पुण्य etc., in supercession of "रात्राह्न—" (814—2. 4. 29).

मित—। सुदिनशब्दः प्रशस्तवाची। 'तत्पुरुष' इति प्रकरणाल्लभ्यम्। पुण्यशब्दात् सुदिनशब्दाच्च परो यः अहन्शब्दः तदन्तस्य तत्पुरुषस्य क्लीवता इष्यते इत्यर्थः। "रात्राह्न—" (८१४—२।४।२९) इत्यस्यापवादोऽयम्॥

दो—। "पथ: संख्याव्ययादे:" (वार्त्तिक)। संख्याव्ययादे: पर: कृतसमासान्त: पथशब्द: क्लीबमित्यर्थ:। त्रयाणां पन्थास्त्रिपथम्। विरूप: पन्था विपथम्। कृतसमासान्तनिर्देशान्नेह—सुपन्था:, अतिपन्था:।

पथ, with the समासान्त attached, being the last member of a तत्पुरुष in which a numeral or an indeclinable leads, is in the neuter. Thus त्रिपथम्—passage for three ; विपथम्—rugged way. सुपन्था: and अतिपन्था: meaning 'a fine road' are in the masculine by "परवल्लिङ्गम्—" (812—2. 4. 36) because no समासान्त is attached.

मित—। तत्पुरुष' इति प्रकरणाल्लभ्यम्। 'पथ' इति कृतसमासान्तस्य तत्पुरुषस्य परार्द्धस्यानुकरणम्। प्रथमान्तम्। 'संख्याव्ययादे:' इति पञ्चमी। तदाह 'संख्याव्ययादे:, पर:' इत्यादि। परवल्लिङ्गतापवाद:॥ सुपन्था: इत्यत्र "न पूजनात्" (९५४—५।४।६९) इति समासान्तप्रतिषेध:। पूजनं प्रशंसा तच्च स्वतिभ्यामेव॥ तत्पुरुष एव, नेह—विपथा नगरी॥

दो—। "सामान्ये नपुंसकम्"। मृदु पचति। प्रात: कमनीयम्।

Reference in general terms ( without an eye to any particular gender ) should be in the neuter. Thus मृदु etc.—cooks gently ; प्रात: etc.—desirable in the morning.

मित—। सामान्य' लिङ्गविशेषनिरपेक्षम्। तादृशं यदि किञ्चिदुच्यते तत् नपुंसकलिङ्गेन वक्तव्यम् इत्यर्थ:। एतच्च न्यायसिद्धस्यार्थस्य अनुवाद:, न विधि:। तत् वार्त्तिकमेतदिति न मन्तव्यम्। "न्यायसिद्धमेतत्, विशेष्यविशेषणसन्निधाने लिङ्गसर्वनाम्नो नपुंसकस्य न्याय्यत्वात्...दाक्षिणायनेति सूत्रे भाष्ये स्पष्टम्" इति नागेश:॥ 'मृदु पचति' इत्यत्र मृदुता पाकधर्म:। तत् 'मृदु' इति क्रियाविशेषणम्॥ ननु 'क्रिया' इति स्त्रीलिङ्गम्। तत् 'मृद्वीं' पचति' इत्यस्तु। मान्नु—इह क्रिया' इत्येव विशेष्यम् इति नास्ति नियम:। 'कर्म', 'पाक:', 'पक्ति:', पचनम्' इत्याद्यपि

स्यात् । तदेवं वस्तुविशेष्यसम्भवे विशेष्यविशेषस्य अनुक्तौ नपुंसकत्वे सिद्धे 'मृदु पचति' । भवतु नपुंसकम्, कथं पुनः कर्मत्वम् ? प्रवृत्ते पाके व्यापारजनितः फलांश इह 'मृदु' इत्यभिधीयते, तेनास्य कर्मता ॥ 'प्रातः कमनीयम्' इत्यत्र 'कमनीय' इति विशेषणस्य विशेष्ये अनिर्दिष्टे प्राग्वत् सामान्ये नपुंसकम् ॥

## ८२२ । तत्पुरुषोऽनञ्कर्मधारयः ॥ २।४।१९ ॥

दी— । अधिकारोऽयम् ।

What follows relates to तत्पुरुष compounds except नञ्तत्पुरुष and कर्मधारय ।

मित— । इत उत्तरम् 'अनञ्कर्मधारयः' नञ्कर्मधारयवर्जितः 'तत्पुरुष.' इत्येतदनुवर्त्तते । यदतः परमुच्यते षट्सु सूत्रेषु. तत् तत्पुरुषसमासे वेदितव्यम् । न तु नञ्तत्पुरुषे कर्मधारये वा इत्यर्थः ॥

## ८२३ । संज्ञायां कन्थोशीनरेषु ॥ २।४।२० ॥

दी— । कन्थान्तस्तत्पुरुषः क्लीवं स्यात्, सा चेदुशीनरदेशोत्पन्नायाः कन्थायाः संज्ञा । सुशमस्यापत्यानि सौशमयः । तेषां कन्था सौशमिकन्थम् । 'संज्ञायाम्' किम् ? वीरणकन्था । 'उशीनरेषु' किम् ? दाक्षिकन्था ।

A तत्पुरुष ending in कन्था will be in the neuter if the compound is a class-name of wraps made in उशीनर । Thus descen-dants of सुशम are सौशमि, a clan in उशीनर । Wrap made by them is सौशमिकन्थम् । This is a general name of a peculiar sort of wraps. Why संज्ञायाम् ? Witness वीरणकन्था—a wrap of the Viranas ( another clan in उशीनर )—which, not being a संज्ञा, has कन्था unchanged, though it is made in उशीनर । Why उशीनरेषु ? Witness दाक्षिकन्था—a wrap of the Dakshis—which, not being of उशीनर, retains कन्था though it is a संज्ञा of a kind of wraps.

मित—। 'उशीनरेषु कन्था' इति वृत्तिकृतामन्वयः, नागेशस्य तु 'उशीनरेषु संज्ञा' इति। 'कन्था' कन्थान्तस्तत्पुरुषः। सुशमशब्दादपत्यार्थे "अत इञ्" (१००५—४।१।९५) इति इञ्—सौशमयः। "ह्रस्वो नपुंसके—" (९१८—१।२।४७) इति ह्रस्वं सौशमिकन्थम्। उशीनरदेशजातस्य कन्थाविशेषस्य संज्ञा इति वृत्तिकृदादयः, कन्थाविशेषस्य उशीनरदेशविख्याता संज्ञा इति नागेशः॥ 'वीरण' इति उशीनरदेशे सङ्घभेदः। तेषां कन्था॥ यद्वा—वीरणानि उशीराः, तन्निर्मिता कन्था। उभयत्र संज्ञात्वाभावात् नपुंसकं न॥ दक्षस्य अपत्यानि दाक्षयः, तेषां कन्था। संज्ञा एव, किन्तु नेयमुशीनरेषु संज्ञा इति नपुंसकाभावः॥

८२४। उपज्ञोपक्रमं तदाद्याचिख्यासायाम्॥ २।४।२१॥

टी—। उपज्ञान्त उपक्रमान्तश्च तत्पुरुषो नपुंसकं स्यात्, तयोरुपज्ञायमानोपक्रम्यमाणयोरादिः प्राथम्यं चेदाख्यातुमिष्यते। पाणिनेरुपज्ञा पाणिन्युपज्ञं ग्रन्थः। नन्दोपक्रमं द्रोणः।

A तत्पुरुष endng in उपज्ञा and उपक्रम is neuter if the object is to declare first inspiration or first introduction. Thus पाणिनि &c.—ग्रन्थ is originally Panini's inspiration. Here ग्रन्थ refers to the अष्टाध्यायी system of grammar devised by Panini. Similarly नन्द etc.—the measure द्रोण was first introduced by king Nanda.

मित—। उपज्ञायते इत्युपज्ञा उपज्ञायमानं परिज्ञायमानं वस्तु। कर्मणि अङ्। उपक्रम्यते इत्युपक्रमः उपक्रम्यमाणं प्रारभ्यमाणं कर्म। कर्मणि घञ्। उपज्ञा च उपक्रमश्च उपज्ञोपक्रमम्। समाहारद्वन्द्वः। आदिः प्राथम्यम्। भावे लक्षणा। तस्य उपज्ञोपक्रमस्य आदिः तदादिः। आख्यातुमिच्छा आचिख्यासा। तदादेः आचिख्यासा। तस्यां सत्याम्॥ पाणिनेः इति कर्तरि कृद्योगा षष्ठी। ग्रन्थ इत्यष्टाध्यायी। 'पाणिन्युपज्ञ' पाणिनिना प्रथमं परिज्ञातो 'ग्रन्थः'। प्रवृत्ते ग्रन्थे अन्योऽपि तं जानाति—देवदत्तोपज्ञा अष्टाध्यायी॥ एवं नन्दोपक्रमं द्रोणः। अमन्त्यामाद्याख्यायां देवदत्तोपक्रमो यागः॥

८२५ । छाया बाहुल्ये ॥ २।४।२२ ॥

दी— । छायान्तस्तत्पुरुषो नपुंसकं स्यात् पूर्वपदार्थबाहुल्ये । इक्षूणां छाया इक्षुच्छायम् । "विभाषा सेना—" ( ८२८—२।४।२५ ) इति विकल्पस्यायमपवादः ॥ "इक्षुच्छाया निषादिन्यः" इति तु 'आ' समन्तात् 'निषादिन्यः' इत्याङ्-प्रश्लेषो बोध्यः ॥

A तत्पुरुष ending in छाया is in the neuter if the पूर्वपद is in the plural. Thus इक्षु etc.—The shade of sugar canes. This overrules the option allowed by "विभाषा—" (828). "इक्षुच्छायानिषादिन्यः" (Rag IV. Sl. 20) has to be explained with an आ introduced, thus 'इक्षुच्छायि आ' समन्तात् 'निषादिन्य': ।

मित— । 'छाया' इति छायान्तस्तत्पुरुषः । 'बाहुल्ये' गम्यमाने इति वृत्तिकारः, 'बाहुल्ये सति इति नागेशः । बाहुल्यस्य छायाया एव । छाया तु सूर्यस्य आवरणात् जायते । तत् आवरकद्रव्यस्य बाहुल्ये छायाया बाहुल्यम् । आवरकद्रव्यस्य छायया समासे पूर्वपदम् । तदाह 'पूर्वपदस्य' यः 'अर्थः' इक्षुर्वा वटो वा तस्य बाहुल्ये' इति ॥ "इक्षुच्छायनिषादिन्यः" इत्येव पाठो रघौ चतुर्थे प्रायेण दृश्यते ॥ अबाहुल्ये विकल्पो वक्ष्यते "विभाषा सेना—" ( ८२८—२।४।२५ ) इति ॥

८२६ । सभाराजामनुष्यपूर्वा ॥ २।४।२३ ॥

दी— । राजपर्य्यायपूर्वः अमनुष्यपूर्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात् । इनसभम् ईश्वरसभम् । पर्य्यायस्यैव इष्यते । नेह, राजसभा—चन्द्रगुप्तसभा ॥ अमनुष्यशब्दो रूढ्या रक्षःपिशाचादीनाह । रक्षःसभम्—पिशाचसभम् ।

A तत्पुरुष with सभा final, and some synonym of राजन् or some word meaning a demon leading, is in the neuter. Thus इन etc. The rule covers synonyms only ; hence राजसभा, चन्द्रगुप्तसभा

etc. are not in the neuter. The word अमनुष्य is restricted to mean राक्षस, पिशाच etc. Hence रक्षःसभम् etc.

मित—। 'सभा' इति समान्तस्तत्पुरुषः। सभा अराजामनुष्यपूर्वा इति च्छेदः। न राजा अराजा राजसदृश इत्यर्थः। तत्सादृश्ये नञ्, इवार्थे इति शेषः। ये च राजपर्य्यायाः ते खलु राजसदृशाः। तदाह 'राजपर्य्यायपूर्वः' इति॥ 'इन' ईश्वर इत्यादयो राजपर्य्यायाः। 'राजन्' इति तु न राजन्शब्दसदृशः किन्तु राजन्शब्द एवायम्। पुष्पमित्रचन्द्रगुप्तादयोऽपि न राजसदृशाः किन्तु राजविशेषबोधका एव। तदेतेषां व्यावृत्तये एवकारेण आह 'पर्य्यायस्यैव' इति॥ न मनुष्यः इति व्युत्पत्त्या 'अमनुष्यः' इति द्विधा प्रतिपद्यते—एकस्तावत् योगरूढः रक्षःपिशाचादिषु वर्त्तते, अन्यस्तु यौगिको मनुष्यादन्यमात्रे। इह प्रथमो गृह्यते। तदाह 'रूढ्या' इत्यादि। द्वितीयस्तु "अमनुष्यकर्तृके च" (२९७०—३।२।५३) इत्यत्र। न्यासकारस्तु प्रथममनयोरव्युत्पन्नमाह॥ सभाशब्द इह शालावचनः। तस्य उत्तरसूत्रेण सामान्यतः क्लीबत्वनिषेधात् अराजमनुष्यपूर्वत्वे विधीयते॥

८२७। अशाला च॥ २।४।२४॥

**दो—। सङ्घातार्था या सभा तदन्तस्तत्पुरुषः क्लीबं स्यात्। स्त्रीसभम्, स्त्रीसङ्घात इत्यर्थः। अशाला किम्? धर्मसभा, धर्मशाला इत्यर्थः।**

A तत्पुरुष ending in सभा—in the sense 'an assemblage' not in the sense शाला, a house—is neuter. Thus स्त्री etc. meaning a body of a females. Why say अशाला? Witness धर्मसभा which means धर्मशाला, a house in which religious meetings are held, a rest-house for pilgrims, etc.

मित—। 'सभा' इति वर्त्तते, अशाला' इत्यनेन च विशेष्यते। 'शाला' ग्रहणम्। सभाशब्दः शालार्थे सङ्घातार्थे च वर्त्तते। तत्र 'अशाला' इति पर्य्युदासात्

सङ्घातार्थे इह नेयः। तदाह 'सङ्घातार्था या सभा' इति ॥ धर्मार्था सभा धर्मसभा पान्थनिवासः। स च शालाविशेष एव तेन न क्लीबम् ॥

८२८। विभाषा सेनासुराच्छायाशालानिशानाम् ॥ २।४।२५ ॥

दी—। एतदन्तस्तत्पुरुषः क्लीबं वा स्यात्। ब्राह्मणसेनम्—ब्राह्मणसेना। यवसुरम्—यवसुरा। कुड्यच्छायम्—कुड्यच्छाया। गोशालम्—गोशाला। श्वनिशम्—श्वनिशा ॥ "तत्पुरुषोऽनञ् कर्मधारयः" (८२२—२।४।१९) इत्यनुवृत्तेर्नेह—दृढसेनो राजा, असेना, परमसेना ॥

A तत्पुरुष ending in सेना, सुरा, शाला or निशा is optionally neuter. Thus ब्राह्मण etc. "तत्पुरुषः—" (822) following, we do not get neuter in दृढ etc. ( बहुव्रीहि ), असेना ( नञ् ), परम etc.—( कर्मधारय )।

मित—। 'निशानाम्' इति प्रथमार्थे षष्ठी.। '—निशाः' इत्यर्थः। तत्पुरुषविशेषणम्। तदाह 'एतदन्तस्तत्पुरुषः' इति ॥ कुड्यस्य छाया इति विग्रहः। कुड्यानामित्यर्थे नित्यं स्यात् ( ८२५—२।४।२२ )॥ श्वनो निशा कृष्णचतुर्दशी। तस्यां हि श्वान उपवसन्तीति प्रसिद्धिः इति न्यासपदमञ्जर्यौ ॥

# अथ बहुव्रीहिः

८२९ । शेषो बहुव्रीहिः ॥ २।२।२३ ॥

दी—। अधिकारोऽयम् । "द्वितीयाश्रित—" ( ६८६—२।१।२४ ) इत्यादिना यस्य त्रिकस्य विशिष्य समासो नोक्तः स शेषः, प्रथमान्तमित्यर्थः ।

The rest are called बहुव्रीहि । This is the subject matter of the rules following. शेष is that particular triad of case-affixes of which no समास is specifically mentioned as in the case of द्वितीया, तृतीया &c. by rules such as "द्वितीयाश्रित—" (686—" In other words शेष is प्रथमान्त ।

मित—। उक्तादन्यः शेषः । समासः इत्यस्ति । द्वितीयाद्या विभक्तयो विशिष्य इह समाससूत्रेषु उक्ताः । तद्यथा—"द्वितीयाश्रित—" ( ६८६ ), "तृतीया तत्-कृत—" ( ६९२—२।१।३० ), "चतुर्थी—" ( ६९८—२।१।३६ ), "पञ्चमी—" (६९९—२।१।३७), "षष्ठी" ( ७०२—२।२।८ ), "सप्तमी—" ( ७१७—२।१।४० ) इति । अनुक्ता प्रथमा । सैव शेषः । तदाह 'शेषः प्रथमान्तम्' । प्रथमान्तं समस्यति समासस्य बहुव्रीहिसंज्ञो भवति इत्यर्थः । न चैतावता नीलमुत्पलं नीलोत्पलमित्यादिषु कर्मधारयेषु बहुव्रीहिसंज्ञाप्रसङ्गः । तेषां तु विशेषणं विशेष्येण—" ( ७३७—२।१।५७ ) इत्यादिषु विधायकसूत्रेषु विशिष्य प्रथमा नोक्ता ॥

८३० । अनेकमन्यपदार्थे ॥ २।२।२४ ॥

दी—। अनेकं प्रथमान्तमन्यपदार्थे वर्त्तमानं वा समस्यते, स बहुव्रीहिः । अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति, समानाधिकरणानामिति च, फलितम् । प्राप्तमुदकं यं प्राप्तोदको ग्रामः । ऊढ़रथो ऽनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । पीताम्बरो

हरिः। वीरपुरुषकोग्रामः॥ प्रथमार्थे तु न। वृष्टे देवे गतः॥ व्यधिकरणानामपि न। पञ्चभिर्भुक्तमस्य॥

Several mutually related words in the प्रथमाविभक्ति are compounded in the sense of some word other than those that are compounded and the compound is called a बहुव्रीहि। In effect, बहुव्रीहि is of collocated ( समानाधिकरण ) words and in the sense of a विभक्ति other than प्रथमा। Thus प्राप्तोदको ग्रामः—the village reached by the floods. Here the compound means neither ग्राम nor उदक, but something different, viz, यम् which refers to ग्राम् ; also यम् is in the द्वितीयाविभक्ति not प्रथमा, and प्राप्त and उदक are collocatives. Similarly ऊढरथः etc. There is no समास if the sense is that of प्रथमा। Thus वृष्टे देवे गतः has वृष्टे and देवे uncompounded though these are collocative and the reference is to अन्यपदार्थ, viz, गतः which, however, being in the प्रथमा bars compounding. Non-collocative words again are not compounded. Thus पञ्चभिर्भुक्तमस्य—This man's share was eaten by five—has पञ्चभिः and भुक्तम् uncompounded though the reference is to अस्य which is an अन्यपदार्थ and not in the प्रथमा।

मित्र—। 'शेषः' इत्यस्ति। अनेकं शेषः अन्यपदार्थे इति सूत्रशरीरम्। तदाह 'अनेकं प्रथमान्तम्' इति। 'वा' इति महाविभाषा। अन्यस्य पदस्य अर्थः 'अन्यपदार्थः'। अन्यत्वमिह अर्थकृतं विभक्तिकृतञ्च इत्युभयात्मकम्। अर्थकृतत्वादन्यत्वस्य समस्यमानानि यानि प्रथमान्तपदानि तेभ्यो भिन्नस्य कस्यचित् अर्थे बहुव्रीहिरित्यायाति। दीर्घबाहुर्देवदत्तः इत्यत्र दीर्घबाहुरिति बहुव्रीहिः, अन्यपदार्थश्च देवदत्तः। विभक्तिकृतत्वात् पुनः समस्यमानपदानां या विभक्तिः, प्रथमा इति शेषः, तदतिरिक्ताया विभक्तेरर्थे बहुव्रीहिरित्यप्यायाति। तदाह 'अप्रथमाविभक्त्यर्थे बहुव्रीहिः' इति॥ किञ्च सति सामर्थ्ये समासः। सामर्थ्यञ्च शाब्देनार्थेन सम्बन्धं विना प्रथमान्तानां समानाधि-

करणानामेव सम्भवति न व्यधिकरणानाम्। 'बलम्' 'बुद्धिः' इति व्यधिकरणौ नैव समस्येते। तीक्ष्णा' बुद्धिः' इति समानाधिकरणौ तु समस्येते एव। तत्र स्वपदार्थे 'तीक्ष्णबुद्धिः इति कर्मधारयः, अन्यपदार्थे बहुव्रीहिरिति विवेकः। तदेवाह 'समानाधिकरणानामिति च फलितम्' इति॥ 'प्राप्तोदकः' इत्यादिषु यथाक्रमं 'यः' 'येन' 'यस्मै, 'यस्याः' 'यस्य' 'यस्मिन्' इति द्वितीयाद्यर्थे समासः। 'वीरपुरुषकः' इत्यत्र 'वीरपुरुषः' इति कर्मधारयो मा विज्ञायि इति कप् कृतः॥ 'कृष्ट देवे' इत्यत्र 'कृष्टदेवे' इति समासो न भवति, 'मतः' इत्यस्य प्रथमान्तत्वात्॥ 'पञ्चभिः' पञ्चभिरतिथिभिर्भुक्तमस्यान्नमित्यर्थः। कथं तर्हि—"वह्निरस्य प्रज्वलन्ती घनसंहतिवाद्यकः। चारित्र्यो दूतमुखः पुरुषः कोऽपि पार्थिवः॥"—इति? बुद्ध्यादिषु अस्त्वादिरारोपात् समानाधिकरणता सिध्यतीति समासः। कथं वा "तनात्मजन्मानमजं चकार" इति? अपाणिनीयं शिष्टैस्तु न परिहृतम्। तथा च वामनः—"अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः" इति॥ "धातोर्लोप अस्मिन्" इति व्यधिकरणबहुव्रीहिस्तु भाष्यकारवचनात् साधुः। नायं अन्येषां प्रयोजकः॥

**टी—। "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः" (वार्त्तिक)। प्रपतितपर्णः—प्रपर्णः।**

A compound, with a प्रादि particle leading and a derivative of some root following, optionally elides the उत्तरपद when further compounded in a बहुव्रीहि। Thus प्रपर्णः, with पतित dropped, or प्रपतितपर्णः with the same retained.

मित—। समासे 'प्रादिभ्यः' परं यदि 'धातुजः' कश्चित् शब्दः उत्तरपदं भवति तदा तस्य समासस्य पदान्तरेण बहुव्रीहौ धातुजमुत्तरपदं वा लुप्यते इति 'वाच्यम्' इत्यर्थः। प्रपतितशब्दे 'प्र' इति 'प्रादि' 'पतित' इति 'धातुजम्'। पर्ण इत्यनेन बहुव्रीहौ पतितशब्दस्य वा लोपः॥

**टी—। "नञोऽस्त्यर्थानां वा चोत्तरपदलोपः" (वार्त्तिक)। अविद्यमानपुत्रः। 'अस्ति' इति विभक्तिप्रतिरूपकमव्ययम्—अस्तिक्षीरा गौः।**

A compound, with a नञ् leading and some word meaning 'existent' following optionally elides the उत्तरपद when further compounded in a बहुव्रीहि। Thus अपुत्रः with विद्यमान dropped after नञ्, and अविद्यमानपुत्रः with the same retained. अस्ति in अस्त्यर्थ here is an indeclinable looking like a तिङन्त word. Compare अस्तिक्षीरा गौः where the compound अस्तिक्षीरा is not available if अस्ति is तिङन्त।

मित—। 'अस्ति' इत्यव्ययं विद्यमानार्थे। अस्ति अर्थः एषाम् 'अस्त्यर्थाः' विद्यमानार्थाः। तेषाम् समासे 'नञः' परं यदि 'अस्त्यर्थं' विद्यमानार्थं किञ्चित् पदमुत्तरपदं भवति तदा तस्य समासस्य पदान्तरेण बहुव्रीहौ विद्यमानार्थमुत्तरपदं वा लुप्यते इत्यर्थः॥ ननु 'अस्ति' इति धातुनिर्देशे तिप् क्रियताम्। ततश्च अस्तेः अस्धातोः अर्थः अस्त्यर्थः। अस्त्यर्थ इव अर्थः एषाम् 'अस्त्यर्थाः' तेषाम्—इत्यस्तु व्याख्यानं किमव्ययेन? मास्तु। तथा सति अस्त्यर्थे इति धातवो निर्दिश्यन्ते ते नाम कथं नञ्समासस्य उत्तरपदे स्युः? अतः सुष्ठूक्तम् 'अस्तीति विभक्तिप्रतिरूपकमव्ययम्' इति। "अस्तिक्षीरा" इति भाष्यप्रयोगश्च इह मानम्॥

## ८३१। स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु॥ ६।३।३४॥

टी—। भाषितपुंस्कात् अनूङ् ऊङः अभावः अस्याम् इति बहुव्रीहिः। निपातनात् पञ्चम्या अलुक्, षष्ठ्याश्च लुक्॥ तुल्ये प्रवृत्तिनिमित्ते यत् उक्तपुंस्कं तस्मात् परः ऊङः अभावो यत्र तथाभूतस्य स्त्रीवाचकस्य शब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे, न तु पूरण्यां प्रियादौ च परतः। "गोस्त्रियोः—" (६५६=१।२।४८) इति ह्रस्वः। चित्रा गावो यस्य इति लौकिकविग्रहे, चित्रगुः। रूपवद्भार्यः।

भाषितपुंस्कादनूङ् is a बहुव्रीहि compound with the sixth case-ending. The षष्ठी disappeared and the पञ्चमी in भाषितपुंस्कात्

has not elided by निपातन is this very rule. भाषितपुंस्क is a word which, with the connotation unchanged, is applied equally to both males and females. Practically it is a word that can take feminine affixes. Hence the rule means—A masculine word, changed by an addition of a feminine affix other than ऊङ्, resumes its masculine form if the उत्तरपद is a feminine word collocative with it but neither has an ordinal termination nor is of the प्रियादि class. Thus in चित्रगुः ( with the current exposition चित्रा गावो यस्य or with the book-exposition चित्रा अस् गो अस् ), meaning 'one having brindled cows' चित्रा resumes the masculine form चित्र। गो is shortened into गु by "गोस्त्रियोः—" 656—1. 2. 48). Similarly रूपवद्भार्य्यः with पुंवद्भाव of रूपवती।

मित—। 'उत्तरपदे' इत्यधिकृतमस्ति। 'स्त्रियः' स्त्रीवाचकस्य शब्दस्य 'पुंवत्' पुंवाचकस्येव रूपं स्यात्। कदा? 'समानाधिकरणे' एकद्रव्यनिष्ठे 'स्त्रियां' स्त्रीलिङ्गशब्दे 'उत्तरपदे' सति। किमविशेषेण सर्व्वस्यैव स्त्रीवाचकस्य पुंवत् स्यात्? न इत्याह 'भाषितपुंस्कादनूङ् स्त्रियाः' एव स्यात् न सर्वस्य स्त्रीवाचकस्य। 'भाषितः' स्त्रियां प्रयोगात् प्राक् उक्तः 'पुमान्' येन शब्देन तस्यैव स्यात् नान्यस्य। तत्रापि पुनः 'अनूङः' एव, स्त्रियां विहितस्य ऊङ्प्रत्ययस्य अभावो यस्मिन् स्त्रीवाचके शब्दे तस्यैव॥ किमिदं भाषितपुंस्कादनूङ्, इति? समुदायोऽयं बहुव्रीहिः 'स्त्रियाः' इत्यस्य विशेषणम्। भाषितपुंस्कात्, परः 'अनूङ्' ऊङः अभावो यस्याः यस्यां वा तस्याः इत्यर्थः। तर्हि 'भाषितपुंस्कानूङः' इति षष्ठ्यन्तं सूत्रपञ्चमीकमस्तु। अत्राह 'निपातनात् पञ्चम्या अलुक् षष्ठ्याश्च लुक्' इति. इत्थं सति निपातनादिति भावः॥ 'भाषितपुंस्कं' व्याचष्टे 'तुल्ये' इति। 'भाषितः' उक्तः पुमान्, यस्मिन्नर्थे स भाषितपुंस्कः अर्थः। सः अर्थ अस्ति यस्मिन् स 'भाषितपुंस्कः' शब्दः। अर्शआद्यच्। इयमत्र प्रक्रिया—बहुव्रीहौ "उरःप्रभृतिभ्यः—" (८८६ ५।४।११) इति कपि भाषितपुंस्क् कप् इति स्थिते "स्वादिष्वसर्व—" (२३०

—१।४।१७) इति पूर्वस्य पदत्वम्। "संयोगान्तस्य लोपः—" (५४—८।२।२३) इति सलोपे भाषितपुम् क इति। "पुमः खय्यि—" (१३९—८।३।६) इति मकारस्य रुत्वे सत्वे च भाषितपुस् क इति। "अत्रानुनासिकः—" (१३६—८।३।२) इति "अनुनासिकात् परः—" (१३७—८।३।४) इति च अनुस्वारे भाषितपुंस्कः॥ येन अर्थेन हेतुना पुंसि प्राक् प्रयुक्तः शब्दः, तेनैवार्थेन चेत् स शब्दः सम्प्रति प्रत्ययादिभिरेकदेशविकृतः सन् अविकृतो वा लिङ्गान्तरे वर्तते तदासौ 'भाषितपुंस्कः' शब्दः इति कथ्यते। एतदेवाह 'तुल्ये प्रवृत्तिनिमित्ते' इति। प्रवृत्तिःशब्दप्रयोगः। तस्य निमित्तं हेतुः 'प्रवृत्तिनिमित्तम्' अर्थः, अर्थगतो धर्मो इति शेषः। अर्थं दृष्ट्वैव लोके शब्दः प्रयुज्यते। मुखरः पुमान् इत्यत्र मुखरशब्दप्रयोगे पुंसि स्थितं किमपि वस्तु हेतुः प्रवृत्तिनिमित्तम्। 'तुल्ये प्रवृत्तिनिमित्ते' अर्थे अभिन्ने इत्यर्थः। अथ पुंसि मुखरशब्दप्रयोगकाले प्रवृत्तिनिमित्तं यत् प्राङ्निरूपितं वस्तु मुखरत्वरूपः पदार्थः तदेव कस्याश्चित् स्त्रियां लभ्यते, प्रयुज्यते च तस्यां स एव शब्दः, तदा 'मुखर' इति 'भाषितपुंस्कः' शब्दो भवति। परन्तु स्त्रियां प्रयुक्तत्वात् रूपं तस्य स्त्रीप्रत्ययप्रयोगेण 'मुखरा' इति जायते। स च स्त्रीप्रत्यय इह टाप् न ऊङ्। तेन मुखरा' इति 'भाषितपुंस्कानूङ् स्त्री' शब्दः तस्येह पुंवद्भावो विधीयते। शेषमत्र ग्रामणिशब्दे द्रष्टव्यम्॥ 'अनेकम्' इत्युक्तो बहुव्रीहौ समस्यमानपदानां सर्वेषामेवोपसर्जनत्वं प्राप्नोति। एवं पूर्वनिपातस्य अनियमे प्राप्ते नियमो वक्ष्यते 'सप्तमीविशेषणे—" (८९८—२।२।३५)—इति। सत् चित्रा गावो यस्य इति वाक्ये समासे चित्राशब्दस्य पूर्वनिपातः। गोशब्दस्य स्त्रीत्वे चित्राशब्दस्य भाषितपुंस्कत्व पुंवद्भावः। गोशब्दस्य तु 'गोस्त्रियोः—' (६५६) इति ह्रस्वे "एच इक्—" (२४९—१।१।४८) इति ओकारस्य उकारः—चित्रगुः। चित्राः अस् गो अस् इत्यादिषु सन्धिकार्यं न भवति "अकृतव्यूहाः—' (४५. परि—) इत्युक्तेः॥

टी—। चित्रा जरती गौर्यस्येति विग्रहे अनेकोक्तेर्बहूनामपि बहुव्रीहिः। अत्र केचित्—चित्राजरतीगुः—जरतीचित्रागुर्वा। एवं दीर्घातन्वीजङ्घः—तन्वीदीर्घाजङ्घः। त्रिपदे

बहुव्रीहौ प्रथमं न पुंवत्, उत्तरपदस्य मध्यमेन व्यवधानात्। द्वितीयमपि न पुंवत्, पूर्वपदत्वाभावात्। उत्तरपदशब्दो हि समासस्यचरमावयवे रूढ़ः, पूर्वपदशब्दस्तु प्रथमावयवे—इति वदन्ति। वस्तुतस्तु नेह पूर्वपदमाक्षिप्यते "आनङ् ऋतः—" (८२३—६।३।२५) इत्यत्र यथा। तेन उपान्त्यस्य पुंवदेव—चित्राजरद्गुः इत्यादि॥

The rule says अनेक which means 'several' not necessarily 'two'. Hence three or more words may enter into a बहुव्रीहि। We may therefore have a बहुव्रीहि with the exposition चित्रा जरती गौर्यस्य। Here some say the form is चित्राजरतीगुः or जरतीचित्रागुः—having an old brindled cow. Similarly दीर्घातन्वीजङ्घः or तन्वीदीर्घाजङ्घः—having long lean shanks. They contend "When three words enter into a बहु—, the first cannot resume the masculine form because the उत्तरपद is separated from it by the middle word. The middle again does not resume the masculine from because it is not the पूर्वपद। उत्तरपद and पूर्वपद in compounds are restricted to mean the last word and the first word in them. The fact is, as in the rule "आनङ्—" (921—6. 3. 25) here too the विधि is उत्तरपदे—when an उत्तरपद follows. This does not imply that the विधि is of the पूर्वपद, but of whatever immediately precedes the उत्तरपद। Thus the pen-ultimate has पुंवद्भाव and the form is चित्राजरद्गुः etc.

मित—। एकाधिकमनेकम्। तत् बहुभिरपि बहुव्रीहिः स्यात्॥ उदाहरणे या चित्रा सैव जरती गौः इति सामानाधिकरण्यम्। ततो बहुव्रीहिः। द्वयोर्विशेषणयोः चित्राजरत्योः पर्य्यायेण पूर्वनिपातः। एवं दीर्घा तन्वी जङ्घा यस्य इत्यत्रापि॥ समासे प्रथमं पदं पूर्वपदम् अन्त्यं पदम् उत्तरपदम् इति स्थिते केचित् सूत्रार्थमेवं वर्णयन्ति—"स्त्रियाः पुंवद्भवति। कदा? उत्तरपदे परतः।

कस्याः स्त्रियाः ? पूर्वपदभूताया इत्यर्थादायाति, उत्तरपदसामर्थ्यात् ।"—इति । इह च चित्रा इति पूर्वपदं गौः इत्युत्तरपदम् । तन्मते चित्रा इत्यस्य विधिः गौः इत्यस्मिन् परे । न चेह गौरिति चित्रा इत्यस्मात् परमस्ति, जरतीशब्देन व्यवधानात् । तेन चित्राशब्दस्य न पुंवत् रूपम् । जरतीशब्दस्यापि न, यतोऽसौ न पूर्वपदम् । तथा च चित्राजरतीगुः जरतीचित्रागुः इति रूपद्वयम् । एवमन्यत्रापि ॥ इदमसत् । पूर्वपदस्य पारिभाषिकस्य नायं विधिः किन्तु अव्यवहितपूर्ववर्तिनः पदस्य । नेदमपूर्वमुच्यते । इहैव उत्तरपदाधिकारे "आनङ् ऋतः—" ( ९२१ ) इत्यत्र होतृपोतृनेष्टोद्गातारः इत्युदाहरणं स्थितं भाष्ये । तत्तु पारिभाषिके पूर्वपदे न सिध्यति । तेन उत्तरपदात् गौः इत्यस्मात् अव्यवहितस्य पूर्वस्य पुंवदेव—चित्राजरद्गुः—जरतीचित्रगुः इत्यादि ॥

टी— । अतएव चित्राजरत्यौ गावौ यस्य इति द्वन्द्वगर्भेऽपि चित्राजरद्गुः इति भाष्यम् । कर्मधारयपूर्वपदे तु द्वयोरपि पुंवत्—जरच्चित्रगुः । कर्मधारयोत्तरपदे तु चित्रजरद्गवीकः ॥ 'स्त्रियाः' किम् ? ग्रामणि कुलं दृष्टिरस्य ग्रामणिदृष्टिः । 'भाषितपुंस्कात्' किम् ? गङ्गाभार्यः । अनूङ् किम् ? वामोरूभार्यः । 'समानाधिकरणे' किम् ? कल्याण्या माता कल्याणीमाता । 'स्त्रियां', किम् ? कल्याणी प्रधानं यस्य स कल्याणीप्रधानः ॥ पूरण्यां तु—

Hence indeed even in a बहुव्रीहि covering a द्वन्द्व with the exposition चित्राजरत्यौ गावौ यस्य—one having a brindled and an old cow—the form is चित्राजरद्गुः, as appears from the भाष्य । But if the पूर्वपद is a कर्मधारय with the exposition जरच्चित्रा गौर्यस्य—having a cow which is old and brindled—then both have पुंवद्भाव yielding जरच्चित्रगुः । If again the उत्तरपद is a कर्मधा—with the exposition चित्रा जरद्गवी यस्य—having an old cow which is brindled—the form is चित्रजरद्गवीकः । Why say स्त्रियाः ? Witness ग्रामणिदृष्टिः which means

one who sees matters not with his own eyes, but with those of the leading house in the village, i. e., an abject supporter of the leading house. In this ग्रामणी is masculine with the meaning 'leader' ; without change of meaning, if it is applied to कुल, which is neuter, the form becomes ग्रामणि। ग्रामणी then is भाषितपुंस्क here, but it is not स्त्रियाम्, hence no पुंवद्भाव, and the final form is ग्रामणिदृष्टिः। Why say 'भाषितपुंस्कात्—' ? Witness गङ्गाभार्य्यः where, गङ्गा not being भाषितपुंस्क, we do not get गङ्गभार्य्यः। Why say '—अनूङ्' ? Witness वामोरुभार्य्यः which does not become वामोरभार्य्यः with पुंवद्भाव। Why say समानाधिकरणे ? Witness कल्याणीमाता without पुंवद्भाव the exposition being कल्याण्या माता which makes कल्याणी and माता as व्यधिकरण। Why स्त्रियाम् ? Witness कल्याणीप्रधानः with the exposition कल्याणी प्रधानं यस्य सः where the उत्तरपद not being feminine we have no पुंवद्भाव। If the उत्तरपद has an ordinal affix, we look forward—

मित—। 'अत एव' अस्मादेव हेतोः, यतः पारिभाषिकं पूर्वपदं न आक्षिप्यते तत इत्यर्थः। तदेव दर्शयति। चित्रा च जरती च इति द्वन्द्वे एका चित्रा अपरा जरती गौः। समानाधिकरणता नास्ति इति न पुंवद्भावः—चित्राजरत्यौ। ततो बहुव्रीहौ गोशब्दे उत्तरपदे पारिभाषिकं पूर्वपदं 'चित्राजरती' इति अव्यवहितपूर्वं पदं तु 'जरती' इति। अत्र पुंसि प्रयुक्तो नास्ति कोऽपि शब्द यत्र स्त्रीप्रत्यययोगे द्वन्द्वलब्धः चित्राजरतीशब्दो भवेत्। तेन चित्राजरतीशब्दस्य भाषितपुंस्कता नास्ति, अतो न पुंवद्भावः, टाप् च चित्राशब्दान्न निवर्त्तते। जरतीशब्दः पुनर्गोशब्देन उत्तरपदेन समानाधिकरणं भाषितपुंस्कानूङ् च। तस्य पुंवद्भावे चित्राजरद्गुः। 'इति' एवंविधं 'भाष्यम्' वृद्धशब्दव्याख्यानानुकूलमित्यर्थः। एतच्च भाष्ये प्रयुक्तात् 'पट्वीमृदुभार्य्यः' इति द्वन्द्वगर्भाद्बहुव्रीहेः प्रतीयते। पारिभाषिकपूर्वपदाक्षेपे तु

भाष्यप्रयोग एव न सिध्येत् ॥ कर्मधारयपूर्वपदे जरती चासौ चित्रा च इति समानाधिकरणत्वात् जरच्चित्रा। ततो बहुव्रीहौ जरच्चित्रगुः। इह जरच्चित्रा इति भाषितपुंस्कानङ्। अस्य पुंवत्त्वे 'चित्रा' इत्यस्य वा पुंवत्त्वे रूपम् ॥ कर्मधारयोत्तरपदे जरती गौः जरद्गवी। पुंवद्भावः, टच् (७२९—५।४ ९२), ङीप्। ततो बहुव्रीहौ कप् (८३३)॥ ग्रामं नयतीति क्विपि ग्रामणीः ग्रामस्य नेता। ग्रामनेतृत्वमिह प्रवृत्तिनिमित्तम्। तस्मिन्नर्थे पुंसि इह प्रथमं प्रयुक्तः शब्दः। ततो नेतृत्वं कस्मिंश्चित् कुलेऽप्यस्ति इति दृष्ट्वा यदा कुले शब्दः प्रयुज्यते, तदा कुलशब्दस्य नपुंसकत्वात् कुलले ग्रामणि इति रूपं जायते। तदेष ग्रामणिशब्दो भाषितपुंस्कः पुंवद्भावस्य तु न विषयः, स्त्रियामप्रयुक्तत्वात्। तेन ग्रामणि दृष्टिः अस्य इति बहुव्रीहौ पुंवद्भावो न भवति ॥ 'गङ्गा' इति नित्यस्त्रीलिङ्गः शब्दः। नियतलिङ्गाः शब्दाः लिङ्गान्तरं न भजन्ते इति तेषां भाषितपुंस्कता नास्ति। तेन 'गङ्गा' इत्यस्य भाषितपुंस्कत्वाभावात् गङ्गाभार्यशब्दे न पुंवद्भावः॥ ऊर्वोः सौन्दर्यं दृष्ट्वा पुरुषे यथा वामौ सुन्दरौ ऊरू अस्य इति वामोरुशब्दः प्रयुज्यते तथा स्त्रियामपि। तत् 'वामोरु' इति भाषितपुंस्कः शब्दः। परं तत्र "संहित—" (५२५—४।१।७०) इत्यूङ्प्रत्ययः क्रियते रूपञ्च 'वामोरू' इति भवति। अयं तु 'भाषितपुंस्कानूङ्' न। तेन न पुंवत्—वामोरूभार्यः॥ कल्याणी इति कस्याश्चित् नाम। प्रधानं मैत्री, नित्यनपुंसकम्। उत्तरपदस्य अस्त्रीलिङ्गत्वात् न पुंवद्भावः॥ 'अपूरणीप्रियादिषु' इति पुंवद्भावप्रक्रियाविशेषं प्रक्रमते—'पूरण्यां तु' इति ॥

**८३३। अप् पूरणीप्रमाण्योः ॥५।४।११६॥**

**दी—। पूरणार्थप्रत्ययान्तं यत् स्त्रीलिङ्गं तदन्तात् प्रमाण्यन्ताच्च बहुव्रीहेरप् स्यात्। कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः। स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः। पुंवद्भावप्रतिषेधः अप्प्रत्ययश्च प्रधानपूरण्यामेव। रात्रिः पूरणी वाच्या च इति उक्तोदाहरणे मुख्या। अन्यत्र तु—**

A बहु—ending in प्रमाणी or a feminine word with an ordinal affix takes अप् as समासान्त। Thus कल्याणीपञ्चमा, the वाक्य being

कल्याणी &c.—a succession of nights in which the fifth night is auspicious. There is no पुंवद्भाव in कल्याणी owing to the prohibition "अपूरणी" in the rule, and अप् is added after पञ्चमी। Similarly स्त्रीप्रमाणः, the वाक्य being स्त्री &c.—one to whom the wife is the guide. Here स्त्री cannot have पुंवद्भाव because it is not भाषितपुंस्क, and प्रमाणी becomes प्रमाण with the addition of अप्। A पूरणी word in the उत्तरपद bars पुंवद्भाव and guides अप् only when the पूरणी is prominent. In the example above, the पूरणी is night, and the compound also refers to nights. This is supposed to give prominence to the पूरणी। In the statement कल्याणी पञ्चमी ( रात्रिः ) यस्य पक्षस्य, the पूरणी refers to रात्रि and the whole refers to पक्ष—a fort-night—hence the पूरणी is not prominent, and, if compounded, the पुंवद्भाव will not be barred, nor will अप् come in. We then look forward—

मित—। पूर्यते अनया इति पूरणी पूरणप्रत्ययान्तः स्त्रीलिङ्गः शब्दः। प्रमीयते अनया इति प्रमाणी। उभयत्र विशेष्यलिङ्गता, तेन ङीप्॥ 'पञ्चमी' इति पूरणीशब्दः। तस्यां पूरण्यामुत्तरपदे पुंवद्भावप्रतिषेधः। तेन कल्याणीशब्दात् ङीप् न निवर्तते। अनेन सूत्रेण अप् समासान्तः। "यस्येति च" ( ३११—६।४।१४८ ) इति ईकारलोपे टापि कल्याणीपञ्चमाः॥ प्रमाणीशब्दे उत्तरपदे 'स्त्री' इति पूर्वपदम्। तत्तु न भाषितपुंस्कं तेन न पुंवद्भावः। अपि कृते ईकारलोपे स्त्रीप्रमाणः स्त्रीविधेयः इत्यर्थः॥ "स्त्रियाः पुंवत्—" ( ८३१ ) इति सूत्रे तु "पूरण्यां प्रधानपूरणीग्रहणं" —इति वार्त्तिकम्। यादृशः पदार्थः पूरणीशब्देन लभ्यते तादृश एव चेत् समासस्यापि अर्थः तदा पूरण्याः प्रधानता। तदैव च पुंवद्भावप्रतिषेधः इति वार्त्तिकार्थः। उदाहरणे कल्याणीपञ्चमा इति कासाञ्चिद्रात्रीणां समुदायः पञ्चमीति पूरणी अपि रात्रिरेव। एवमिह पूरणी प्रधानम्, तेन न पुंवद्भावः। अत्रैव वार्त्तिके "कल्याणपञ्चमीकः पक्षः" इति भाष्योक्ते उदाहरणे 'पक्षः' इति समासवाच्यः', पूरणीवाच्यं तु

रात्रिः काचित्। वाच्ययोर्भिन्नजातीयत्वात् पूरणी अप्रधानम्। अतः पुंवद्भावप्रतिषेधो न। किञ्च अप्प्रत्ययोऽपि उदाहरणे नास्ति। तेन अप्रधानत्वे अप्प्रत्ययोऽपि न भवति इत्यनुमीयते। तदाह 'पुंवद्भावप्रतिषेधः' इत्यादि॥ भाष्योक्तं "कल्याणपञ्चमीकः पक्षः" इति व्याख्यातुं प्रक्रमते 'अन्यत्र तु' इति—

८३३। नद्यृतश्च ॥ ५।४।१५३ ॥

**टी—। नद्युत्तरपदात् ऋदन्तोत्तरपदाच्च बहुव्रीहेः कप् स्यात्। पुंवद्भावः।**

A बहु—ending in a word with ऋ final or in a word technically known as नदी, will have कप् added to it as a समासान्त। Hence compounding कल्याणी &c. we first get पुंवद्भाव yielding कल्याणपञ्चमी। Next कप् comes in. But in attaching कप् to it, we look forward—

मित—। नदीति पारिभाषिकम्, नदीसंज्ञकः शब्द इत्यर्थः। ऋदिति ऋकारान्तः शब्दः। नदी च ऋच्च नद्यृत्, द्वन्द्वैकत्वम्। 'बहुव्रीहौ' इत्यनुवर्त्तते, 'कप्' इति च। तेन बहुव्रीहौ यत् नद्यृत्, ततः परं कप् स्यात् समासान्तः इत्यन्वयः। ततश्च नद्यृत् इति समासे उत्तरपदमित्यर्थादायाति। तदाह 'नद्युत्तरपदात्' इत्यादि॥ कल्याणी पञ्चमी (रात्रिः) यस्मिन् पक्षे इति वाक्ये "पूरण्यां प्रधान—" इति वार्त्तिकात् पुंवद्भावे, अब्भावे च अनेन कप्। कल्याणपञ्चमी कप् इति स्थिते—

८३४। केऽणः ॥ ७।४।१३ ॥

**टी—। के परे अणो ह्रस्वः स्यात्। इति प्राप्ते—**

When क of an affix follows, the preceding आ, ई, ऊ become shortened. Thus the undersirable form कल्याणपञ्चमिक comes in, and we look further forward—

मित्—। ह्रस्वः इति पूर्वसूत्रादनुवर्त्तते। अण् इति दीर्घः अवर्णः इवर्णः उवर्णश्च॥ तद्धिते एव विधिः तेन 'राका' इति कृति ह्रस्वो न इति नागेशः। अन्ये तु सामान्येन विधिं वर्णयन्ति, राका इत्यादिषु च "उणादयो बहुलम्" (३१६९···

३।२।१ ) इति बाहुलकात् ह्रस्वं वारयन्ति ॥ 'इति प्राप्ते' इत्यस्य 'ह्रस्वत्वे 'प्राप्ते' कल्याणपञ्चमिक इति रूपे आपततीति इत्यर्थः ॥

८३५ । न कपि ॥ ७।४।१४ ॥

दी— । कपि परे ह्रस्वो न स्यात् । कल्याणपञ्चमीकः पक्षः । अत्र तिरोहितावयवभेदस्य पक्षस्य अन्यपदार्थतया रात्रिरप्रधानम् ॥ बहुकर्तृकः ॥

आ, ई, ऊ, are not shortened if कप् follows. Hence finally कल्याणपञ्चमीकः। In the बहु—here the अन्यपदार्थ is पक्ष with its constituent nights undistinguished. Hence the पञ्चमी night is unprominent. As an example of ऋ final, we have बहुकर्तृकः—having many agents.

मित— । अनेन "केऽणः" इति प्रतिषिद्धे कल्याणपञ्चमीकः इति रूपम् । उपसर्जन ह्रस्वस्यापि अयं प्रतिषेधः ॥ ननु कथं रात्रिरिह अप्रधानम् ?—इह पक्षरूपे समुदाये अवयवानां रात्रीणां पृथग्व्यवसानं न भवति तत् ता रात्रयः अप्रधानम् । देवदत्तो याति इत्यत्र देवदत्तस्य अवयवानां पृथग्विज्ञानं भवति वा नापि वा भवति । सारसपंक्तिरेषा इत्यत्रापि सारसाः पृथक् पृथग् गृह्यन्ते वा नापि वा गृह्यन्ते । आद्यः उद्भूतावयवभेदः समुदायः, अन्त्यस्तु तिरोहितावयवभेदः । इह तिरोहितावयवभेदः पक्षः, तेन तदवयवभूता पञ्चमी रात्रिरप्रधानम् ॥ ऋदन्तमुदाहरति—बहवः कर्तारोऽस्य बहुकर्तृकः ॥

वो— । 'अप्रियादिषु' किम् ? कल्याणीप्रियः ॥ प्रिया, मनोज्ञा, कल्याणी, सुभगा, दुर्भगा, भक्तिः, सचिवा, स्वसा, कान्ता, क्षान्ता, समा, चपला, दुहिता, वामा, अबला, तनया ॥ सामान्ये नपुंसकम्—दृढं भक्तिर्यस्य स दृढभक्तिः । स्त्रीत्वविवक्षायां तु दृढाभक्तिः ।

Having now finished the consideration of the prohibition अपूरणी in rule 831, he takes up the prohibition अप्रियादि । Why say अप्रियादिषु ? Witness कल्याणीप्रियः—one whose wife is lucky—

without पुंवद्भाव of कल्याणी। प्रियादि words are प्रिया, मनोज्ञा etc. But then the list including भक्ति, how is दृढ़भक्ति to be defended? This is correct by the maxim "सामान्ये नपुंसकम्"। The exposition will be दृढ़' etc. the दृढ़ता being considered in the abstract and not as भक्तिनिष्ठा। If we start with दृढ़ा in the feminine, the compound will be दृढ़ाभक्तिः।

मित—। प्रियादिप्रतिषेधस्य फलमाह 'कल्याणीप्रियः' इति। कल्याणी प्रिया यस्य इति विग्रहः। पुंवद्भावः। उपसर्जनह्रस्वः॥ प्रियामनोज्ञाप्रभृतयः प्रियादयः। तेषु भक्तिशब्दः पठ्यते। कथं तर्हि "दृढ़भक्तिरिति ज्येष्ठे राज्यतृष्णापराङ्मुखः", "भवति विरलभक्तिर्म्लानपुष्पोपहारः", "दृष्टभक्तिर्भवान्या" इत्यादयः प्रयोगाः? उत्तरमाह 'सामान्ये नपुंसकम्' इति (८२१, वा)। अयमाशयः—दृढ़ं भक्तिर्यस्य इति विग्रहे दृढ़ं यस्य इति प्रथमं स्थिते, दृढ़ं किम् इत्याकांक्षा। यत् दृढ़ं सा भक्तिः इति पूरणम् प्रथमं सामान्यतोऽध्यवसानं पश्चात् भक्तिशब्दस्यानुप्रवेशः इति। प्रागेव यदि भक्तिनिष्ठा दृढ़ता इति मन्यते तदा पुंवद्भावो न भवति, दृढ़ाभक्तिः इति च रूपम्॥ भोजस्तु भज्यते सेव्यते इयमिति कर्मसाधनो यो भक्तिशब्दस्यैव प्रियादिषु पाठं मन्यते। तेन भवानी भक्तिराराध्यदेवता यस्य स भवानीभक्तिः न तु पुंवद्भावेन भवभक्तिः। दृढ़ा भक्तिर्यस्य इति भावसाधनस्य तु दृढ़भक्तिरिति पुंवद्भावो भवत्येव इत्याह॥ इह भवेन सम्बन्धात् भवान्यामपि भवत्वमस्ति इति कृत्वा भवभवान्योर्यथाकथञ्चित् तुल्यं प्रवृत्तिनिमित्तमनुसन्धेयम्। तेन भाषितपुंस्कत्वं सिद्ध्यति उदाहरणञ्च सङ्गच्छते। ज्ञापितमेतदुत्तरसूत्रे अग्नायीशब्दे पुंवद्भावं कुर्वता भाष्यकारेणैव॥

८३६। तसिलादिष्वाकृत्वसुचः॥ ६।३।३५॥

दी—। तसिलादिषु आकृत्वसुजन्तेसु (? कृत्वसुजन्तेषु) परेषु स्त्रियाः पुंवत् स्यात्। परिगणनं कर्त्तव्यम्, अव्याप्त्यतिव्याप्तिपरिहाराय—त्रतसौ, तरप्तमपौ, चरड्जातीयरौ, कल्पब्देशीयरौ, रूपप्पाशपौ, थाल्, तिलथ्यनौ। बह्वीषु बहुत्र, बहुतः। दर्शनीयतरा, दर्शनीयतमा। "चरूप—" (८८५—

६।८।४२ ) इति वक्ष्यमाणो ह्रस्वः परत्वात् पुंवद्भावं बाधते—पट्वितरा, पट्वितमा। पटुजातीया। दर्शनीयकल्पा, दर्शनीयदेशीया। दर्शनीयरूपा, दर्शनीयपाशा। बहुथा। प्रशस्ता वृकी वृकतिः. अजाभ्यो हिता अजथ्या।

Words that are भाषितपुंस्क will have पुंवद्भाव if one of the affixes from तसिल् ( 1953—5.3.7 ) down to कृत्वसुच् ( 2085—5.4.17 ) is attached. Enumeration is necessary to avoid the exclusion of the desired and the inclusion of the undesired. The affixes are त्र, तस् etc. Thus बहुत्र from बह्वी, दर्शनीय etc. from दर्शनीया। पट्वि etc. are from पट्वी without पुंवद्भाव because the rule "घरूप—" (985), being subsequent, supersedes this rule and substitutes the ह्रस्व barring पुंवद्भाव। Again दर्शनीय etc. are from दर्शनीया, बहुथा is from बह्वी, वृकतिः is from वृकी meaning 'a fine wolf', अजथ्या is from अजा meaning 'good for the goat'.

मित—। स्त्रियाः पुंवत् भाषितपुंस्कादनूङ् इत्यनुवर्त्तते। तेन वृत्तौ 'स्त्रियाः' इत्यस्य 'भाषितपुंस्कानूङः स्त्रियाः' इत्यर्थः॥ 'तसिल्' इति "पञ्चम्यास्तसिल्" ( १६५३—५।३।७) इति विहितो गृह्यते, 'कृत्वसुच्' च "संख्यायाः क्रिया—" (२०८५—५।४।१७ ) इति। इह 'आकृत्वसुजन्तेषु' इत्यपपाठः। 'कृत्वसुजन्तेषु' इति विवक्षितम्। तसिल् आदौ येषां, कृत्वसुच् अन्ते येषां तेषु प्रत्ययेषु परतः पुंवद्भावो विधीयते। 'आकृत्वसुच्' इत्यव्ययीभावेन सिध्यति, आ कृत्वसुचः प्रत्ययाः इत्यर्थः। तत्र आकृत्वसुजन्तशब्दः प्रत्ययान्तं वक्ति न प्रत्ययम्। मुद्रितेषु तु बहुषु पुस्तकेषु अयमेव आङ्युक्तः पाठो दृश्यते। तत्त्वबोधिन्यां पुनराकारो नास्ति॥ बहवो हि इह प्रत्यया विहिताः, सर्वेषु तु पुंवद्भावो नेष्यते, इष्यते च ततोऽन्यत्रापि विहिते प्रत्यये। अतः आह 'परिगणनं कर्त्तव्यम्' इति। व्याप्तिशब्दः प्राप्त्यर्थकः। अव्याप्तिरप्राप्तिः इष्टस्य अप्राप्तिः। अतिव्याप्तिः अधिका प्राप्तिः अनिष्टस्य प्राप्तिः। तयोः 'पतिहाराय वारणाय 'परिगणनं कर्त्तव्यम्'। अथ परिगण्यन्ते प्रत्ययाः— 'त्रतसौ' इत्यादि। इह 'तिल्' कृत्वसुचः परस्तात्

'ष्यन्' तसिलात् प्राक्। अकृते परिगणने एतयोरभावे अव्याप्तिः स्यात्। देश्यादयः प्रत्ययाः तसिलादिषु पठ्यन्ते, तेषु च प्राप्ते पुंवद्भावे अतिव्याप्तिरपि। परिगणनेन तु उभयं परिह्रियते॥ बहुच इति वल् प्रत्यये परे बह्वीशब्दस्य पुंवद्भावः। बहुतः इति तसिल्परे तथा॥ अतिशयेन दर्शनीया इत्यर्थे तरपि तमपि च पुंवद्भावः॥ अतिशयेन पट्वी इत्यर्थे तरपि तमपि च अनेन 'पटु' इति पुंवद्भावः प्राप्तः। "घरूप" (९८५—६।३।४३) इत्यनेन तु पट्वि' इति ह्रस्वः। परवर्त्तित्वात् ह्रस्वविधिः प्रवर्त्तते—पट्वितरा, पट्वितमा॥ पूर्वं पट्वी इत्यर्थे पट्वीशब्दात् "भूतपूर्वे चरट्" (१९९९—५।३।५३) इति चरट्। पुंवद्भावः॥ पट्व्याः प्रकारेण युक्ता पट्वीप्रकारा इत्यर्थे पट्वीशब्दात् "प्रकारवचने जातीयर्" (२०२४—५।३।६९) इति जातीयर्। पुंवद्भावः॥ ईषदसमाप्ता दर्शनीया दर्शनीयेव इत्यर्थे दर्शनीयाशब्दात् "ईषदसमाप्तौ" इति कल्पब्देश्यदेशीयरो। पुंवद्भावः। प्रशस्तादर्शनीया इत्यर्थः। "प्रशंसायां रूपप्" (२०२१—५।३।६६) इति रूपप्। पुंवद्भावः॥ याप्या कुत्सिता दर्शनीया इत्यर्थे "याप्ये पाशप्" (१९९२—५।३।४७) इति पाशप्। पुंवद्भावः॥ बह्व्याः प्रकारेण इति बह्वीशब्दात् "प्रकारवचने थाल्" (१०७१—५।३।२३) इति थाल्, पुंवद्भावः॥ प्रशस्ता हस्ती इत्यर्थे हस्तीशब्दात् "हस्तिजीरहाभ्याम्—" (१५०४—५।४।४१) इति तिल्। पुंवद्भावः॥ अजाभ्यो हिता इत्यर्थे अजाशब्दात् "अजाविभ्यां थ्यन्" (१६६९—५।१।८) इति थ्यन्। पुंवद्भावः॥ परिगणनसामर्थ्यात् "जातेश्च" (८४२—६।३।४१) इति निषेधं बाधित्वा हस्तीशब्दे अजाशब्दे चपुंवद्भावः॥

दी—। "शसि बह्वल्पार्थस्य पुंवद्भावो वक्तव्यः" (वार्त्तिक)। बह्वीभ्यो देहि—बहुशः। अल्पाभ्यो देहि—अल्पशः।

Words in the feminine meaning बहु and अल्प have पुंवद्भाव when शस् follows. Thus बहुशः etc, अल्पशः etc.

मित—। बह्वीभ्यो देहि इत्यत्र "बह्वल्पार्थात् शस्—" (२१०९—५।४।४२) इति बह्वीशब्दात् शस्। पुंवद्भावः—बहुशः। एवमल्पशः॥

दी—। "त्वतलोर्गुणवचनस्य" (वार्त्तिक)। शुक्लाया भावः

शुक्लत्वम्। 'गुणवचनस्य' किम्? कर्त्र्या भावः कर्त्रीत्वम्। "शरदः कृतार्थता" इत्यादौ तु सामान्ये नपुंसकम्।

Words technically known as गुणवचन have पुंवद्भाव when त्व or तल् follows. Thus शुक्लत्वम् from शुक्ला। Why say गुणवचनस्य? Witness कर्त्रीत्वम् without पुंवद्भाव from कर्त्री which is not गुणवचन। कृतार्थता in "शरदः कृतार्थता" is not from कृतार्था but from कृतार्थ with सामान्ये नपुंसकम्।

मित।—त्वतलोः परयोः गुणवचनस्य पुंवद्भावो वक्तव्य इत्यर्थः। गुणमुक्तवान् गुणवचनः। स च "संज्ञा-जाति-कृदन्त-तद्धितान्त-समस्त-सर्वनाम-संख्याशब्दातिरिक्तः शब्दः" इति नागेशः। शुक्लशब्दोऽव्युत्पन्नः गुणवचनः। भाषितपुंस्कश्चायम्। तेन शुक्लाया भावः इति-त्व-प्रत्यये पुंवद्भावः॥ कर्तृशब्दो भाषितपुंस्कः, परं कृदन्त इति न गुणवचनः, अतः कर्त्रीत्वम् इति पुंवद्भावो नास्ति॥ ननु "निरीक्ष्य मेने शरदः कृतार्थताम्" इत्यत्र 'कृतार्थता' इति शरदः, सम्बन्धे प्रयुक्तं दृश्यते। 'कृतार्थ' शब्दस्य भाषितपुंस्कत्वेऽपि बहुव्रीहितया समस्तत्वात् कृतार्थशब्दस्य पुंवद्भावो न स्यात्। 'कृतार्थाताम्' इत्यपि छन्दोविरुद्धम्। तत् कथं नामैतत्? उच्यते—नेह कृतः अर्थः अनया शरदा इति साक्षात् विवक्षा। किन्तु कृतः अर्थः येन तत् कृतार्थम् इति सामान्यतः कृतार्थेषु शरदः अन्तर्भावः॥

८२—। "भस्याढे तद्धिते" (वार्त्तिक)। हस्तिनीनां समूहो हास्तिकम्। 'अढे' किम्? रौहिणेयः। "स्त्रीभ्यो ढक्" (११२३—४।१।१२०) इति ढोऽत्र गृह्यते। "अग्नेर्ढक्"। (१२३६—४।२।३३) इति ढकि तु पुंवदेव—अग्नायी देवतास्य स्थालीपाकस्य आग्नेयः।

Feminine words have पुंवद्भाव when a तद्धित, other than ढ, beginning with य or a vowel follows. Thus हास्तिकम् from हस्तिनी in the sense 'a crowd of female elephants.' Why say अढे? Witness रौहिणेय with ढक् attached to रोहिणी which does

not assume the masculine form रौहित। Here the ढ in अग्ने is that of "स्त्रीभ्यो ढक्" (1123—4.1.120); the ढ of "अग्नेर्ढक्" 1236 4.2.33) allows पुंवद्भाव। Thus आग्नेयः &c. with ढक् attached to अग्नायी, the sense being, 'a saucer-full of pudding &c. having अग्नायी for the presiding deity'.

मित—। भसंज्ञकस्य भाषितपुंस्कानूङः स्त्रीवाचकस्य शब्दस्य पुंवत् तद्धिते परे, न तु ढकारादौ तद्धिते॥ हास्तिकमिति "अचित्त—" (१२५७—४।२।४७) इति ठक्प्रत्यये हस्तिनीशब्दस्य पुंवद्भावः। हस्तिन् ठक् (इक) इति स्थिते "नस्तद्धिते" (६७९—६।४।१४४) इति टिलोपः। असति पुंवद्भावे हस्तिनी ठक् इति स्थिते "यस्येति च" (३११—६।४।१४८) इति ईकारलोपे हस्तिन् ठक् इति जाते 'इन्'-भागस्य लोपो न भवति। स हि लोपः "नस्तद्धिते" इति विधीयते। तस्मिन् कर्त्तव्ये "असिद्धवत्—" (२१८३—६।४।२२) इति सूत्रेण "यस्येति च" इत्यस्य कार्य्यम् ईकारलोपः असिद्धः। तेन ईकारलोपेऽपि शिष्टं शब्दरूपम् ईकारान्तमेव मन्तव्यम्। ततो न इन्-लोपः। तेन 'हास्तिनिकम्' इति स्यात्॥ रोहितलोहितौ पर्य्यायौ। रोहितशब्दात् "वर्णात्—" (४६६—४।१।३९) इति स्त्रियां ङीपि तकारस्य नकारे रोहिणी। तस्या अपत्यमित्यर्थे इह ढकि पुंवद्भावप्रतिषेधे, रौहिणेयः, इतरथा हि रौहितेय इति स्यात्। नागेशस्तु प्रत्ययस्यापि निवृत्त्या इञि रौहितिरित्याह॥ अग्निशब्दस्य स्त्रियां "वृषाकप्यग्नि—" (४६४—४।१।३७) इति ऐकारे अन्तादेशे ङीपि च अग्नायी। "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" इति अग्नेर्विहितो ढक् अग्नाय्या अपि भवति। किन्तु अग्निसम्बन्धात् अग्नाय्यामपि अग्नित्वमस्ति इत्यभ्युपगमे उभयोस्तुल्यं प्रवृत्तिनिमित्तम्। एवम् 'अग्नायी' इति भाषितपुंस्कानूङ् स्त्रीशब्दः। ततः पुंवत्त्वे 'अग्ने ढक्' इति जाते 'आग्नेयः' इति रूपम्। एवमिह भाष्यस्वरसः। असति पुंवत्त्वे 'अग्नायी' इत्यस्य ईकारलोपे आग्नायेयी इति स्यात्॥

टी—। सपत्नीशब्दस्त्रिधा—शत्रुपर्य्यायात् सपत्नशब्दात् शार्ङ्गरवादित्वात् ङीनि एकः। समानः पतिर्यस्या इति विग्रहे विवाहनिबन्धनंपतिशब्दमाश्रित्य नित्यस्त्रीलिङ्गो द्वितीयः।

स्वामिपर्य्यायपतिशब्देन भाषितपुंस्कस्तृतीयः ॥ आद्ययोः शिवाद्यण्—सपत्न्या अपत्यं सापत्नः । तृतीयात्तु लिङ्गविशिष्ट-परिभाषया पत्युत्तरपदलक्षणो ण्य एव, न त्वण्; शिवादौ रूढयोरेव ग्रहणात्—सापत्न्यः ॥

The word सपत्नी is derived in three ways. First, from सपत्न which means an 'enemy' and, being of the शार्ङ्गरवादि class, takes ङीन् in the feminine. सपत्न, having a technical sense, is रूढ; सपत्नी, derived from it, is भाषितपुंस्कानूङ् and subject to पुंवद्भाव। A second derivation is from सपति in the sense समानः पतिर्यस्याः where पति through marriage, means 'husband'. This sense of पति is technical and hence सपति also is रूढि। But सपत्नी derived from it always means a woman; so it is not भाषित-पुंस्कानूङ्,—no पुंवद्भाव। Thirdly we may have the word from सपति with पति meaning 'master'—a यौगिक word. सपत्नी thus obtained is भाषितपुंस्कानूङ् and subject to पुंवद्भाव।

Now with the exposition सपत्न्या अपत्यम् we observe that सपत्नी, derived in the first two ways above, is of the शिवादि class and receives अण् yielding सापत्नः। But as the शिवादि class includes the रूढि derivatives only, the third, which is a यौगिक word, takes ण्य not अण्, by the rule "—पत्युत्तरपदाण्ण्यः" (1077—4.1.85) because by the maxim "—लिङ्गविशिष्टस्यापि ग्रहणम्", पत्युत्तरपद includes पत्न्युत्तरपद। Hence with पुंवद्भाव we get सापत्न्यः।

मित—। 'विधा' सिध्यति इति वाक्यशेषः। तदेव दर्शयति। सपत्न इत्यव्युत्पन्नं प्रातिपदिकं शत्रौ रूढम्।"रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः" इत्यमरः। शार्ङ्गरवादिषु पाठात् (पाठं परिकल्प्य) स्त्रियां ङीनि सपत्नी। इह प्रवृत्तिनिमित्तं शत्रुता। तच्च स्त्रियां पुंसि च तुल्यम्। तत् 'सपत्नी' इति भाषितपुंस्कानूङ् शब्दः पुंवद्भावस्य विषयः। इत्येका सिद्धिः॥ पाति रक्षति इति औणादिके डतिप्रत्यये 'पतिः' भर्त्तरि योगरूढः स्वामिनि यौगिकः। "धवः प्रियः पतिर्भर्त्ता" स्वामीत्वीश्वरः पतिरीशिता" इति

चामरः। 'समानः पतिरस्य जनस्य' इति विग्रहे सपतिः। इह प्रवृत्तिनिमित्तं भर्तृपक्षे एकभर्तृकता स्वामिपक्षे एकस्वामिकता। एतभर्तृकता पुनः स्त्रिया एव सम्भवति, एकस्वामिकता तु दासीदासादिषु सर्वत्र। आद्ये 'सपति' शब्दो नित्यं स्त्रियां वर्त्तते, "नित्यं सपत्न्यादिषु" ( ४९२—४।१।३५ ) इति च 'सपत्नी' इति रूपं लभते। न चायं भाषितपुंस्कानूङ् नापि पुंवद्भावविषयः। इयं द्वितीया सिद्धिः॥ एकस्वामिकतायां तदेव रूपं सपत्नीति, परन्तु भाषितपुंस्कानूङ् अयं शब्दः पुंवद्भावस्य विषयः। एषा तृतीया सिद्धिः॥ सपत्न्या अपत्यम् इति विग्रहे "स्त्रीभ्यो ढक्" इति ढकि प्राप्ते प्रथमद्वितीययोः शिवादिषु पाठात् "शिवादिभ्योऽण्" (१११५—४।१।११२) इत्यण्। ततः प्रथमस्य पुंवद्भावे ङीपो निवृत्त्या 'सापत्नः'॥ द्वितीयस्य तु न पुंवद्भावः किन्तु "यस्येति च" (३११—६।४।१४८) इति ईकारलोपे 'सापत्नः' इत्येव। तृतीयस्तु शिवादिषु न पठ्यते। तत्र ढकि प्राप्ते भाष्योक्तेन पूर्वविप्रतिषेधेन "दित्यदिति—" (१०७७—४।१।८५) इति ण्य-प्रत्ययो भवति। पुंवद्भावे 'सापत्यः'। ननु "दित्यदिति—" इति सूत्रं पतिशब्दे उत्तरपदे प्रवर्त्तते, इह तु पत्नीशब्द उत्तरपदम्। तत् ढकि 'सापत्नेयः' एव स्यात्। उच्यते "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्" इति पत्युत्तरपदे विधिः पत्न्युत्तरपदेऽपि भवति। नागेशस्तु ढकमेवाद्रियते॥

दो—। "ठक्छसोश्च" ( वार्त्तिक )। भवत्यास्छात्रा भावत्काः—भवदीयाः। एतद्वार्त्तिकम् "एकतद्धिते च ( १००—६।३।६२) इति सूत्रञ्च न कर्त्तव्यम्, "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" ( ७२८, वा ) इति भाष्यकारेष्ट्या गतार्थत्वात्। सर्वमयः—सर्वकाम्यति—सर्विका भार्य्या यस्य सर्वकभार्य्यः—सर्वप्रियः इत्यादि॥ पूर्वस्यैवेदम् "भस्त्रैषाजाज्ञाद्वा—" ( ४६६—७।३।४७ ) इति लिङ्गात्। तेन अकचि एकशेषवृत्तौ च न। सर्विका, सर्वाः॥

There is पुंवद्भाव when ठक् or छस् is added to भवती। Thus भावत्का: with ठक् and भवदीया: with छस् in the sense 'your pupils'.

This वार्त्तिक and the rule "एक—" ( 1000—6.3.62 ). are unnecessary, their purpose being served by "सर्वनाम्नो—" ( 728, V ) the इष्टिसूत्र of the भाष्यकार। Thus सर्वमयः from सर्वा ( तद्धितवृत्ति ), सर्वकाम्यति from सर्वा ( सनाद्यन्तवृत्ति ), सर्वकभार्यः from सर्विका and सर्वप्रियः from सर्वा ( समासवृत्ति ) &c. The पुंवद्भाव is of what precedes the cause for it, as appears from the rule "भस्या—" (466 ). Hence it is not available in an एकशेष or when अकच् follows. Thus सर्विका with अकच् and सर्वाः by एकशेष।

मित— । "भवतष्ठक्छसौ" ( १३३९—४।२।११५ ) इति विहितौ ठक्छसौ इह गृह्येते। तत् त्यदादिषु पठितो वृद्धसंज्ञको भवच्छब्द एवास्य विषयः। तस्य च स्त्रियां 'भवती' इति रूपम्। ठकि छसि च परे भवतीशब्दस्य पुंवद्भावः स्यात्। इति वार्त्तिकस्यार्थः॥ अथ ठक् ग्रहणं किमर्थं, यावता "भस्याढे—" इति सिद्ध एव ठकि पुंवद्भावः? ठस्य इकादेशात् प्रागेव भवतीशब्दस्य अभत्वेऽपि पुंवद्भावो यथा स्यादित्येवमर्थं ठग्ग्रहणम्। तेन 'भवत् ठक्' इति जाते "इसुसुक्—" (१२३१—७।४।५१) इति कादेशे भावत्कः। अकृते ठग्ग्रहणे भावतिक इति स्यात्॥ छसि तु "सिति च" ( १२५२—१।४।१६) इति पदत्वम् न तु भत्वम्। ततः अप्राप्ते पुंवद्भावे वचनम्॥ वृत्तिः पदविधिः। वृत्तयः समासवृत्तिस्तद्धितवृत्तिरित्येवमादयः पञ्च इत्युक्तं प्राक्। 'गतः' अतीतः 'अर्थः' प्रयोजनं यस्य तत् 'गतार्थं' निष्प्रयोजनम्। तस्य भावो गतार्थत्वम्। तस्मात् प्रयोजनाभावादित्यर्थः॥ सर्वमय इति तद्धितवृत्तेरुदाहरणम्। सर्वस्या आगत इति मयट्। पदत्वादप्राप्तेऽपि पुंवद्भावः सर्वनाम्नो भवति। वस्तुतस्तु 'सर्वः' इत्यत्र पुरुषविषयकमशेषत्वं प्रवृत्तिनिमित्तम् 'सर्वा' इत्यत्र तु स्त्रीविषयकम्। एवं प्रवृत्तिनिमित्तभेदात् भाषितपुंस्कत्वं नास्तीत्यप्रसङ्गः पुंवद्भावस्य॥ सर्वकाम्यति इत्यत्र आत्मनः सर्वा इच्छति इत्यर्थे काम्यच्। पुंवद्भावः॥ सर्विका इति नायं भाषितपुंस्कानूङ् शब्दः। तेन अप्राप्तः पुंवद्भावः सर्वनाम्नो भवति। अथ भवानिह भाषितपुंस्कत्वमाद्रियमाणः सूत्रेणैव प्राप्तिं मन्यते तदा षष्ठीसमासे सर्वप्रिय इत्युदाहरणम्। प्रियादिषु प्रतिषिद्धोऽपि सर्वासां प्रियः इति व्यधिकरणेऽपि पुंवद्भावः सर्वनाम्नो भवति॥ एष सर्वनाम्नः पुंवद्भावः 'पूर्वस्यैव' पूर्ववर्त्तिन एव शब्दस्य। येन वृत्तिस्तस्मिन् परभूते एव भवति इत्यर्थः। एतत्तु 'भस्यैढा—' (४६६) इति सूत्रादनु-

नीयते। तेन हि सूत्रेण 'एषा' इति सर्वनामशब्दस्य अकचि 'एषका' 'एषिका' इति रूपद्वयं प्रार्थ्यते। तत्र निमित्तं ककारात् परष्टाप्। 'एषा अकच्' इति स्थिते अव्ययादयः पूर्वमकच्, तेन एष् अकच् आ इति जाते एषका एषिका इति रूपद्वयम्। सति तु पुंवद्भावे टापो निवृत्तिः स्यात्, निमित्ताभावात् इत्वमपि न स्यात् रूपद्वयञ्च न सिद्ध्येत्। तदाह 'पूर्वस्यैव' इति॥ फलम् अकचि सर्विका न तु सर्वकः॥ एकशेषे एक एव शिष्यते परभूतं किञ्चिदपि नास्ति इति न पुंवत्। तेन सर्वाः न तु सर्वे इति॥

दी—। "कुक्कुट्यादीनामण्डादिषु" (वार्त्तिक)। कुक्कुट्या अण्डं कुक्कुटाण्डम्। मृग्याः पदं मृगपदम्। मृगक्षीरम्। काकशावः।

कुक्कुटी &c. have पुंवद्भाव when अण्ड etc. follow in a compound. Thus कुक्कुटाण्डम् from कुक्कुटी, मृगपदम् from मृगी; similarly मृगक्षीरम् etc.

मित—। उदाहरणेषु सर्वत्र षष्ठीतत्पुरुषः। कुक्कुटी मृगी इत्यादयो जातिशब्दा ङीषन्ताः॥

८३७। क्यङ्मानिनोश्च॥ ६।३।३६॥

दी—। एतयोः परतः पुंवत्। एनीवाचरति एतायते। श्येनीवाचरति श्येतायते। स्वभिन्नां काञ्चिद्दर्शनीयां मन्यते दर्शनीयमानिनी। दर्शनीयां स्त्रियं मन्यते दर्शनीयमानी चैत्रः।

Feminine words resume the masculine form when क्यङ् is to be attached or when मानिन् is the उत्तरपद। Thus एतायते, behaves like a doe; श्येतायते, behaves like a hawk. In these एनी becomes एत and श्येनी becomes श्येत by पुंवद्भाव। Also दर्शनीयमानिनी comes from दर्शनीया the sense being 'she considers some girl other than herself as fine-looking'; दर्शनीयमानी too, is from दर्शनीया in the sense 'Chaitra thinks the woman is good looking'.

मित—। क्यङि परतो मानिनि चोत्तरपदे 'स्त्रिया पुंवत् भाषितपुंस्कादनूङ्'

इत्यर्थः। एतश्चित्राङ्गो मृगविशेषः। स्त्रियाम् एनी। एतशब्दस्य मुख्यतो वर्णवाचित्वात् "वर्णादनुदात्तात्" (४९६—४।१।३९) इति वैकल्पिके ङीपि तकारस्य नकारः। पक्षे एता। "कर्त्तुः क्यङ्—" (२६६५—३।१।११) इति क्यङि पुंवद्भावे 'एत य लट् ते' इति स्थिते "अकृत्सार्व—" (२२९८—७।४।२५) इति दीर्घे एतायते। 'उत्तरपदे' इत्यस्ति॥ अपरां काञ्चित् दर्शनीयां मन्यते इयम् इत्यर्थे दर्शनीया मन णिनि इति स्थिते दर्शनीया मानिन् इति स्त्रीप्रत्ययोत्पत्तेः प्रागेव समासः। एतञ्च "गतिकारक—" (७८२, वा) इत्यवोचं प्राक। तत्र दर्शनीयात्वं मननञ्च भिन्नाधिकरणस्थम् इति "स्त्रियाः पुंवत्—" (८३१—६।३।३४) इति अप्राप्तः पुंवद्भावः अनेन विधीयते। ततो दर्शनीयमानिन् इति जाते ङीपि सुपि दर्शनीयमानिनी॥ एवं कामपि दर्शनीयां मन्यते चैत्रः इति दर्शनीया मानिन् इत्यादि प्राग्वत्॥

८३८। न कोपधायाः॥ ६।३।३७॥

दो—। कोपधायाः स्त्रिया न पुंवत्। पाचिकाभार्य्यः। रसिकाभार्य्यः। मद्रिकायते। मद्रिकामानिनी।

Words having क for their pen-ultimate do not resume the masculine form. Thus पाचिका etc.—one whose wife is a cook, रसिका etc.—one whose wife is witty. Here पाचिका and रसिका are भाषितपुंस्कानूङ् so by "स्त्रियाः पुंवत्—" (831) पाचक etc. रसिक etc. were expected and are barred. Again मद्रिका in the sense मद्रेषु जाता is भाषितपुंस्कानूङ्; hence the masculine form is expected when क्यङ् or मानिन् follows, but is here prohibited.

मित—। ककार उपधा अस्याः कोपधा। तस्याः। पचति इयमिति पाचिका। रसः अस्ति अस्या रसिका। उभयमपि भाषितपुंस्कानूङ्। 'स्त्रियाः पुंवत्—' (८३१) इति प्राप्तः पुंवद्भावः प्रतिषिध्यते॥ मद्रेषु जाता इत्यर्थे "मद्रवृज्योः कन्" (१३५५—४।२।१३१) इति कन् प्रत्यये स्त्रियां मद्रिका। अयमपि भाषितपुंस्कानूङ् शब्दः। "क्यङ्मानिनोश्च" (८३७) इति प्राप्तः प्रतिषिध्यते॥

टी—। "कोपधप्रतिषेधे तद्धितवुग्रहणम्" ( वार्त्तिक )। नेह—पाका भार्य्या यस्य स पाकभार्य्यः।

This prohibition regarding words having क in the penultimate applies only to words got from a तद्धित or from an affix that has वु in its enunciation. Thus पाक derived irregularly with the उणादि कृत affix कन् is exempted and admits of पुंवद्भाव ; hence पाकभार्य्यः—having a child wife.

मित—। 'वु' इति प्रत्ययावयवः ण्वुल्वुन्प्रभृतिषु दृष्टः। तद्धितश्च वुश्च 'तद्धितवू'। तयोः 'ग्रहणम्'। तद्धितयोगात् वुयोगाच्च या कोपधा जाता तस्या एवायं पुंवद्भावनिषेध इत्यर्थः। पाका शिशुः। "पाकः परिणतौ शिशौ" इति मेदिनी। औणादिककन्प्रत्ययान्तो निपातितः। "अर्भकपृथुकपाका वयसि" (उ° ५।५३) इत्यत्र 'पिबतेः कन्' इति दीक्षितः। अस्य तु पुंवद्भाव एव॥

८३९। संज्ञापूरण्योश्च ॥ ६।३।३८ ॥

टी—। अनयोर्न पुंवत्। दत्ताभार्य्यः। दत्तामानिनी। दानक्रियानिमित्तः स्त्रियां पुंसि च संज्ञाभूतोऽयमिति भाषितपुंस्कत्वमस्ति। पञ्चमीभार्य्यः। पञ्चमीपाशा।

Class names and ordinal numbers do not resume the masculine form. Thus दत्ता etc. Here पुंवद्भाव was expected because दत्त is used as a class name through gift and is applicable to both males and females, thus it is भाषितपुंस्क and the rules apply ; hence the prohibition. Again पञ्चमी etc.—One who has wedded a fifth wife. पञ्चमीपाशा—the wretched fifth wife.

मित—। संज्ञाशब्दानां पूरणप्रत्ययान्तानाञ्च पुंवद्भावो न स्यादित्यर्थः। दानादेव दत्तसंज्ञा। तेन दत्ता इति भाषितपुंस्कानूङ्। ततो 'दत्ताभार्य्य' इत्यत्र "स्त्रियाः पुंवत्—" ( ८३१—७।३।३४ ) इति प्राप्नोति ; 'दत्तामानिनी' इत्यत्र "स्त्रिया पुंवत्" इति वा "क्यङ्—" ( ८३७—६।३।३६ ) इति वा प्राप्तिः। उभयमपि प्रतिषिध्यते॥

पञ्चमीपाश्या इति कुत्सिता पञ्चमी इत्यर्थे "याप्ये पाशप्" (१९६३—५।३।४७) इति पाशप्। याप्यः कुत्सितः। "तसिलादिषु—" (८२६—६।३।३५) इति भावस्य प्रतिषेधः॥

८४०। वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे॥ ६।३।३९॥

दी—। वृद्धिशब्देन विहिता या वृद्धिः, तद्धेतुर्यस्तद्धितः, अरक्तविकारार्थः, तदन्ता स्त्री न पुंवत्। स्रौघ्नीभार्यः। माथुरीयते। माथुरीमानिनी॥ 'वृद्धिनिमित्तस्य' किम्? मध्यमभार्यः। 'तद्धितस्य' किम्? काण्डलावभार्यः। "वृद्धि"-शब्देन किम्? तावद्भार्यः। 'रक्ते' तु काषायी कन्या यस्य स काषायकन्यः। 'विकारे' तु हैमी मुद्रिका यस्य इति हैममुद्रिकः। वृद्धिशब्देन वृद्धिं प्रति फलोपधानाभावात् इह पुंवत्—वैयाकरणभार्यः, सौवश्वभार्यः।

The masculine form will not be resumed by a word with a तद्धित affix in connection with which वृद्धि is enjoined by actually mentioning the word वृद्धि; but the prohibition does not apply to तद्धित affixes in the sense तेन रक्तम्—dyed with it, or तस्य विकारः—made of it, got out of it. Thus स्रौघ्नी, माथुरी etc. retain their feminine form in स्रौघ्नीभार्यः etc. Why say वृद्धिनिमित्तस्य? Witness मध्यमभार्यः in which मध्यमा becomes मध्यम because the तद्धित affix मम् after मध्य does not cause वृद्धि। Why say तद्धितस्य? Witness काण्ड etc. in which काण्डलावी becomes काण्डलाव because the affix अण् here is a कृत् and not a तद्धित। Why say वृद्धिशब्देन? Witness तावत् etc. in which तावती becomes तावत् because the वृद्धि in तावत् is by the special injunction "आ सर्वनाम्नः" (430—6. 3. 91) to which the word वृद्धि does not attach directly or by अनुवृत्ति। But पुंवद्भाव is not barred if the affix is in the sense 'dyed with.

it' ; thus काषाय etc. where काषायी has become काषाय because the word means 'dyed red.' Similarly in हैम etc. we get पुंवद्भाव in हैमी because हैमी means 'made of gold.' But then how do वैयाकरणी, सौवश्वी etc. become वैयाकरण, सौवश्व etc. ? These do not mean 'dyed with it' or 'made of it'. The fact is here ऐ and औ are ordained by actually naming them. Hence though the result is वृद्धि it is not got from वृद्धिशब्द, therefore no prohibition.

मित्त—) 'अरक्तविकारे विहितस्य वृद्धिनिमित्तस्य तद्धितस्य च' इत्यन्वयः। "तेन रक्तम्—" (१२०३—४।२।१) इति "तस्य विकारः" (१५१४—४।३।१३४) इति च यस्तद्धितो विहितः तदितरो वृद्धेर्निमित्तं यस्तद्धितः इत्यादार्थः। 'वृद्धि' इत्यनेनेह वृद्धिशब्देन विहिता, वृद्धिशब्दमुच्चार्य्य अनुवर्त्त्य वा विहिता, वृद्धिर्लभ्यते। एतदर्थं "वृद्धिशब्द आवर्त्तते" इति नागेशः। व्याख्याने वृद्धिशब्दो द्विरुच्चार्य्यः इति तदाशयः। तदपि कथमिति चेत्—लक्षणया वृद्धिशब्द इह वृद्धिशब्देन विहितायां वृद्धौ वर्त्तते॥ स्रुघ्ने भवा स्रौघ्नी। इह अण् इति वृद्धिनिमित्तस्तद्धितः, तेन पुंवद्भावो न। एवं माथुरी। मध्ये भवा मध्यमा। मप्रत्ययो न वृद्धिनिमित्तम्। पुंवद्भावः॥ काण्डं लुनाति इयमिति काण्डलावी। इह अण् वृद्धिनिमित्तं, परं कृदयं न तद्धितः। पुंवद्भावः॥ तत् परिमाणमस्याः तावती। "यत्तदेतेभ्यः—" (१८४०—५।२।३९) इति वतुप्। न त्वयं वृद्धिनिमित्तम्। वृद्धिस्तु "आ सर्वनाम्नः" (४२०—६।३।९१) इति विधीयते न वृद्धिशब्देन। तेन पुंवद्भावः॥ काषायेण मञ्जिष्ठादिना रक्ता काषायी। "तेन रक्तम्—" (१२०२—४।२।१) इत्यण्। पुंवद्भावः॥ हेम्नो विकार इयं हैमी। "तस्य विकारः" (१५१४—४।३।१३४) इत्यर्थे "अनुदात्तादेश्च" (१५२०—४।३।१४०) इत्यञ्। पुंवद्भावः॥ ननु वैयाकरणी भार्य्या अस्य वैयाकरणभार्य्यः, सौवश्वी भार्य्या अस्य सौवश्वभार्य्यः, इत्येतयोः कथं पुंवद्भावः? उच्यते—व्याकरणमधीते इयमिति स्त्रियामपि "न य्वाभ्याम्—" (१०२८—७।३।३) इति निषिद्धा वृद्धिः। परमिह ऐचोरेव फलम् ऐकारः स आसज्यते। न च तत् वृद्धिशब्देन, किन्तु—"पूर्वौ तु ताभ्यामैच्" (१०२८—७।३।३) इति ऐकारोच्चारणेन। तदिह 'वृद्धिं प्रति' फलमैकारः तस्य 'उपधानम्' आवश्यकम् 'वृद्धिशब्देन' अकृतत्वात् 'पुंवत्' भवत्येव॥

एवं सु सज्जितः अश्व अस्य स्वश्वः। तस्य अपत्यं स्त्री इत्यपि अपि तथैव प्रक्रिया पुंवद्भावश्च। उदाहरणद्वयेऽपि यकारवकारौ इक आदेशौ पदान्ते वर्तेते ॥

७४१। स्वाङ्गाच्चेतः ॥ ६।३।४८ ॥

टी—। स्वाङ्गात् य ईकारस्तदन्ता स्त्री न पुंवत्। सुकेशी-भार्य्यः। 'स्वाङ्गात्' किम्? पटुभार्य्यः। 'ईतः' किम्? अकेशभार्य्यः।

A feminine word got by attaching ई to what is technically known as a स्वाङ्गवाचक word, will not resume the masculine form. Thus in सुकेशीभार्य्यः the word सुकेशी does not become सुकेश। Why say स्वाङ्गात्? Witness पटुभार्य्यः where पट्वी has become पटु because पटु is not स्वाङ्ग। Why say ईतः? Witness अकेशभार्य्यः where अकेशा resumes the masculine form अकेश।

मित—। 'स्वाङ्गम्' इति पारिभाषिकं गृह्यते। "अद्रवं मूर्त्तिमत् स्वाङ्गं प्राणिस्थमविकारजम्। अतत्स्थं तत्र दृष्टञ्च तेन चेत् तत् तथायुतम्।" इति। स्वाङ्गादिति गम्यमानपरशब्दयोगे पञ्चमी। 'स्त्रियाः पुंवत्' इत्यस्ति 'न' इति च। 'ईतः' इति षष्ठी 'स्त्रियाः' इत्यस्य विशेषणम्। तदन्तविधिः। तेन 'स्वाङ्गात्' परः यः 'ईकारः' तदन्तायाः 'स्त्रियाः न पुंवत्' इत्यन्वयः॥ सुदर्शनाः केशा अस्याः सुकेशी सुकेशा वा। आद्ये पुंवद्भावप्रतिषेधः॥ 'पटु' इति न स्वाङ्गम्। तेन पट्वी भार्य्या अस्य इत्यत्र पुंवद्भाव एव—पटुभार्य्यः॥ अवर्त्तमानाः केशा अस्याः अकेशा। "सहनञ्—" (५।१२—४।१।५७) इति ङीषभावः पुंवद्भावे अकेशभार्य्यः॥

टी—। "अमानिनीति वक्तव्यम्" (वार्त्तिक)। सुकेश-मानिनी।

The prohibition does not come in if मानिन् follows. Thus सुकेशमानिनी with सुकेशी changed into सुकेश।

मित—। मानिन्शब्दे उत्तरपदे समानाधिकरणे असमानाधिकरणे च विहितः पुंवद्भावः। तस्य तु 'स्वाङ्गाच्चेतः' इति प्रतिषेधो न भवतीत्यर्थः। सुकेशीमात्मानं मन्यते, अभिन्नां काञ्चित् सुकेशीं मन्यते वा सुकेशमानिनी॥

८४२। जातेश्च ॥ ६।३।४१ ॥

दी—। जातेः परो यः स्त्रीप्रत्ययस्तदन्तं न पुंवत्। शूद्राभार्य्यः। ब्राह्मणीभार्य्यः। सौत्रस्यैवायं निषेधः। तेन हस्तिनीनां समूहो हास्तिकम् इत्यत्र "भस्याढे—" (८३६, वा) इति तु भवत्येव।

Feminine class-names do not resume the masculine form. Thus शूद्रा etc. This prohibition affects Panini's rules only and does not apply to Katyayana's Varttikas such as "भस्याढे—" etc. Consequently when ठक् is attached to हस्तिनी in the sense 'a multitude of she-elephants' the word changes into हस्तिन् yielding हास्तिकम्।

मित—। 'स्त्रियाः पुंवत्' इत्यस्ति 'न' इति च। 'ईतः' इति नानुवर्त्तते। 'जातेः' इति 'स्त्रियाः' इत्यस्य विशेषणम्। जातेः स्त्रिया न पुंवत् इत्यन्वयः। जातेः जातिवाचिनः 'स्त्रियाः' स्त्रीप्रत्ययान्तस्य शब्दस्य 'न पुंवत्' इत्यर्थः। एवं हि वृत्तिकृता व्याख्यातम्। दीक्षितस्तु 'जातेः' इति पञ्चम्यन्तं मन्यते, तदाह 'जातेः परो यः' इति॥ 'शूद्रा' इत्यत्रादिषु पठ्यते "शूद्रा चामहत्—" (४५४, ग० सू०) इति॥ 'सौत्रस्य' सूत्रे दृष्टस्य पाणिनिना विहितस्य पुंवद्भावस्य इत्यर्थः। तेन कात्यायनीयानां "भस्याढे—" (८३६, वा) प्रभृतीनां न निषेधः। अतश्च हस्तिनीनां समूह इत्यर्थे हास्तिकमिति ठकि। असति पुंवद्भावे हास्तिनिकमिति स्यादिति प्रपञ्चितं प्राक्॥ इतः शेषाधिकारः। अथः परमप्रथमान्तानां बहुव्रीहिः॥

८४३। संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये ॥ २।२।२५ ॥

दी—। संख्येयार्थया संख्यया अव्ययादयः समस्यन्ते स बहुव्रीहिः। दशानां समीपे ये सन्ति ते उपदशाः। नव एकादश वा इत्यर्थः। "बहुव्रीहौ संख्येये—" (८५१—५।४।७३) इति वक्ष्यमाणो डच्।

Indeclinables, numerals and the words आसन्न, अदूर and अधिक are compounded into a बहुव्रीहि with numerals that indicate

what is counted. Thus, उपदश in the sense 'something near ten in number', i.e., a group of nine or eleven things. Here उपदशन् takes the समासान्त affix डच् by "बहुव्रीहौ—" ( 851 ) as will be explained further on.

मित—। संख्यातव्यं 'संख्येयम्', यस्मिन् गणनया संख्यायोगः कर्त्तव्यः तत्। 'संख्येयार्थया संख्यया' इत्यस्य संख्येये या संख्या वर्त्तते तया इत्यर्थः। क्वचिदस्मिन् दश काकाः इत्यत्र काकाः संख्येयाः। दशत्वसंख्या इह संख्येयेषु काकेषु वर्त्तते। उत्पतिते एकस्मिन् काके नव तिष्ठन्ति न दश। दशानां समीपे तदा काकाः—उपदशाः काकाः। एवमन्यत आगत्य मिलिते एकस्मिन् काके एकादश काका भवन्ति न दश। तदापि दशानां समीपे काका—उपदशा काकाः। समासे उप दशन् इति स्थिते डच्। टिलोपे उपदशाः॥ नायमव्ययीभावस्यापवादो बहुव्रीहिः। अव्ययीभावस्तु 'समीपम्' इत्यर्थे भवति, इह 'समीपे' इत्यर्थः। तेन अव्ययीभावप्रसङ्गो नास्ति॥ दशानां समीपे ये ते उपदशाः इत्यत्र बहुव्रीहिलक्षणमन्यपदार्थता अस्ति। समस्यमानानां प्रथमान्तता तु नास्ति। किञ्च 'ये ते' इति प्रथमार्थे समासः। एवं पूर्वेण अप्राप्तेऽयं विधिः॥

८८४। ति विंशतेर्डिति॥ ६।४।१४२॥

टी—। विंशतेर्भस्य तिशब्दस्य लोपः स्यात् डिति। आसन्नविंशाः—विंशतेरासन्ना इत्यर्थः। अदूरत्रिंशाः। अधिकचत्वारिंशाः। द्वौ वा त्रयो वा द्वित्राः। द्विरावृत्ता दश द्विदशाः—विंशतिरित्यर्थः।

If the word विंशति is a भ, i. e., if an affix, with a य or a vowel leading, follows it, it will drop its ति provided the affix has dropped a ड। Thus with the exposition आसन्ना विंशतेः we get आसन्न विंशति डच् yielding आसन्नविंशाः, close upon twenty, i. e., nineteen or twenty-one. Similarly अदूरत्रिंशाः, not far from thirty; अधिक etc. more than forty; both with टिलोप। Also द्वित्राः, two or three; and द्विदशाः, twice ten, i. e., twenty, with टिलोप।

मित—। विंशतेरासन्ना इति वाक्ये बहुव्रीहौ आसन्न विंशति डच् इति स्थिते आसन्नविंशति अ इति जाते, तिलोपे आसन्नविंश अ इत्यत्र विंशशब्दस्य अकारो भसंज्ञकः, न पदम्। तेन "अतो गुणे" ( १९१—६।१।९७ ) इति पररूपे आसन्नविंश इत्यदन्तं प्रातिपदिकम्। बहुत्वे आसन्नविंशाः॥ इह ये आसन्नास्ते एव समासेन कथ्यन्ते। तत् अन्यपदार्थता नास्ति। समानाधिकरणत्वञ्च न, प्रथमार्थेऽपि च समासः। एवं सर्वथा बहुव्रीहिलक्षणविरहात् अप्राप्ते विधिरयम्॥ त्रिंशतः अदूरे अदूरत्रिंशाः इति उपदशा इतिवत् व्याख्येयम्॥ चत्वारिंशतः अधिकाः अधिकचत्वारिंशाः। इह आसन्नविंशाः इत्यत्रेव अप्राप्ते विधिः॥ द्वौ वा त्रयो वा इत्यत्र न द्विशब्दस्य न वा त्रिशब्दस्यार्थः प्रतीयते किन्तु तयोरन्यतरस्येति। एवमिह वा-शब्दस्यार्थः प्रधानम्। तेन अन्य-पदार्थता अस्ति। प्रथमान्तानि च पदानि। तत् पूर्वेणैव सिद्धो बहुव्रीहिः। कबभावार्थं तु शेषाधिकारादबहिः पाठः। भवतु, कथमिह बहुवचनम्? यदि द्वौ तर्हि द्विवचनं प्राप्यम्। उच्यते—द्वौ वा इत्युक्ते द्वावेव इति न प्रतीतिः त्रयो वा इत्यपि प्रतीयते। एवं त्रयो वा इत्युक्ते द्वौ वा इति च। तदियं पक्षाधिष्ठाना वाक्। ततो बहुवचनमिति भाष्यम्॥ द्विरावृत्ता इति क्रियाभ्यावृत्तौ सुच्। अर्थनिर्देशोऽयम्। तेन समासे सुच् न दृश्यते। क्रियाभ्यावृत्तौ सत्यामेव द्विशब्दः संख्येये वर्तते। अतः सुजर्थस्य उक्तत्वात् न सुचः पुनः श्रवणम्॥ इह आवृत्तिद्वारा द्विशब्दस्य दशन्शब्देन सामर्थ्यम्, तदाह 'द्विरावृत्ता' इति॥ अयमुत्तरपदार्थप्रधानः समास इति पूर्वेण न प्राप्तिः॥

८४५। दिङ्नामान्यन्तराले॥ २।२।२६॥

दी—। दिशो नामानि अन्तराले वाच्ये प्राग्वत्। दक्षिणस्याः पूर्वस्याश्च दिशः अन्तरालं दक्षिणपूर्वा। नामग्रहणात् यौगिकानां न—ऐन्द्र्याश्च कौवेर्याश्च अन्तरालं दिक्।

Names of the quarters are compounded into a बहुव्रीहि to indicate the interval of space between them. Thus दक्षिणपूर्वा, South-east, means any direction between south and east. नामन् in the rule implies that the समास is of the well-known names-

only and is not available when names are coined to designate the quarters. Thus ऐन्द्री means the east and कौवेरी the north, but these cannot be compounded to denote the interval.

मित—। 'दिशः' इति लिपिकरप्रमाद इवाभाति। 'दिशाम्' इति तु युक्तं न्याय्यम्। अन्तरालञ्च ताभ्यामेव भवति, तत् तयोर्द्वयोः समासः॥ इह अन्तरालमपि दिगेव, तेन दक्षिणपूर्वा इति स्त्रीलिङ्गता। "सर्वनाम्नो वृत्तिमात्रे—" (७२८, वा) इति दक्षिणाशब्दस्य पुंवद्भावः॥ अन्यपदार्थता वर्त्तते। समानाधिकरणता तु नास्ति इति अप्राप्ते बहुव्रीहिर्विधीयते॥ सूत्रे 'नाम' इति प्रसिद्धं रूढं नाम लभ्यते न तु ऐन्द्री कौवेरी इत्यादिकं यौगिकं नाम। तेन यौगिकानि न समस्यन्ते॥

८४६। तत्र तेनेदमिति सरूपे ॥ २।२।२७ ॥

टी—। सप्तम्यन्ते ग्रहणविषये सरूपे पदे, तृतीयान्ते च प्रहरण-विषये, इदं युद्धं प्रवृत्तमित्यर्थे समस्येते कर्मव्यतिहारे द्योत्ये, स बहुव्रीहिः। 'इति'-शब्दादयं विषयविशेषो लभ्यते। इच् समासान्तो वक्ष्यते। तिष्ठद्गु प्रभृतिषु इच्-प्रत्ययस्य पाठात् अव्ययीभावत्वमव्ययत्वञ्च। "अन्येषामपि दृश्यते" (३५३८—६।३।१३७) इति दीर्घः। केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तं केशाकेशि। दण्डैश्च दण्डैश्च प्रहृत्य इदं युद्धं प्रवृत्तं दण्डादण्डि। मुष्टीमुष्टि।

Two indentical words in the सप्तमी referring to what is gripped, or two such words in the तृतीया refering to some weapon, are compounded into a बहुव्रीहि in the sense इदं युद्धं प्रवृत्तम्—The fight began—and implying reciprocity. The special subject-matter for the operation of the rule, viz, the grip, the weapon, the fight and reciprocity, is inferred from इति in the rule which refers to what is ordinarily seen in every-day life. Such compounds receive इच् as समासान्त as will be explained later

(866—5.4.127). This इच् again is listed with the तिष्ठद्गु class of words; hence after इच् is added, the whole is treated as an अव्ययीभाव and becomes an अव्यय। The final vowel in the first half of the double form is lengthened by 'अन्येषामपि—' (3539). Thus fight in which each grips the other's locks is called केशाकेशि। This is obtained by doubling केशेषु which offers the grip. We then get केशेषु केशेषु। This being a बहुव्रीहि the सुप् disappears leaving केश केश; lengthening the vowel, केशाकेश। Next adding इच् we have केशाकेशि which is an अव्ययीभाव and therefore an अव्यय। Hence केशाकेशि युद्धं प्रवृत्तम्, दण्डादण्डि युद्धं प्रवृत्तम्, मुष्टीमुष्टि युद्धं प्रवृत्तम् etc.

मिति—। 'तत्र' इति सर्वनाम्ना तदर्थे सप्तम्यन्तं परामृश्यते, "तत्र साधुः" इत्यादिषु यथा। एवं 'तेन' इति सर्वं तृतीयान्तम् "तेन क्रीतम्" इतिवत्। 'सरूपे' आवृत्त्या [illegible] ॥ "तत्र इदमिति तेन इदमिति च सरूपे समस्येते' इत्यन्वयः॥ एकरूपयोः पदयोः सप्तम्यन्तयोः तृतीयान्तयोर्वा समासः स बहुव्रीहिः इत्यर्थः। सप्तम्यन्तयोः पदयोर्विशेषमाह 'ग्रहणविषये पदे' इति। 'ग्रहणं' मुष्ट्यादिभिर्धारणं 'विषयो' ययोः तादृशे सरूपे पदे समस्येते। तृतीयान्तयोस्तु विशेषः 'प्रहरणविषये' इति। 'प्रहरणं' ताडनं 'विषयो' ययोः तादृशे सरूपे पदे समस्येते। कः समासार्थः? 'इदं युद्धं प्रवृत्तमित्यर्थे समस्येते'। तत्र च 'कर्मव्यतिहारः' परस्परकरणं 'द्योत्यते'। 'परस्परकरणेन प्रवृत्तमिदम्' इत्येतदेव समासार्थः 'युद्धम्' इति विशेष्यमाणम्॥ केशेषु केशेषु गृहीत्वा प्रवृत्तमिदमिति सप्तम्यन्तयोर्बहुव्रीहिः। सुब्लुकि केशकेश इति स्थिते "अन्येषामपि—" (३५३९) इति दीर्घः। केशाकेश इति जाते "इच् कर्मव्यतिहारे" (८६६—५।४।१२७) इति इच्—केशाकेशि। अयञ्च इच् तिष्ठद्गुप्रभृतिषु पठ्यते। तेन इजन्तस्य अव्ययीभावसंज्ञा अव्ययत्वञ्च। केशाकेशि युद्धम्॥ एवं दण्डेन दण्डेन प्रहृत्य प्रवृत्तं दण्डादण्डि युद्धम्। मुष्टीमुष्टि इत्यत्रापि मुष्टिभिः प्रहृत्य तृतीयान्तयोः समासः॥ अन्यपदार्थेऽपि [illegible] वचनम्॥ गृहीत्वा प्रवृत्तम्, प्रहृत्य

'प्रहृतम्' इत्येतयोः 'स्थितयोः' इत्यर्थोऽवगन्तव्यम्। ततो बहुव्रीहिना स्थितयोः प्रहृत्य स्थितयोः प्रहृत्य युद्धमिति समानकर्तृकत्वनिर्वाहः ['एवंविधस्थले महद्भिरपि मनीषिभिर्यात्म् एवमाह'] ॥ सविभक्तिकस्य एकार्थीय इति पदे तदपवादोऽयं बहुव्रीहिः ॥ बाहुभ्यां बाहुभ्यां प्रहृत्य इदं प्रहृतमित्यर्थे बाहुबाहु इञ् इति स्थिते—

८४३। ओर्गुणः ॥ ६।४।१४६ ॥

टी—। उवर्णान्तस्य भस्य गुणः स्यात्तद्धिते। अवादेशः— बाहूबाहवि। 'ओरोत्' इति वक्तव्ये गुणोक्तिः 'संज्ञापूर्वको विधिरनित्यः" (परिभाषा) इति ज्ञापयितुम्। तेन 'स्वाय-म्भुवम्' इत्यादि सिद्धम्। 'सरूपे' इति किम्? हलेन मुसलेन।

Words ending in उ or ऊ take गुण when a तद्धित, with य or a vowel leading, follows. Thus बाहूबाहु इञ् becomes बाहूबाहो इ, i.e., बाहूबाहवि with the substitution of अव्। Here ओ is wanted in place of उ or ऊ, hence the rule should have been ओरोत् which is shorter and directly mentions the requirement. The fact that this is avoided and the requirement, i.e. ओ is indirectly stated implies that injunctions given in technical terms such as गुण, वृद्धि &c. are not universally binding, but have exceptions now and then. Hence स्वायम्भुव &c. without गुण in the sense 'son of स्वयम्भु' &c. Why say सरूपे? Witness absence of समास in हलेन मुसलेन प्रहृत्य &c.

मित—। 'ओः' इति उ-शब्दस्य षष्ठ्या एकवचनम्। तदन्तविधिः। 'भस्य' इत्यधिकारः। तेन 'ओः' उवर्णान्तस्य भस्य इत्यर्थः। 'तद्धिते' इत्यनुवर्त्तते ॥ इञ् इति तद्धितः। बाहूबाहु इञ् इति गुणे बाहूबाहो इ—बाहूबाहवि ॥ ननु उकारस्य स्थाने ओकार इह प्रार्थ्यते तत् ओकार एव किं नोक्तः सूत्रे "ओरोत्" इति? किमर्थमस्य ट-

निर्देशो गुणनिर्देशश्च कृतः "ओर्गुणः" इति ? उच्यते—स्फुटीकरणं चाद्दिग्रस्य नित्यता प्राप्नोति । नित्योऽयमादेशो माभूदित्युक्तम् "ओर्गुणः" इति । ज्ञाप्यते चेयं परिभाषा 'संज्ञापूर्वको यो विधिः' सञ्ज्ञाशब्दमुच्चार्य्य तयैव संज्ञया यद्विधीयते सत् 'अनित्यः' व्यभिचारि इति । अस्य ज्ञापने प्रयोजनञ्च स्वयम्भुवः इदम् अपत्यं वा इत्यर्थे अणि स्वयम्भु अण् इति स्थिते गुणाभावे "अचि श्नु धातु—" (२७१—६।४।७७) इत्युवङि स्वयम्भुव् अण् इति जाते स्वायम्भुवम् ॥ परिभाषेयं भाष्ये नोक्ता प्रयोगबाहुल्या-द्भाष्यावूहिता । प्रयोगाश्च "धाम स्वायम्भुवं ययुः" "स्वायम्भुवान्मरीचेर्यः प्रबभुव प्रजापतिः" इत्यादयः । सर्वमेतदसाध्वेव इति तु नागेशः ॥ भिन्नेऽपि नायं समासः । तथा च हस्तेन मुसलेन प्रहृत्य इदं प्रवृत्तं युद्धमिति हस्तामुसलि युद्धमिति न भवति ॥

८४८ । तेन सहेति तुल्ययोगे ॥ २।२।२८ ॥

दी—। तुल्ययोगे वर्त्तमानं 'सह' इत्येतत् तृतीयान्तेन प्राग्वत् ।

सह implying equal participation in any matter is compounded in a बहुव्रीहि with the word that takes तृतीया in connection with it.

मित—। 'तेन' इति तृतीयान्तस्य उपलक्षणम् । तृतीया च इह सहयोगे एव । सहयोगे यत् तृतीयान्तं भवति तेन समस्यते । किं समस्यते ? 'सह इति' सह इत्येष शब्दः समस्यते । किम्भूतः सह ? 'तुल्ययोगे' यः सहशब्दः स समस्यते । यः सहशब्दः एकस्यां क्रियायाम् एकाधिकस्य योगं गमयति स समस्यते ॥ एतेन सहशब्दस्य पूर्वनिपातो लभ्यते ॥ 'इति'-शब्द इह सहशब्दस्य पूर्वपदत्वं बोधयति । अन्यतोऽस्मिन् "तेन सह तुल्ययोगे" इत्येतावता किं समस्यते इत्यनिर्दिष्टं स्यात् । अन्यपदार्थत्वमस्ति, व्यधिकरणत्वात् पूर्वेण न प्राप्तिः ॥ पुत्रेण सह इति वाक्ये सुब्लुकि 'सह पुत्र' इति स्थिते—

८४९ । वोपसर्जनस्य ॥ ६।३।८२ ॥

दी—। बहुव्रीह्यवयवस्य सहस्य सः स्याद्वा । पुत्रेण सह सपुत्रः सहपुत्रो वा आगतः । तुल्ययोगवचनं प्रायिकम्—सकर्मकः, सलोमकः ।

सह optionally becomes स when it is a constituent of a बहुव्रीहि। Thus सपुत्रः or सहपुत्रः, the equal participation being in आगमनक्रिया। Equal participation is common in such cases, but not universal. Witness सकर्मकः, सलोमकः &c. compounded without equal participation.

मित—। "सहस्य सः संज्ञायाम्—" (१००९—६।३।७८) इत्यतः 'सहस्य सः' इत्यनुवर्तते। उपसर्जनस्य सहस्य सः वा इत्यन्वयः। उपसर्जन इह अवयवी, सह इत्यवयवः। अवयवावयविभावसम्बन्धे षष्ठी। उपसर्जनस्य अवयवो यः सहशब्दः तस्य सो वा। किमिदमुपसर्जनस्येति? उपसर्जनमस्यास्तीति उपसर्जनः समास इत्यर्थः। अर्श-आद्यच्। तस्य। समासस्य अवयवो यः सहशब्दः तस्य सो वा॥ ननु 'उत्तरपदे' इत्यधिकृतमस्ति तेनैव विज्ञायते समासावयवः सहशब्द इति। तदर्थं पुनः 'उपसर्जनस्य' इत्युक्त्वा कष्टा व्युत्पत्तिर्नैव कर्तव्या भवति। नैवम्। उपसर्जन इह न समासमात्रम् किन्तु सर्वोपसर्जनो बहुव्रीहिर्विज्ञायते। तदाह 'बहुव्रीह्यवयवस्य' इति॥ कर्मणा सह लोम्ना सह, इति समासे स्वार्थे कः न समासान्तः कप्। कप् तु इह नास्ति। नागेशस्तु सहशब्द इह विद्यमानवचनः, सह कर्म अस्य इति विग्रहः, पूर्वेणैव समासः नानेन सूत्रेण इत्याह॥

८५०। प्रकृत्याशिषि॥ ६।३।८३॥

दी—। सहशब्दः प्रकृत्या स्यादाशिषि। स्वस्ति राज्ञे सहपुत्राय सहामात्याय।

सह stands unchanged when expressing a hope, benediction etc. Thus सहपुत्राय &c. instead of सपुत्राय etc. the sense being—may good come unto the king etc. which expresses a hope.

मित—। 'प्रकृत्या स्यात्' स्वरूपेण तिष्ठेत्। स-भावो न स्यादित्यर्थः। 'आशिषि' इति आशीर्लिङ् प्रयोज्यः, स्वस्ति भूयादिति। तत्त्वबोधिन्यां तु स-भावविकल्पः—स्वस्ति भवते सहपुत्राय सपुत्राय वा॥

दी—। "अगोवत्सहलेष्विति वाच्यम्" ( वार्त्तिक )। सगवे। सवत्साय। सहलाय।

We should add 'except when गो, वत्स or हल follows in the उत्तरपद'। Thus सगवे etc. also सहगवे etc. because the exception restores the option.

मित—। इह 'अगोवत्स—' इति पर्युदासः। गोवत्सहलवर्जितेषु प्रकृत्या इत्यर्थः। तेन गोवत्सहलेषु यथा प्राप्तो विकल्पः। सगवे—सहगवे इत्यादि॥

८५१। बहुव्रीहौ संख्येये डजबहुगणात्॥ ५।४।७३॥

दी—। संख्येये यो बहुव्रीहिस्तस्मात् डच् स्यात्। उपदशाः। 'अबहुगणात्' किम्? उपबहवः। उपगणाः—अत्र स्वरे विशेषः।

A बहुव्रीहि of a numeral that indicates the number of things counted, takes डच् as a समासान्त, but not if बहु or गण is final. Thus उपदशाः (843). Why exclude बहु and गण? Witness उपबहवः and उपगणाः without डच्। The last, उपगणाः, has no डच्, because if it had, the pitch would have been different owing to डच् having dropped च।

मित—। 'बहुव्रीहौ' इति पञ्चम्यर्थे सप्तमी। बहुव्रीहेरित्यर्थः। 'संख्येये' इति विषयसप्तमी। 'संख्येये बहुव्रीहौ' संख्येये यो बहुव्रीहिस्तस्मादित्यर्थः। कथं यादृशो बहुव्रीहिः? यस्मिन् संख्याशब्दः संख्येये वर्त्तमानः, "संख्ययाव्ययासन्न—" (८४३—२।२।२५) इत्यनेन विहितो यो बहुव्रीहिः स इत्यर्थः॥ उपदशाः प्राग्व्याख्याताः (८४३)॥ "बहुगणवतु—" (२५८—१।१।२३) इत्यनेन बहुगणयोः संख्यात्वम्। उपबहवः इत्यत्र डचि तु उपबहाः इति स्यात्। उपगणाः इति तु डचि कृते अकृते वा एकमेव रूपम्, तत् किमस्य निषेधफलमित्यत आह 'स्वरे विशेष' इति। डच्चित्त्वात् अन्तोदात्तः स्यात्, इह तु पूर्वपदप्रकृतिस्वरः॥

दी—। "संख्यायास्तत्पुरुषस्य वाच्यः" (वार्त्तिक)। निर्गतानि

त्रिंशतो निस्त्रिंशानि वर्षाणि चैत्रस्य। निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्गः।

A तत्पुरुष, ending in a numeral that indicates the number of what is counted and beginning with an अव्यय, will take डच् as a समासान्त। Thus the age of Chaitra is निस्त्रंश means it is past thirty; and a sabre is निस्त्रिंश means it measures more than thirty finger-breadths.

मित—। संख्यान्तस्य तत्पुरुषस्यापि एष डज्विधिरस्ति। स च अव्ययादेरेव इति भाष्यम्॥ निस्त्रिंशानि वर्षाणि त्रिंशतोऽधिकानि। एकत्रिंशे वर्षे वर्त्तमानस्यैव इत्यर्थः। एवं निस्त्रिंशः खड्गः त्रिंशदङ्गुलिभ्योऽधिकप्रमाण इत्यर्थः। उभयत्र डचि त्रिंशतष्टिलोपः॥

८५२। बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्॥ ५।४।११३॥

दी—। व्यत्ययेन षष्ठी। स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात्। दीर्घे सक्थिनी यस्य स दीर्घसक्थः। जलजाक्षी। 'स्वाङ्गात्' किम्? दीर्घसक्थि शकटम्। स्थूलाक्षा वेणुयष्टिः। "अक्ष्णोऽदर्शनात्" (९४४—५।४।७६) इत्यच्।

The षष्ठी in सक्थ्यक्ष्णोः is a violation of the usual पञ्चमी। The sense is—षच् is added as a समासान्त after सक्थि and अक्षि that are स्वाङ्ग in the technical sense and are final in a बहुव्रीहि। Thus दीर्घसक्थ with षच् the sense being 'having long thighs'; in the feminine जलजाक्षी with ङीष् because of षच्, the sense being 'a woman with lotus-like eyes'. Why say स्वाङ्गात्? Witness दीर्घसक्थि without षच् applied to a cart, सक्थि meaning the two central beams; also स्थूलाक्षा applied to a bamboo-stick, अक्षि meaning the joints. We do not get स्थूलाक्षी because the affix is अच् by the rule "अक्ष्णः—" (944) and not षच् as in जलजाक्षी।

मित—। 'बहुव्रीहौ' इति पञ्चम्यर्थे सप्तमी। तदाह 'बहुव्रीहेः षच्' इति ॥ 'सक्थ्यक्ष्णोः' इति पञ्चम्यर्थे षष्ठी। तदन्तविधिः। तदाह 'सक्थ्यक्ष्यन्तात्' इति ॥ स्वाङ्गमिति "अद्रवं मूर्तिमत्—" इत्यादि प्रागुक्तम् ( ८४१—६।२।४० )। सक्थ्यक्षि-विशेषणमेतत्। तदाह 'स्वाङ्गवाचिसक्थ्यक्षि—' इति ॥ 'व्यत्ययेन' इत्यत्र विधेर-न्यथाभावो व्यत्ययः। स च "व्यत्ययो बहुलम्" (३४२३—३।१।८५) इति छन्दोविषयः। आर्षेषु क्वचित् छन्दोवत् कार्यं भवति। तदाह 'व्यत्ययेन षष्ठी' इति ॥ दीर्घसक्थः इत्यत्र दीर्घसक्थि षच् इति स्थिते भसंज्ञायां "यस्येति च" ( ३११—६।४।१४८ ) इति इकारलोपे रूपम् ॥ षचः षित्करणफलं "षिद्गौरादिभ्यश्च" ( ४९८—४।१।४१ ) इति स्त्रियां ङीष्। तदाह जलजाक्षीति। "यस्येति च" इति षचि इकारलोपः ङीषि अकारलोपश्च ॥ स्थूलाक्षा इत्यत्र स्थूलाक्षि षच् टाप् इति स्थिते "यस्येति च" इतीकारलोपः। सवर्णदीर्घः। 'षचि' पर्यवसन्धिः। षचि तु स्थूलाक्षी इति स्यात् ॥

८५३। अङ्गुलेर्दारुणि ॥ ५।४।११४ ॥

दी—। अङ्गुल्यन्ताद्बहुव्रीहेः षच् स्याद्दार्वर्थे। पञ्च अङ्गुलयो यस्य तत् पञ्चाङ्गुलं दारु—अङ्गुलिसदृशावयवं धान्यादिविक्षेपणकाष्ठमुच्यते। 'बहुव्रीहेः' किम्? द्वे अङ्गुली प्रमाणमस्या द्व्यङ्गुला यष्टिः। तद्धितार्थे तत्पुरुषे "तत्पुरुषस्याङ्गुलेः—" (७८६—५।४।८६) इत्यच्। 'दारुणि' किम्? पञ्चाङ्गुलिर्हस्तः।

A बहुव्रीहि ending in अङ्गुलि and referring to a piece of wood will have षच् added to it as a समासान्त। Thus पञ्चाङ्गुल, having five pieces like five fingers, as applied to a piece of wood used for exposing paddy to the sun. Why say बहुव्रीहेः? Witness द्व्यङ्गुला with अच् by "तत्पुरुषस्य—" (786) in the sense 'measuring two fingers'; the तत्पुरुष arising in connection with the तद्धित affix मात्रच् or द्वयसच् which has disappeared. Why say दारुणि? Witness पञ्चाङ्गुलि, having five fingers, applied to a hand.

मित—। 'अङ्गुलेः' इति पञ्चमी अङ्गुल्यन्तादित्यर्थः। 'बहुव्रीहौ' इत्यनुवर्तते। तस्य च इह बहुव्रीहेः इत्यर्थः। तदाह 'अङ्गुल्यन्ताद्बहुव्रीहेः' इति॥ 'दारुणि' इति समासार्थो लक्ष्यते॥ पञ्चाङ्गुलमित्यत्र पञ्चाङ्गुलि षच् इति स्थिते "यस्येति च" (३११—६।४।४८) इति इकारलोपः। अङ्गुल्य इव अङ्गुलिकल्पा अवयवाः। अनेन दारुणा धान्यादयः शोषणार्थमातपे विक्षिप्यन्ते आतपात्यये च पुनः संक्षिप्यन्ते॥ द्वे अङ्गुली प्रमाणमस्य इत्यर्थे मात्रचि द्वयसचि वा कर्तव्ये 'द्वि अङ्गुली' इत्येतयोः "तद्धितार्थ—" (७२८—२।१।५१) इति तत्पुरुषः। "तत्पुरुषस्याङ्गुलेः—" (७८६) इत्यच् समासान्तः। इकारलोपः। "द्विगोर्नित्यम्" (१८३८, वा) इति तद्धितलुक्। ततष्टाप्—द्व्यङ्गुला। षचि तु द्व्यङ्गुलीति स्यात्॥

८५४। द्वित्रिभ्यां ष मूर्ध्नः॥ ५।४।११५॥

टी—। आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ। द्विमूर्धः। त्रिमूर्धः।

The समासान्त affix ष is attached when मूर्धन् follows द्वि or त्रि in a बहुव्रीहि। Thus द्विमूर्धः etc.

मित—। 'बहुव्रीहौ' इत्यस्ति। पञ्चम्यर्थे सप्तमी। 'द्वित्रिभ्याम्' इति गम्यमानपरशब्दयोगे पञ्चमी। 'मूर्ध्नः' इत्यस्य विशेषणमेतत्। द्वित्रिभ्यां परो यो मूर्धन्-शब्दः इत्यन्वयः। 'मूर्ध्नः' इति पञ्चमी। तदन्तविधिः। द्वित्रिभ्यां परो यो मूर्धन्-शब्दः तदन्ताद्बहुव्रीहेः षः स्यात् इत्यर्थः। यद्वा—द्वित्रिभ्यां परो यो मूर्धन्शब्दः तस्मात् षः स्यात् समासान्तो बहुव्रीहौ समासे इत्यर्थः॥ द्विमूर्धन् ष इति स्थिते "नस्तद्धिते" (६७९—६।४।१४४) इति टिलोपः॥ षचि प्रकृते ष-विधानं षचो पूर्वपदप्रकृतिस्वरार्थम् इति नागेशः॥ 'ष' इति लुप्ता प्रथमा॥

टी—। "नेतुर्नक्षत्रे अब्वक्तव्यः" (वार्तिक)। मृगो नेता यासां ता मृगनेत्रा रात्रयः। पुष्यनेत्राः।

अप् is the समासान्त when नेतृ, final in a बहुव्रीहि, refers to some star. Thus मृगनेत्रा meaning a night in which the star मृगशिरस् is the leader, i. e., which commences with the rise of मृगशिरस्। Similarly पुष्यनेत्रा।

मित— । 'नेतुः' इति पञ्चमी । 'नक्षत्रे' इति नेतुरित्यस्य विशेषणम् । नक्षत्रे प्रयुक्तो यो नेतृशब्दः तस्मात् इत्यर्थः, तदन्ताद्बहुव्रीहेरिति शेषः ॥ मृगः मृगशिरो नक्षत्रं नेता आसां रात्रीणां ताः, यासु नक्षत्रेषु मृगशिरोनक्षत्रमुदेति ताः रात्रयः इत्यर्थः । इहमृगनेत्र अप् टाप् मृगनेत्राः ॥

८५५ । अन्तर्बहिर्भ्यां च लोम्नः ॥ ५।४।११७ ॥

दी— । आभ्यां लोम्नः अप् स्याद्बहुव्रीहौ । अन्तर्लोमः । बहिर्लोमः ।

अप् is attached to a बहुव्रीहि in which लोमन् is final and after अन्तर् or बहिस् । Thus अन्तर्लोमः the hair on which is on the inside, i. e., not sticking out ; बहिर्लोमः having the hair on the out-side.

मित— । अन्तर्बहिर्भ्यां परो यो लोमन्शब्दः तस्मादप् स्यात् समासान्तः बहुव्रीहौ । यद्वा—तदन्ताद्बहुव्रीहेरप् स्यात् समासान्तः । अन्तर्गतानि लोमानि यस्य इति अन्तर्लोमन् अप् । टिलोपः ॥ एवं बहिर्लोमः ॥

८५६ । अञ् नासिकायाः संज्ञायां नसं चास्थूलात् ॥ ५।४।११८ ॥

दी— । नासिकान्ताद्बहुव्रीहेरच् स्यात् नासिकाशब्दश्च नसं प्राप्नोति, न तु स्थूलपूर्वात् ।

A बहुव्रीहि with नासिका final, takes अच् as समासान्त and नासिका changes into नस but not if स्थूल precedes it. For examples we look forward—

मित— । 'अच् नासिका' इति स्थिते "यरोऽनुनासिके—" ( ११६—८।४।४५ ) इत्यनुनासिकविकल्पे अच्नासिका अज्नासिका वा । 'संज्ञायां' विषये 'अस्थूलात्' परायाः 'नासिकायाः' ( पञ्चमी ) अच् स्यात् तस्या एव 'नासिकायाः' ( षष्ठी ) नसं नसादेशः स्यात् । यद्वा—सा नासिका 'नसं' नसादेशं लभते । इत्यन्वयः ॥ अच् सन्निधाने एव नसं प्राप्नोति । प्रथममजुत्पद्यते ततो नसादेश इत्यर्थः ॥

८५७। पूर्वपदात् संज्ञायामगः ॥ ८।१३ ॥

टी—। पूर्वपदस्थात् निमित्तात् परस्य नस्य णः स्यात् संज्ञायां न तु गकारव्यवधाने। द्रुरिव नासिकास्य द्रुणसः। खरणसः। 'अगः' किम्? ऋचामयनम्। "अणृगयनादिभ्यः" (१४५२—४।३।७३) इति निपातनात् णत्वाभावमाश्रित्य 'अगः' इति प्रत्याख्यातं भाष्ये। 'अस्थूलात्' किम्? स्थूलनासिकः।

न becomes ण if the cause for the change is in a पूर्वपद which does not end in ग, and if, with the change, some proper name is understood. Thus द्रुणसः the proper name of a demon having a nose like a branch of a tree; खरणसः also a Rakshasa having a nose like that of an ass. Why say अगः? Witness ऋगयनम् which is a proper name, but as the पूर्वपद, viz., ऋग् ends in a ग, the change does not take place. The भाष्य, however prefers to omit अगः from the rule and to defend ऋगयन by निपातन in the rule "अणृगयनादिभ्यः—" (1452). Why say अस्थूलात्? Witness स्थूलनासिकः with नासिका unchanged.

मित—। यस्मिन् शब्दसमुदाये अवयवानां पूर्वोत्तरविभागोऽस्ति पूर्वस्य च पदसंज्ञा तत्रेदं प्रवर्त्तते॥ 'निमित्त' णत्वनिमित्तम्। तच्च रषऋकाराः। न चैते पूर्वपदं भवितुमर्हन्ति, तत् 'पूर्वपदात्' इत्यस्य पूर्वपदस्थादित्यर्थः॥ 'परस्य' इति व्यवधानेन अव्यवधानेन वा परस्य। व्यवधानञ्च "अट्कुप्वाङ्—" (१९७—८।४।२) इत्युक्तादिभिरेव॥ 'संज्ञायाम्' इति—कृते णत्वे संज्ञा चेत् स्यादित्यर्थः। रघुनाथ इत्यत्र कृते णत्वे रघुणाथ इति जाते संज्ञा न प्रतीयते अतो न णत्वम्। एवं वृषभानुः, हरिनन्दन इत्यादिष्वपि सति णत्वे संज्ञाया अप्रतीतेर्न णत्वम्॥ 'अगः' इति पञ्चमी पूर्वपदादित्यस्य विशेषणम्। अगकारान्तात् पूर्वपदादित्यर्थः, अगकारान्तं यत् पूर्वपदं तत्र स्थितात् निमित्तादिति यावत्। 'न तु

णकारव्यवधाने इत्यस्य पूर्वपदान्तस्थेन णकारेण व्यवधानमाश्रयः। "अणकारान्त-पूर्वपदादित्यर्थात्" इति नागेशः॥ इह पूर्वस्य पृथक्पदत्वात् समानपदत्वं नास्ति इत्यप्राप्तौ वचनम्॥ द्रुः द्रुचः। द्रु नासिका अच् इति स्थिते पूर्वस्य भसंज्ञा। नसादेशे द्रुनस अ इति जाते पररूपम्—द्रुनस। णत्वे द्रुणसः, राक्षसविशेषस्य संज्ञा। एवं खरणसः॥ ऋगयनमिति ऋच् शब्दे चकारस्य ककारः, तस्य च गकारः। ततः 'ऋग्' इति पूर्वपदान्ते गकारः, तेन णत्वं न॥

टी—। "खुरखराभ्यां वा नस्" (वार्त्तिक)। खुरणाः। खरणाः॥ पक्षे अजपीष्यते। खुरणसः। खरणसः।

In a संज्ञा, if नासिका comes after खुर or खर in a बहुव्रीहि, it is optionally replaced by नस् which itself is then treated as a समासान्त। Thus खुरणाः &c. without अच् and with नस् for नासिका। In the other alternative, अच् comes in and then नासिका is changed into नस्। Thus खुरणसः &c.

मित—। संज्ञायां विषये बहुव्रीहौ खुरखराभ्यामुत्तरस्य नासिकाशब्दस्य नसित्ययमादेशो वा भवति। यदा नस् तदा अच् प्रत्ययो न। सति तु अचि खुरणस इति प्राग्वदेव रूपं वार्त्तिकस्य व्यर्थं भवति॥ अजपि नसि खुरनासिका इति स्थिते सूत्रेणैव अच्, ततो 'नस' इत्यदन्त आदेशः॥ खुरणा इति असंबुद्धौ सौ रूपम्। "अत्वसन्तस्य—" (४३५—६।४।१४) इति उपधादीर्घः। राक्षसविशेषस्य संज्ञा॥ इह 'वा' इति वृत्तिभाष्ययोर्न दृश्यते। "पक्षे अच्" इति वृत्तिकारानुरोधात्। हरदत्तस्तु "केवलादेशवचनं प्रत्ययनिवृत्त्यर्थम्" इति वदन् अच् नास्ति इत्येवाह॥

८५८। उपसर्गाच्च॥ ५।४।११९॥

टी—। प्रादेर्यो नासिकाशब्दस्तदन्ताद् बहुव्रीहेरच् नासिकाया नसादेशश्च। असंज्ञार्थं वचनम्। उन्नता नासिका यस्य स उन्नसः॥ "उपसर्गादनोत्परः—" (८।४।२८) इति सूत्रम्। तत् भङ्क्त्वा भाष्यकार आह—

अच् is the समासान्त and नस is the substitute of नासिका when it comes after words of the प्रादि class in a बहुव्रीहि। This rule is for words that are not proper names. Thus उन्नसः having a high nose. Next comes the rule "उपसर्गात्—" which the Bhashyakara replaces with—

मित—। 'अच् नासिकायाः' इति 'नसम्' इति च इत्यनुवर्त्तते। "उपसर्गाः क्रियायोगे—" (२२—१।४।५९) इति क्रियायोगे एव प्रादीनामुपसर्गसंज्ञा। इह तु नासिकाशब्दे परे क्रियायोगाभावात् उपसर्गसंज्ञाया अप्रवृत्तेः 'उपसर्गात्' इति 'प्रादेः' इत्यर्थः॥ असंज्ञायामिति। संज्ञायां तु पूर्वेणैव प्राप्तः प्रत्यय आदेशश्च। अनेन असंज्ञायामपि प्रादेः परस्य विधीयते॥ "उपसर्गात्" इत्यस्य अयमर्थः। उपसर्गात् परो यो नस् तस्य णकारो भवति न तु ओकारात् परस्य, ओकारे वा परे। अनेन तु "प्रणो नय" इत्यत्र इष्टमपि णत्वं न प्राप्नोति। "प्रनः पूषा" इत्यत्र अनिष्टमपि प्राप्नोत्येव णत्वम्। तत् अत्र दोषमुद्भाव्य भाष्यकार आह—

८५८। उपसर्गाद्बहुलम्॥ ८।४।२८॥

दी—। उपसर्गस्थान्निमित्तात् परस्य नसो नस्य णः स्याद्बहुलम्। प्रणसः।

The न of नस् is irregularly changed into ण if the cause for the change is in an उपसर्ग preceding. Thus प्रणसः one who has lost his nose.

मित—। 'भङ्क्त्वा' इत्युक्तम्, इह तु भङ्गं सन्धानञ्च दर्शयति। "उपसर्गादनोत्परः" इत्यतः "अनोत्परः" इत्यपनीतम्। एष तावद्भङ्गः। "बहुलम्" इति योजितम्। इदञ्च सन्धानम्॥ प्रगता नासिका अस्य इति विग्रहे "उपसर्गाच्च" (८५८) इत्यच् नसश्चादेशः। प्रनासिका अच् इति स्थिते प्रनस अ इति, पररूपे प्रनस इति। अत्र अदन्ते नसादेशे अन्तर्भूतो 'नस्' इति। तस्मात्तेन णः—प्रणसः। पक्षे धातुजस्य लोपाभावे प्रगतनासिकः। असंज्ञात्वात् अविषयोऽयं पूर्वसूत्रस्य। अनेनापि प्रगतशब्दस्य प्रादित्वाभावात् न प्राप्तिः॥

टी—। "वेर्ग्रो वक्तव्यः" ( वार्त्तिक )। विगता नासिका अस्य विग्रः। "ख्यश्च" ( वार्त्तिक )। विख्यः। कथं तर्हि "विनसा हतबान्धवा" इति भट्टिः ? विगतया नासिकया उपलक्षिता इति व्याख्येयम्।

Among the प्रादि particles वि requires the substitute ग्र instead of नस। Thus विग्रः, one who has lost his nose. The substitute is in this case optionally ख्य also. Thus विख्यः। But then how does Bhatti write विनसा in विनसा हतबान्धवा ? This is not a बहुव्रीहि qualifying हतबान्धवा, but a प्रादितत्पुरुष in the तृतीया। Thus विगता नासिका विनासिका the nose cut off ; तया विनसा or optionally विनासिकया।

मित—। वेः परस्य नासिकाशब्दस्य 'ग्र' इत्यादेशो वक्तव्यः बहुव्रीहौ अचि। विनासिका अच् इति स्थिते विग्र अ, पररूपम्। ख्यश्च आदेशो वा। विख्यः॥ 'विनसा' इति तृतीयैकवचनम्। तथाहि विगता नासिका विनासिका, प्रादितत्पुरुषः। तया विनासिकया विनसा वा। "पद्दन्नोमास्—" ( २२८—६।१।६३ ) इति पाक्षिको नस् नासिकायाः। 'विनसा' छिन्नया नासिकया 'उपलक्षिता' अरिणा विप्रकृतेति कथिता 'हतबान्धवा' सा शूर्पणखा 'इति व्याख्येयम्'॥

८६०। सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ॥ ५।४।१२० ॥

टी—। एते बहुव्रीहयः अच्प्रत्ययान्ता निपात्यन्ते। शोभनं प्रातरस्य सुप्रातः। शोभनं श्वः अस्य सुश्वः। शोभनं दिवा अस्य सुदिवः। शारेरिव कुक्षिरस्य शारिकुक्षः। चतस्रः अश्रयः अस्य चतुरश्रः। एण्या इव पादावस्य एणीपदः। अजपदः। प्रोष्ठो गौः। तस्येव पादावस्य प्रोष्ठपदः।

The बहुव्रीहि compounds सुप्रात etc., are obtained with the समासान्त affix अच् attached by निपातन in this rule. Thus

सुप्रातः, one to whom the morning is auspicious ; सुश्वः, one to whom the next day is auspicious ; सुदिवः one to whom the day-time is auspicious ; शारिकुक्षः one with the abdomen like that of a starling ; चतुरश्रः one having four corners ; एणीपदः, one with feet like that of a doe ; अजपदः, one with feet like those of a goat ; प्रोष्ठपदः, one with feet like those of a cow.

मित—। सुप्रातर् अच् इति स्थिते "अव्ययानां भमात्रे टिलोपः" (१३२४, वा)। अर्भागलोपे सुप्रातः ॥ सुश्वस् अच् इत्यत्र अस्भागलोपे सुश्वः ॥ सुदिवा अच् इत्यत्र "यस्येति च—" (३११—६।४।१४८) इत्याकारलोपः टिलोपो वा ॥ शारिकुक्षि अच् इत्यत्र "यस्येति च—" इतिलोपः ॥ एवं चतुरश्रः। अश्रिः कोणः ॥ एणीपाद अच् इति पदादेशोऽपि इहैव निपातनात्। एणीपद अच् एणीपदः। एवमजपदप्रोष्ठपदौ। प्रशस्तौ ओष्ठौ अस्य प्रोष्ठः गौः ॥

## ८६१। नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ॥ ५।४।१२१ ॥

टी—। अच् स्यात्। अहलः—अहलिः। असक्थः—असक्थिः। एवं दुःसुभ्याम् ॥ 'शक्त्योः' इति पाठान्तरम्। अशक्तः—अशक्तिः।

हलि and सक्थि final in a बहुव्रीहि and coming after नञ्, दुर्, दुस् or सु require the समासान्त affix अच्। Thus अहलः etc. Similarly when after दुर्, दुस् and सु। Some read शक्त्योः in place of सक्थ्योः। The examples will be अशक्तः etc.

मित—। नञ्दुःसुभ्यो यो हलिशब्दः सक्थिशब्दश्च तदन्ताद्बहुव्रीहेरच् स्याद्वा इत्यर्थः। महत् हलं हलिरित्युच्यते इति हरदत्तः ॥ नन्विह अकृतेऽपि हलिग्रहणे हलशब्देन समासे अहलः, हलिशब्देन च अहलिः इति सिध्यति, प्रकरणवशाच्च महत्त्वमपि हलस्य गंस्यते एव, तत् किमर्थं हलिग्रहणं क्रियते ? उच्यते—अकृते हलिग्रहणे 'अहलः' इत्यत्र पूर्वपदप्रकृतिस्वरो भवति चित्स्वरस्तु न प्राप्नोति। किञ्च अहलकः अहलिकः इत्यपि वैकल्पिकेन कपा भवति। अहलिक इति मास्तु चित्स्वरयुक्तः अहल इति चास्तु इति कर्त्तव्यमेव हलिग्रहणम् ॥

८६२। नित्यमसिच् प्रजामेधयोः ॥ ५।४।१२२ ॥

दी—। 'नञ्दुःसुभ्यः' इत्येव। अप्रजाः। दुष्प्रजाः॥ सुप्रजाः। अमेधाः। दुर्मेधाः। सुमेधाः।

The समासान्त affix असिच् is attached to प्रजा and मेधा final in a बहुव्रीहि and coming after नञ्, दुर्, दुस् and सु। Thus अप्रजाः childless etc., अमेधाः witless etc.

मित—। 'नञ्दुःसुभ्यः' इत्यनुवर्तते। नञ्दुःसुभ्यः परौ यौ प्रजामेधाशब्दौ तदन्ताद्बहुव्रीहेर्नित्यमसिच् प्रत्ययो भवति समासान्तः इत्यर्थः॥ अन्यतरस्यामधिकारो नास्ति तदिह नित्यग्रहणं स्पष्टार्थमिति भाष्यम्। क्वचिदन्यस्मिन्नपि पूर्वपदे विधानार्थमिति वृत्तिः, तथाहि—"श्रोत्रियस्येव ते राजन्मन्दकस्याल्पमेधसः। अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी॥" इति॥ अविद्यमाना प्रजा अस्य इतिवाक्ये अप्रजा असिच् इति स्थिते अप्रजा अस् इति जाते अकारलोपे अप्रजस् इति प्रातिपदिकम्। सौ उपधादीर्घे अप्रजाः। इत्यादि॥

८६२। धर्मादनिच् केवलात् ॥ ५।४।१२४ ॥

दी—। केवलात् पूर्वपदात् परो (यो) धर्मशब्दस्तदन्ताद्बहुव्रीहेरनिच् स्यात्। कल्याणधर्मा। 'केवलात्' किम्? परमः स्वो धर्मो यस्येति त्रिपदे बहुव्रीहौ मा भूत्। स्वशब्दो हि इह न केवलं पूर्वपदं किन्तु मध्यमत्वादापेक्षिकम्॥"सन्दिग्धसाध्यधर्मा" इत्यादौ तु कर्मधारयपूर्वपदो बहुव्रीहिः। एवं तु 'परमस्वधर्मा' इत्यपि साध्वेव, 'निवृत्तिधर्मा' 'अनुच्छित्तिधर्मा' इत्यादिवत्॥ पूर्वपदं तु बहुव्रीहिणा आक्षिप्यते।

अनिच् is the समासान्त when धर्म is final in a बहुव्रीहि and comes after a पूर्वपद which is absolutely a पूर्वपद। Thus कल्याणधर्मा, one of good propensities. Why say केवलात्? Witness परमस्वधर्मः without अनिच् in a बहुव्रीहि of the three words परमः, स्वः, धर्मः। The reason is स्व here is not abso-

lutely a पूर्वपद, but only relatively because it is the middle. Compounds like सन्दिग्धसाध्यधर्मा should be defended by first compounding सन्दिग्धसाध्यः in a कर्मधारय and then making a बहुव्रीहि of सन्दिग्धसाध्यः and धर्मः। By this method of compounding परमस्वधर्मा is also correctly formed, just like निरुक्तिधर्मा अनुच्छित्तिधर्मा etc. That a पूर्वपद is contemplated is obvious from the fact that the section is on बहुव्रीहि।

मित—। 'बहुव्रीहौ' इत्यस्ति 'उत्तरपदे' इति च॥ 'धर्मात्' प्रत्यय उच्यते, स च प्रत्ययः समासान्तः। तेन धर्मशब्द उत्तरपदमिति गम्यते॥ उत्तरपदञ्च इह पारिभाषिकमेव, समासचरमावयवे यत् रूढं तदेव, अधिकृतम्। तेन उत्तरपदस्य एकत्वं नियतम्। एवं धर्मशब्दस्य उत्तरपदस्य केवलत्वे सिद्धे न हि 'केवलात्' इति धर्मात्' इत्यस्य विशेषणम्, किन्तु 'बहुव्रीहौ' इत्यनेन आक्षिप्तं यत् 'पूर्वपदम्' तस्यैव पञ्चम्यन्तस्य। तदाह 'केवलात् पूर्वपदात् परः' इत्यादि॥ इह 'परः' इत्यनन्तरं 'यः' इति बहुषु पुस्तकेषु न दृश्यते। लिपिकरप्रमादात् स्खलितं तत्॥ कल्याणो धर्मोऽस्य इति विग्रहे कल्याण धर्म अनिच् इति स्थिते अकारलोपः। कल्याणधर्मन् इति प्रातिपदिकम्। उपधादीर्घः॥ अन्यनिरपेक्षत्वं केवलत्वम्। यत् नियतमेव पूर्वपदं न कदापि किञ्चिदपेक्षया परपदं तदेवेह 'केवलं पूर्वपदम्'। नागेश आह—केवलत्वञ्च सजातीयान्याभावत्वमिति। परमः स्वो धर्मो यस्य इति वाक्ये स्वशब्दो न नियतं पूर्वपदं किन्तु परमशब्दापेक्षया परपदमपि। तदिह अनिच् न प्रवर्तते परमस्वधर्म इति च भवति॥ "सन्दिग्धसाध्यधर्मा" इति तु न त्रिपदबहुव्रीहिः किन्तु सन्दिग्धं च तत् साध्यञ्च सन्दिग्धसाध्यम्। सन्दिग्धसाध्यं धर्मो यस्य इति कर्मधारयपूर्वपदो बहुव्रीहिः। तेन केवले पूर्वपदे अनिच् लभ्यत एव, अनेन प्रकारेण तु "परमस्वधर्मा" इत्यपि भवति॥ ननु पूर्वपदशब्दः समासप्रथमावयवे रूढः तत् कथमस्य आपेक्षिकत्वं कल्प्यते? सत्यं रूढः, यौगिकोऽपि पुनः पूर्वं पदं पूर्वपदमिति सम्भवति। रूढत्वे तु 'केवलात्' इति विशेषणं व्यर्थं स्यात्। रूढ एवायं स्यात् यदि 'उत्तरपदे' इत्यनेन आक्षिप्येत, स हि स्वयं रूढः रूढमेव सजातीयमाक्षेप्स्यति। अयं तु 'बहुव्रीहौ' इत्यनेन विजातीयेन आक्षिप्यते।

आक्षेपप्रकारश्च यदि बहुव्रीहिः पूर्वोत्तरपदविभागोऽस्मिन्नस्ति इत्येवंविधः ॥ यद्वा एवं व्याख्यास्यते—बहुव्रीहौ केवलात् एकस्मादेव पदात् परो यो धर्मशब्दः इत्यादि। "निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः" इत्यमरः। अस्मिन् पक्षे द्विपदबहुव्रीहिरेव सूत्रस्य विषयो भवति ॥

८६४। जम्भा सुहरिततृणसोमेभ्यः ॥ ५।४।१२५ ॥

टी—। 'जम्भा' इति कृतसमासान्तं निपात्यते। जम्भो भक्ष्ये दन्ते च। शोभनो जम्भोऽस्य सुजम्भा। हरितजम्भा। तृणं भक्ष्यं यस्य, तृणमिव दन्ता यस्य इति वा, तृणजम्भा। सोमजम्भा। 'स्वादिभ्यः' किम्? पतितजम्भः।

जम्भ becomes जम्भा with अनिच् attached when after सु, हरित, तृण and सोम and final in a बहुव्रीहि। जम्भा is here inserted in the rule with the समासान्त attached. जम्भ means food, also tooth. The समासान्त is अनिच्। Thus सुजम्भा having fine teeth; हरितजम्भा having green teeth; तृणजम्भा grass-eater (vegetarian), or having teeth like grass; सोमजम्भा drinking Soma juice. Why say 'after सु etc.'? Witness पतितजम्भः, toothless, without अनिच्।

मित—। बहुव्रीहौ स्वादिभ्यः परं यो जम्भशब्दः तस्मात् अनिच् भवति समासान्तः जम्भा इति च तस्य रूपं भवति इत्यर्थः ॥ 'कृतसमासान्तम्' अनिच्-प्रत्ययान्तमित्यर्थः। सुजम्भ अनिच् इति स्थिते अकारलोपे सुजम्भन् प्रातिपदिकम्। 'सुजम्भन्', 'हरितजम्भन्', 'तृणजम्भन्', 'सोमजम्भन्', इति चत्वारः अनिच् प्रत्ययान्ता निपात्यन्ते इति फलितम् ॥

८६५। दक्षिणेर्मा लुब्धयोगे ॥ ५।४।१२६ ॥

टी—। दक्षिणे ईर्मं व्रणं यस्य दक्षिणेर्मा मृगः। व्याधेन कृतव्रण इत्यर्थः।

The बहुव्रीहि word दक्षिणेर्मा has अनिच् as समासान्त by निपातन in this rule if used in connection with a hunter. Thus a दक्षिणेर्मा stag means a stag wounded to the right by a hunter.

मित— । 'दक्षिणेर्मा' इत्यनिच्प्रत्ययान्तो निपात्यते बहुव्रीहौ 'लुब्धेन' व्याधेन 'योगे' सति, तदीर्मं व्याधेन कृतं चेत् इत्यर्थः । ईर्मं व्रणः ॥ दक्षिणे ईर्ममस्य इति व्यधिकरणपदो बहुव्रीहिः, "सप्तमी विशेषणे—" ( ८९८—२।२।३५ ) इति ज्ञापकात् । वृत्तिकारस्तु दक्षिणं दक्षिणाङ्गस्थम् ईर्ममस्य इति समानाधिकरण-मेवाह ॥ "बाणो हेमाब्जमाली गुणनिधिरिषुणा निर्मितो दक्षिणेर्मा" इत्यादि तु निरङ्कुशाः कवय इति ॥

८६६ । इच् कर्मव्यतिहारे ॥ ५।४।१२७ ॥

दो— । कर्मव्यतिहारे यो बहुव्रीहिस्तस्मात् इच् स्यात् समासान्तः । केशाकेशि । मुसलामुसलि ॥

इच् is the समासान्त in a बहुव्रीहि which refers to reciprocity of action. Thus केशाकेशि etc., explained before ( 846—2. 2. 27 ).

मित— । "तत्र तेनेदम्—" (८४६ ) इति विहित एव बहुव्रीहिरिह गृह्यते । तत एव विस्तरो ज्ञेयः । इच् तिष्ठद्गुप्रभृतिषु पठ्यते । तेन अव्ययीभाव—संज्ञायामव्ययत्वे केशाकेशि रणः इति सुब्लुक् ॥

८६७ । द्विदण्ड्यादिभ्यश्च ॥ ५।४।१२८ ॥

दो— । तादर्थ्ये चतुर्थ्येषा । एषां सिद्ध्यर्थमिच् प्रत्ययः स्यात् । द्वौ दण्डौ यस्मिन् प्रहरणे तद् द्विदण्डि प्रहरणम् । द्विमुसलि । उभाहस्ति—उभयाहस्ति ।

इच् is to be added as a समासान्त to derive words like द्विदण्डि । The भ्यस् here is चतुर्थी in the sense तादर्थ्य । Thus an assault is द्विदण्डि meaning that two sticks were used in the

course of it. Similarly द्विमुसलि। In उभयाहस्ति there is दीर्घ by the rule "अन्येषामपि दृश्यते—" (३५३९—६।३।१३७)। In उभाहस्ति there is no अयच् owing to निपातन in the very list of द्विदण्ड्यादि words.

मित—। 'इच्' अनुवर्तते। 'द्विदण्ड्यादिभ्यः' इति चतुर्थी तादर्थ्ये। 'इच्' कार्य्यः 'समासान्तः द्विदण्ड्यादिभ्यः' द्विदण्ड्यादिशब्दसिद्धये इत्यर्थः॥ नैषा पञ्चमी। तेषां तु द्विदण्ड्यादिभ्यः शब्देभ्यः इच् स्यात् इत्यर्थो भवति। परम् इजन्ता एव द्विदण्डि प्रभृतयो निपात्यन्ते, तेभ्यः पुनरिच् असङ्गतः, तदाह 'तादर्थ्ये चतुर्थी एषा' इति॥ द्विदण्डि प्रहरणमिति प्रहरणक्रियाया विशेषणं द्विदण्डि। एवं द्विमुसलि इत्यादयः॥ "उभादुदात्तो नित्यम्—" (१८४५—५।२।४४) इति उभशब्दस्य अवयवे नित्यमयट् विहितः, इह तु निपातनादेव विकल्पः। "अन्येषामपि—" (३५३९) इति दीर्घः। इह गणे निपातितानां क्रिया-विशेषणत्वे एव साधुता, नान्यथा। तत् द्वौ दण्डौ अस्यां शालायामिति द्विदण्डा शाला न पुनर्द्विदण्डि शाला। वृत्तिकार आह "समुदायनिपातनाच्च अर्थविशेषे अव-रुध्यन्ते" इति। अर्थविशेषः क्रियाविशेषणरूपः॥

## ८६८। प्रसंभ्यां जानुनोर्ज्ञुः॥ ५।४।१२९॥

दी—। आभ्यां परयोर्जानुशब्दयोर्ज्ञुरादेशः स्याद्बहुव्रीहौ। प्रगते जानुनी यस्य प्रज्ञुः। संज्ञुः।

The word जानु coming after प्र or सम् and final in बहुव्रीहि is altered into ज्ञु। Thus प्रज्ञुः (not प्रजानुः) meaning one who has lost his knees. Similarly संज्ञुः (not सञ्जानुः) having well-formed knees.

मित—। जानुनोः इति षष्ठीद्विवचने रूपम् आदेशार्थम्। प्रशब्दात् परो यो जानुशब्दः संशब्दाच्च यो जानुशब्दः बहुव्रीहौ उत्तरपदं तयोर्जानुशब्दयोर्ज्ञुः इत्यादेशः स्यात्, स च समासान्तः इत्यर्थः॥ प्रगते प्रकृष्टे वा सङ्गते संश्लिष्टे वा जानुनी यस्य इति विग्रहः। धातुजस्य अलोपे तु प्रगतजानुः, संश्लिष्टजानुः॥ 'जानुनो ज्ञुः' इत्येकवचनेन निर्देशे सन्देहः स्यात्—पञ्चम्या ज्ञु-प्रत्ययस्य प्रकृतिर्वा निर्दिष्टा, षष्ठ्या वा ज्ञ्वादेशस्य

स्थानी—इति। सन्देहो मा भूत् षष्ठी विज्ञायतामादेशस्य स्थानी, इति पूर्वपदस्य द्वित्वभाग्विव द्विवचनेन निर्देशः कृतः। अनेकालत्वात् सर्वादेशः॥

८६९। ऊर्ध्वाद्विभाषा॥ ५।४।१३०॥

दी—। ऊर्ध्वज्ञुः। ऊर्ध्वजानुः।

Coming after ऊर्ध्व and final in a बहुव्रीहि, जानु is optionally changed into ज्ञु। Thus ऊर्ध्वज्ञुः etc. with knees drawn up.

मित—। ऊर्ध्वशब्दात् परस्य जानुशब्दस्य बहुव्रीहेरन्तावयवस्य ज्ञु रित्ययमादेशो वा स्यात् स च समासान्तः।

८७०। धनुषश्च॥ ५।४।१३२॥

दी—। धनुरन्तस्य बहुव्रीहेः अनङादेशः स्यात्। शार्ङ्गधन्वा।

अनङ् is the substitute of the final letter of a बहुव्रीहि ending in धनुष्। Thus शार्ङ्गधन्वा where शार्ङ्गधनुस् takes the substitute अनङ् and becomes शार्ङ्गधनु अन्=शार्ङ्गधन्वन् ( प्रातिपदिक )।

मित—। "प्रसंभ्यां—" (८६८) इत्यत आदेशप्रकरणम्। 'धनुषः' इति षष्ठी। धनुरन्तस्य बहुव्रीहेरित्यर्थः। ङित्वस्य फलान्तराभावात् 'अनङ्' इत्यस्य ङित्करणं "ङिच्च—" (४२—१।१।५३) इत्यन्त्यस्य अल आदेशप्रतिपत्त्यर्थम्। नकारे अकार उच्चारणार्थः। अन् इति शिष्यते स च समासान्तः॥ शार्ङ्गमहिषशृङ्गविकारः धनुरस्य इति शार्ङ्गधनुस् इति स्थिते, सकारस्य अन्—शार्ङ्गधन्वन् इति प्रातिपदिकम्। उपधादीर्घः॥

८७१। वा संज्ञायाम्॥ ५।४।१३३॥

दी—। शतधन्वा—शतधनुः।

The substitute अनङ् is optional if the बहुव्रीहि with धनुस् final is a proper name. Thus शतधन्वा or शतधनुः which is the name of a warrior king.

मित—। धनुरन्तस्य बहुव्रीहेरनङादेशो वा स्यात् संज्ञायां विषये स च समासान्तः। 'शतधन्वा' इति तु राजविशेषस्य नाम॥

८७२। जायाया निङ् ॥ ५।४।१३४ ॥

दी—। जायान्तस्य बहुव्रीहेर्निङादेशः स्यात्।

निङ् is the substitute of the final letter of a बहुव्रीहि ending in जाया।

मित—। प्रकरणवशात् ङित्त्वसामर्थ्याच्च आदेशो निङ्, स च समासान्तः। "ङिच्च" (४३—१।१।५३) इत्यन्त्यस्य वर्णस्य भवति। 'जायायाः' इति षष्ठी॥

८७३। लोपो व्योर्वलि॥ ६।१।६६ ॥

दी—। वकारयकारयोर्लोपः स्यात् वलि। पुंवद्भावः। युवतिर्जाया अस्य युवजानिः।

A consonant except य following, व and य are elided. Thus युवतिर्जाया अस्य gives युवति जाया; with पुंवद्भाव this becomes युवन् जाया; नलोप gives युवजाया; उपसर्जन ह्रस्व yields युवजाय। निङ् ( i. e., नि ) for the final अ gives युवजाय् नि; dropping the य्, finally युवजानिः।

मित—। 'वल्' इति यवर्जं व्यञ्जनमात्रम्॥ वश्च यश्च व्यौ। तयोः व्योः॥ 'वलि' यवर्जे व्यञ्जने परे 'व्योः' वकारयकारयोः 'लोपः' स्यात्॥ युवतिर्जाया इति स्थिते पुंवद्भावे युवजाया। उपसर्जनह्रस्वः अन्त्यस्य च निङ्—युवजाय्नि। यकारलोपे युवजानिः॥

८७४। गन्धस्येदुत् पूतिसुसुरभिभ्यः॥ ५।४।१३५ ॥

दी—। एभ्यो गन्धस्य इकारोऽन्तादेशः स्यात्। उद्गन्धिः। पूतिगन्धिः। सुगन्धिः। सुरभिगन्धिः।

गन्ध coming after उद्, पूति, सु, सुरभि and final in a बहुव्रीहि will have its last letter changed into इ। Thus उद्गन्धि &c.

मित—। 'गन्धस्य' इति बहुव्रीहेरुत्तरपदस्य गन्धस्य इत्यर्थः। 'इत्' इत्यादेशः समासान्तः। तकार इत्। 'इ' इत्यादेशस्वरूपम्। एकवर्णत्वात् न सर्वादेशः। समासान्ताधिकारात् नापि "आदेः परस्य—" (४४—१।१।५४) इति गकारस्य।

तत्र "अचोऽन्त्यस्य—" ( ४१—१।१।५२ ) इत्येव भवति ॥ उद्गतः गन्धः अस्य इति 'उद्गन्ध' इति स्थिते इकारादेशे उद्गन्धिः । एवं पूतिगन्धिप्रभृतयः ॥

दी—। "गन्धस्येत्वे तदेकान्तग्रहणम्" ( वार्त्तिक )। एकान्त एकदेश इव अविभागेन लक्ष्यमाण इत्यर्थः। सुगन्धि पुष्पं सलिलञ्च। सुगन्धिर्वायुः। नेह—शोभना गन्धा द्रव्याणि अस्य सुगन्ध आपणिकः।

The substitute of इ for the final of गन्ध takes place only when the odour is a part and parcel of the entire substance and not perceived as existing distinct from it. Thus flower or water or the breeze may be described as सुगन्धि, because the गन्ध and the flower &c. are not perceived or taken separately. But a dealer in scents is only सुगन्ध without इ added, because he and his scents are distinct having obviously separate existence.

मित—। 'गन्धस्य' गन्धशब्दस्य 'इत्वे' इकारविधौ 'तस्य' गन्धस्य 'एकान्तग्रहणम्' एकस्वरूपग्रहणं द्रव्यादविभक्तो गन्ध इत्यध्यवसानं कर्त्तव्यम्। यदा द्रव्येण सह अविभागेन लक्ष्यमाणो गन्धः तदैव इत्वमित्यर्थः। एष कैयटहरदत्तभट्टोजिज्ञानेन्द्रनागेशप्रभृतिवैयाकरणानाम् आशयः। भट्टिकारस्तु नैसर्गिकगन्धविवक्षायामेव इकारादेशमाह—[ गन्धवहः सुगन्धः इति ] एतच्च भाष्ये वृत्तौ च न दृश्यते। बहुभिरादृतत्वात् अवमूलोक्तपक्षोऽध्यायान्। अन्तशब्दः स्वरूपवचनः। इह 'इत्त्वे' इति द्वितकारकः पाठो दृश्यते। वृत्तिभाष्ययोस्तु एकतकारकः। आपणे नियुक्त आपणिको वणिक्। "तत्र नियुक्तः—" ( १६९०—४।४।६९ ) इति ठक्। गन्धा गन्धद्रव्याणि। तानि च वणिजा सह विभक्तान्येवोपलभ्यन्ते, तत् न इत—सुगन्ध आपणिकः ॥

८७५। अल्पाख्यायाम् ॥ ५।४।१३६ ॥

दी—। सूपस्य गन्धो लेशो यस्मिन् तत् सूपगन्धि भोजनम्। घृतगन्धि। "गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयो:" इति विश्वः।

गन्ध meaning अल्प takes the substitute इ when final in बहुव्रीहि। Thus सूपगन्धि means just a trace of soup. Similarly घृतगन्धि। The विश्व gives लेश as a synonym of गन्ध, thence अल्पाख्या is 'declaration of paucity.'

मित—। 'अल्पम्' अल्पत्वम्। तस्य 'आख्या' कथनम् तस्याम् 'अल्पाख्यायां' दुर्लभत्वद्योतने यो गन्धशब्दो बहुव्रीहेरुत्तरपदं तस्य इकारोऽन्तादेशः स्यात् स च समासान्तः। वृत्तिकारस्तु 'आख्या' अभिधानमित्याह। 'अल्पाख्यायाम्' अल्पार्थे वर्तमानो यो गन्धशब्दः इत्यादर्थः॥ सूपस्य गन्धः लेशः अल्पता अस्मिन् सूपगन्धि इति व्यधिकरणबहुव्रीहिरित्यन्यः। वृत्तिकारस्य तु गन्धः अल्पः सूपः अस्मिन् सूपगन्धि इति विशेषणस्य गन्धशब्दस्य परनिपातो अस्मादेव वचनबलाद्भवति॥

८७६। उपमानाच्च॥ ५।४।१३७॥

टी—। पद्मस्येव गन्धोऽस्य पद्मगन्धिः।

इत् is also the substitute when गन्ध, coming after a standard of comparison, is final in a बहुव्रीहि। Thus पद्मगन्धिः smelling like lotus.

मित—। 'गन्धस्य' इत्यस्ति। उपमानात् परो यो गन्धशब्दो बहुव्रीहेरन्त्यावयवस्तस्य इकारादेशः स्यात्, स च समासान्तः इत्यर्थः॥ अथ कस्य उपमानात्? सान्निध्यात् 'गन्धस्य'॥ 'पद्मस्य' इत्यतः परं 'गन्धः' इत्युदाहृतम्। पद्मस्य गन्ध इव गन्धोऽस्य इत्यर्थः॥ इह पद्मस्य गन्धः पद्मगन्धः। तस्य च लक्षणया 'पद्मगन्धसदृशः' इत्यर्थः'। 'पद्मगन्धः गन्धः अस्य' इति विग्रहे गन्धस्य उपमानं गन्ध एव। परं गन्ध इह आधेयः पद्मम् आधारः। आधेयगतायाः उपमानताया आधारे समारोपात् पद्ममुपमानं भवति। ततश्च "सप्तम्युपमान—" (वा, २।२।२४) इत्युत्तरपदलोपेऽपि समासान्ते इकारे रूपं पद्मगन्धिः इति॥ ननु "सप्तम्युपमान—' इति वार्त्तिकं कौमुद्यामपठितम्। तेन अयुक्तमिदम् इह यन्त्र्व्याख्या। यत्र पठितं तत्रापि सूत्रकारस्य सूत्रं वार्त्तिके प्रतिष्ठितमित्यसमञ्जसमेव व्याख्यानमेतद्भवति।

तदयमस्तु व्याख्या—पद्ममिति लक्षणया पद्मगन्धसदृशे वर्त्तते। पद्मं पद्मो वा गन्धः अस्य पद्मगन्धिः इति ॥

८७७। पादस्य लोपोऽहस्त्यादिभ्यः ॥ ५।४।१३८ ॥

दी—। हस्त्यादिवर्जितादुपमानात् परस्य पादशब्दस्य लोपः स्यात् बहुव्रीहौ। स्थानिद्वारेणायं समासान्तः। व्याघ्रस्येव पादावस्य व्याघ्रपात्। 'अहस्त्यादिभ्यः' किम्? हस्तिपादः। कुसूलपादः।

लोप is the substitute of the final letter of पाद when it is after some standard of comparison except हस्तिन् etc., and is the उत्तरपद in a बहुव्रीहि। This लोप is a समासान्त because it is in place of what is lost in the compound. Thus व्याघ्रपात् having feet like those of a tiger. Why say अहस्त्यादिभ्यः? Witness हस्तिपादः without लोप the sense being having feet like those of an elepeant. Similarly कुसूल etc. with feet resembling stands of granaries (?)

मित—। 'उपमान' इत्यनुवर्त्तते। उपमेयस्य सान्निध्यात् पाद एव ॥ प्रकरणादेव समासान्तसंज्ञासिद्धिः तेन अन्त्यस्य अकारस्य 'लोप' अदर्शनम् आदेशो भवति ॥ ननु संज्ञया व्यक्तिर्निर्दिश्यते। अभावात्मकमदर्शनमिति का नाम व्यक्तिः? कथं वा तस्य निर्णयः? उत्तरमाह 'स्थानिद्वारेण समासान्तः' इति। इह स्थानी अकारो विद्यत एव। तस्य स्थाने यो लोपः सोऽपि तेनैव निर्णेतुं शक्यः, तन्नास्ति संज्ञाया अप्रसिद्धिः॥ व्याघ्रस्येव इत्यादिकं व्याख्यानमात्रं न विग्रहः। व्याघ्रपादौ पादौ अस्य इति तु वाक्यम्। परन्तु अयुक्तमेतदिति पूर्वसूत्रे प्रपञ्चितम्। पक्षान्तरे तु व्याघ्र इति व्याघ्रपादतुल्ये लक्षणा। ततो व्याघ्रौ पादावस्य इति विग्रहः॥ कुसूलमिति धान्यसंग्रहपात्रम् ॥

८७८। कुम्भपदीषु च ॥ ५।४।१३९ ॥

दी—। कुम्भपद्यादिषु पादस्य लोपो ङीप च निपात्यते

स्त्रियाम्। "पादः पत्" (४१४—६।४।१३०) कुम्भपदी। 'स्त्रियाम्' किम्? कुम्भपादः।

In the matter of the list of words headed by कुम्भपदी the elision of the final of पाद and the ङीप् in the feminine have to be enjoined. Thus कुम्भपदी, having feet like two water-pitchers. Here we start with कुम्भपाद+ङीप् in the feminine; by लोप we get कुम्भपाद्+ङीप्; by "पादः पत्" we have कुम्भपद्+ङीप्=कुम्भपदी। Why say स्त्रियाम्? Witness कुम्भपादः in the masculine without लोप।

मित—। 'कुम्भपदीषु' इति बहुवचनमसङ्गतं, नहि सन्ति बहवः कुम्भपदीशब्दाः। तदिह बहुवचनेन गणो लक्ष्यते। कुम्भपदीप्रभृतयो ये शब्दा गणे पठ्यन्ते तेषु इत्यर्थः। तदाह 'कुम्भपद्यादिषु' इति॥ 'पादस्य लोपः' इति वर्तते॥ गणे च कृतसमासान्ताः सिद्धाः शब्दाः पठ्यन्ते, ततः येन रूपेण तेषां पाठस्तेनैव रूपेण साधवस्ते नान्यथा। दृश्यते च तेषु स्त्रीत्वं ङीप् च। ततः स्त्रियामेव तेषां साधुता, स्त्रियामपि ङीपि एव। तदाह 'ङीप् च निपात्यते स्त्रियाम्' इति॥ कुम्भाविव पादावस्या इति विग्रहे कुम्भपाद ङीप् इति स्थिते अनेन लोपे कुम्भपाद् ई इति जाते भसंज्ञा। ततः "पादः पत्" (४१४) इति पाद्भागस्य पद्—कुम्भपदी। 'पत्' इति तु दान्तस्य रूपम् न तान्तस्य। तान्ते हि भत्वात् कुम्भपती इति स्यात्॥ ङीपि एव निपातनम् अतः "पादोऽन्यतरस्याम्—" (४५७—४।१।८) इति पक्षे कुम्भपात् इति न भवति॥ स्त्रियामेव निपातनं तेन पुंसि लोपो न—कुम्भपादः॥

८७९। संख्यासुपूर्वस्य॥ ५।४।१४०॥

टी—। पादस्य लोपः स्यात् समासान्तो बहुव्रीहौ। द्विपात्। सुपात्।

पाद after a numeral or the word सु, will elide its final if it is the उत्तरपद in a बहुव्रीहि। Thus द्विपात् etc.

मित—। लोप इत्यसि। समासान्तता च प्रकरणाल्लभ्यते॥ द्वौ पादावस्य इत्यादि विग्रहः॥

८८० । वयसि दन्तस्य दतृ ॥ ५।४।१४१ ॥

दो—। संख्यासुपूर्वस्य दन्तस्य 'दतृ' इत्यादेशः स्याद्वयसि। द्विदन्। चतुर्दन्। षट् दन्ता अस्य षोडन्। सुदन्—सुदती। 'वयसि' किम्? द्विदन्तः करी। सुदन्तो नटः।

दन्त, final in a बहुव्रीहि and preceded by a numeral or the word सु, will be replaced by दतृ as a समासान्त if the compound implies a certain age. Thus द्विदन्, an infant with only two teeth cut; चतुर्दन्, a child with only four teeth cut. Why say वयसि? Witness द्विदन्तः etc., a tusker has two tusks only; सुदन्तः etc., the actor has a fine set of false teeth.

मित—। 'संख्यासुपूर्वस्य' इत्यस्ति, 'बहुव्रीहौ' इति च॥ 'वयसि' गम्यमाने इति शेषः॥ 'दतृ' इत्यादेशः समासान्तः। ऋकार इत् 'दत्' शिष्यते। "अनेकाल्शित्—" (४५—१।१।५५) इति सर्वादेशः॥ द्वौ दन्तौ अस्य इति विग्रहे द्विदन्त इति स्थिते दत्रादेशे द्विदत् इति प्रातिपदिकम्। ऋकारेत्त्वादिदम् 'उगित्'। सौ "उगिदचाम्—" (२६१—७।१।७०) इति नुमि द्विदन्त् स् इति स्थिते "हल्ङ्याब्भ्यो—" (२५२—६।१।६८) इति सुलोपः। ततः द्विदन्त् इत्यस्य पदत्वे 'संयोगान्तस्य लोपः—" (५४—८।२।२३) इति द्विदन्। द्वावेव जातौ दन्तौ न बहवः इति वयोविशेषप्रतीतिः, शैशवमिति शेषः॥ एवं चतुर्दन् षोडन्नित्यादि। षोडन्नित्यत्र "षष उत्वम्—" (८११, वा—) इति षोभावो डभावश्च॥ सुदन्निति च शोभना दन्ताः समग्रा जाता अस्य इति वयोविशेषप्रतीतिर्यौवनमिति। दतृ इति ऋकारेत्फलं दर्शयति सुदती इति स्त्रियाम् "उगितश्च" (४४५—४।१।६) इति ङीप्॥ द्विदन्तः करी इत्यत्र वयो न गम्यते। एवं सुदन्तो नट इत्यत्रापि। अतो न दत्रादेशः॥

८८१ । स्त्रियां संज्ञायाम् ॥ ५।४।१४३ ॥

दी—। दन्तस्य 'दतृ' स्यात् समासान्तो बहुव्रीहौ। अयोदती। फालदती। 'संज्ञायां' किम्? समदन्ती।

दतृ is the substitute of दन्त final in a बहुव्रीहि if the compound refers to a female and is a संज्ञा। Thus अयोदती which literally means having teeth like iron, but is used as a proper name. Similarly फालदती which too is a proper name, though meaning having teeth like a plough-share. Why say संज्ञायाम्? Witness समदन्ती which is not a proper name but means 'having evenly set teeth' as its derivation implies, and therefore does not change दन्त into दत्।

मित—। 'दन्तस्य दतृ' इत्यस्ति। 'स्त्रियाम्' अभिधेयायां 'संज्ञायां' विषये न क्वचित्। 'समासान्तः'—आदेश एव इह समासान्तः॥ अय इव दन्ता अस्या इति विग्रहे अयोदन्त इत्यस्य दतादेशे अयोदत् ङीप् इति जाते अयोदती। एवं फालदती। नैतावता गम्यते अयोघना अस्या दन्ताः फालायताः फालतीक्ष्णा वा। संज्ञाशब्दाविती न हि नियतमेव योगार्थं गमयतः॥ समा दन्ता अस्या इति विग्रहे "नासिकोदर—" (५११—४।१।५५) इति वैकल्पिके ङीपि समदन्ती। पक्षे समदन्ता॥

८८२। विभाषा श्यावारोकाभ्याम्॥ ५।४।१४४॥

दी—। दन्तस्य 'दतृ' स्याद्बहुव्रीहौ। श्यावदन्—श्यावदन्तः। अरोकदन्—अरोकदन्तः।

दतृ is optionally the substitute of दन्त final in a बहुव्रीहि and coming after श्याव or अरोक। Thus श्याव etc., having grey teeth; अरोक etc., having lustreless teeth.

मित—। 'दन्तस्य दतृ' इत्यनुवर्तते॥ श्यावः कपिशः॥ अरोकः निष्प्रभः। इत्येवम्। ततो नञ्समासः। एताभ्यां दन्तस्य दतृ वा स्याद्बहुव्रीहौ, स च समासान्त इत्यर्थः॥

८८३। अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च॥ ५।४।१४५॥

दो—। एभ्यो दन्तस्य 'दतृ' वा। कुड्मलाग्रदन्— कुड्मलाग्रदन्तः।

दन्त, coming after the words शुद्ध, शुभ्र, वृष, वराह and compounds having अग्र final in them, optionally changes into दतृ if it is an उत्तरपद in a बहुव्रीहि। Thus कुड्मलाग्र etc. having teeth like flower-buds. Similarly शुद्ध etc. having clean teeth ; शुभ्र etc. having white teeth ; वृष etc., having teeth like those of a bull ; वराह etc., having teeth like those of a boar.

मित—। 'दन्तस्य दतृ' इत्यस्ति। 'विभाषा' इत्यनुवर्त्तते ॥ अन्तशब्दः अग्र-शब्देन सम्बध्यते। अग्रः अग्रशब्दः अन्तः अवसानं यस्य स अग्रान्तः, अग्रशब्दः अन्ते यस्य इति वा। अग्रान्तप्रभृतिभ्यः परस्य दन्तशब्दस्य दत्रादेशो वा स्यात् समासान्तो बहुव्रीहौ इत्यर्थः ॥ कुड्मलानामग्राणीव दन्ता यस्य इत्यादि विग्रहः ॥

८८४। ककुदस्यावस्थायां लोपः ॥ ५।४।१४६ ॥

दो—। अजातककुत्। पूर्णककुत्।

ककुद drops its final in a बहुव्रीहि to imply 'stage of life'. Thus अजात etc. with the hump not showing yet, which implies that the calf is still very young ; also पूर्ण etc. with a fully developed hump, which indicates prime of youth. This elision of the final ( लोप ) is regarded as a समासान्त।

मित—। 'ककुद' इयाङ्:। 'अवस्था' वयो वा शरीरपरिणामो वा ॥ ककुद-शब्दान्तस्य बहुव्रीहेर्लोपो भवति समासान्तः अवस्थायां गम्यमानायामित्यर्थः ॥ अजातं ककुदमस्य अजातककुत् वत्सः। एवं पूर्णककुत् दम्यः ॥

८८५। त्रिककुत् पर्वते ॥ ५।४।१४७ ॥

दो—। त्रीणि ककुदान्यस्य त्रिककुत्। संज्ञैषा पर्वत-विशेषस्य। त्रिककुदोऽन्यः।

The बहुव्रीहि compound त्रिककुत् with लोप as समासान्त is allowed

if it is applied to a mountain. The literal meaning is 'having three peaks shaped like three humps'; but it is the proper name of a certain mountain. Any other mountain even if it has such peaks, is त्रिककुद without लोप ।

मित— । ककुदाकारं पर्वतस्य शृङ्गं ककुदमित्युच्यते इति इत्तिकारः ॥'त्रिककुत्' इति बहुव्रीहौ ककुदशब्दस्य लोपः समासान्तो निपात्यते पर्वते संज्ञिनि अभिधेये ॥

८८६ । उद्विभ्यां काकुदस्य ॥ ५।४।१४८ ॥

दो— । लोपः स्यात् । उत्काकुत् । विकाकुत् । काकुदं तालु ।

काकुद coming after उद् or वि and final in a बहुव्रीहि takes लोप as समासान्त । Thus उत् etc., with the palate raised ( swollen ? ) वि etc., with the palate gone ( perforated by disease ? ). काकुद is palate. According to some उत्काकुत् is a letter pronounced off the upper part of the palate and विकाकुत् is one that does not require the palate at all to pronounce it.

मित— । "लोपः" इत्यनुवर्त्तते । उद्विभ्यां परस्य काकुदशब्दस्य लोपः स्यात् समासान्तो बहुव्रीहौ ॥ उद्गतं काकुदमस्य अस्मिन् वा उत्काकुत् । विगतं काकुदमस्य अस्मिन् वा विकाकुत् । काकुर्जिह्वा । सा अस्मिन्नुद्यते इति काकुदं तालु इति भाष्यम् ॥

८८७ । पूर्णाद्विभाषा ॥ ५।४।१४९ ॥

दो— । पूर्णकाकुत्—पूर्णकाकुदः ।

काकुद coming after पूर्ण and final in a बहुव्रीहि optionally takes लोप as समासान्तः । Thus पूर्ण etc., having a fully developed palate (?).

मित— ।—'लोपः' इत्यस्ति । 'काकुदस्य' इत्यनुवर्त्तते । पूर्णशब्दात् परस्य काकुदशब्दस्य लोपः स्यात् समासान्तो बहुव्रीहौ इत्यर्थः ॥

८८८ । सुहृद्दुर्हृदौ मित्रामित्रयोः ॥ ५।४।१५० ॥

दी—। सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते। सुहृन्मित्रम्। दुर्हृदमित्रः। अन्यत्र—सुहृदयः, दुर्हृदयः।

हृदय coming after सु and दुर् and final in a बहुव्रीहि is altered into हृद् the compound meaning a friend and a foe respectively. Thus सुहृत् a friend, दुर्हृत् a foe, without reference to the derivative meaning, viz. having a good or a bad heart. If however the reference is really to the goodness or badness of the heart and not ro friendship or enmity, the substitution is not available and the correct forms are सुहृदय and दुर्हृदय। Hence सुहृत् is a friend even though he has a bad heart ; and, notwithstanding his possession of a good heart, दुर्हृत् is an enemy.

मित—। सुहृद् दुर्हृदौ निपात्येते बहुव्रीहौ यथासंख्यं मित्रामित्रयोरर्थयोः॥ निपातनादेव हृदयस्य हृद्भावः अर्थविशेषे च वृत्तिः। तदाह सुहृन्मित्रमित्यादि। सुहृदिति निरूढं शोभनं हृदयमस्य इति विग्रहार्थस्तत्र नाद्रियते। एवं दुष्टं हृदयमस्य इति विग्रहार्थनिरपेक्षयैव दुर्हृदमित्रे रूढम्। अथ मित्रं, हृदयस्य दुष्टत्वेऽपि स सुहृत्, अमित्रश्चेत् शोभनत्वेऽपि हृदयस्य दुर्हृदेव सः॥ 'अन्यत्र' मित्रताया अमित्रताया वा अविवक्षा चेत् इत्यर्थः। तदा हृदादेशो न भवति। सुहृदय इति शोभनत्वं दुर्हृदय इति दुष्टत्वं हृदयस्याह॥ इह 'अमित्रम्' इति वृत्तौ पाठः। "तस्य मित्राण्यमित्रास्ते" इति "स्यातामभित्रौ मित्रे च" इति तु पुंसि प्रयोगो दृश्यते। तथा च लिङ्गानुशासनम् "धामामित्रच्छात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि"। हरदत्तस्तु अमधातोः इत्रच्प्रत्ययं कृत्वा पुंसि 'अमित्र'—शब्दं साधयति'।

८८८। उरःप्रभृतिभ्यः कप्॥ ५।४।१५१॥

दी—। व्यूढोरस्कः। प्रियसर्पिष्कः। इह 'पुमान्' 'अनड्वान्' 'पयः' 'नौः' 'लक्ष्मीः' इत्येकवचनान्तानि पठ्यन्ते। द्विवचनबहुवचनान्तेभ्यस्तु "शेषाद्विभाषा" (८८९) इति विकल्पेन कप्। द्विपुमान्—द्विपुंस्कः।

Words listed with उरस् leading, when final in a बहुव्रीहि, take कप् as समासान्त। Thus व्यूढ etc., having a broad chest ; प्रिय etc.

fond of *Ghi*. This list reads पुमान्, अनड्वान्, पयः, नौः, लक्ष्मीः in the singular. Hence when these are in the dual or plural. कप् is optional by "शेषाद्—" (891). Thus द्वि etc., having two servants.

मित—। उरः प्रभृत्यन्ताद्बहुव्रीहेः कप् प्रत्ययो भवति समासान्तः॥ व्यूढं विशालम्। व्यूढोरस् कप् इति स्थिते रुत्वे विसर्जनीये च व्यूढोरः क इति। "सोऽपदादौ—" (१५३—८।३।३८) इति सकारादेशे व्यूढोरस्कः॥ प्रियं सर्पिस् क इत्यत्र प्रियसर्पिः क इति जाते "इणः षः—" (१५३—८।३।३९) इति विसर्जनीयस्य षः॥ प्रातिपदिकानामेव गणे पाठो युक्तः। इह तु केचित् एकवचनान्ताः पठ्यन्ते। साभिप्रायं किल तत्। तदाह 'द्विवचनबहुवचन—' इत्यादि॥ द्वौ पुमांसौ अस्य इति विग्रहे द्विपुमस् इत्यतः कपि संयोगान्तलोपरुत्वसत्वादिकं भाषितपुंस्कवत् (८९१)॥

दी—। "अर्थान्नञः" (गणसूत्र)। अनर्थकम्। 'नञः' किम्? अपार्थम्—अपार्थकम्।

अर्थ preceded by नञ् and final in a बहुव्रीहि is of the उरःप्रभृति class and takes कप्। Thus अनर्थकम् useless. Why say नञः? Witness अपगतः अर्थः अस्मात्, without नञ्, yielding अपार्थ and अपार्थक by "शेषाद्विभाषा" (८९१)।

मित—। नञः परो यः अर्थशब्दस्तदन्ताद्बहुव्रीहेः कप् समासान्तः। अविद्यमानः अर्थः अस्य अनर्थकः अनुत्तरपदे तु "शेषाद्विभाषा" इत्येव, अविद्यमानर्थः—अविद्यमानार्थकः। एवम् अपगतः अर्थः अस्मात्, अपार्थः—अपार्थकः॥

८९०। इनः स्त्रियाम्॥ ५।४।१५२॥

दी—। बहुदण्डिका नगरी।

A बहुव्रीहि compound ending in इन् takes कप् if in the feminine. Thus बहु etc., a town with many mendicants in it.

मित—। इनन्ताद्बहुव्रीहेः कप् भवति समासान्तः स्त्रियां विषये॥ उदाहरणे दण्डः एषामस्तीति दण्डिनः इति इनन्तः। बहवो दण्डिनः अस्याम् इति बहुदण्डिन् कप् टाप् इति स्थिते कपि पदत्वे नलोपः। बहुदण्डिका॥

दी—। "अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति" (परिभाषा)। बहुवाग्मिका। 'स्त्रियाम्' किम्? बहुदण्डी—बहुदण्डिको ग्रामः

What is enjoined of अन्, इन्, अस् or मन् has to be understood as of अन्नन्त, इन्नन्त, असन्त or मन्नन्त words no matter whether अन्, इन्, अस् or मन् be meaningless or not. Here the इन् is अर्थवान् when coming from इनि, but it is अनर्थक if a part of ग्मिनि। The rule however applies equally whether the बहुव्रीहि ends with the former or the latter. Thus बहवो वाग्मिनः अस्याम् gives बहुवाग्मिका। Why say स्त्रियाम्? Witness बहुदण्डी without कप् and बहुदण्डिकः with कप when applied to ग्राम which is masculine.

मित—। ननु बहवो वाग्मिनः अस्यामिति विग्रहे अनेन सूत्रेण बहुवाग्मिका इति कप् दुर्लभः। "अर्थवद्ग्रहणे नानर्थकस्य" इति परिभाषाया इह सूत्रे इनिप्रत्ययस्य एव 'इन्' ग्रहीष्यते। स एव अर्थवान् यतोऽसौ मत्वर्थे विहितः। यस्तु 'इन्' ग्मिनिप्रत्यये दृश्यते, अनर्थकः स यतो ग्मिन्नेव मत्वर्थः न तु तदन्त्य इन्नित्यपि। उच्यते—परिभाषा एषा "अनिन्—" इत्यनेन नियम्यते। अन्, इन्, अस्, मन् इति चत्वारः अर्थवन्तोऽपि अनर्थका अपि तदन्तविधिं प्रयोजयन्ति। तेन ग्मिनिप्रत्ययान्तादपि अनेन सूत्रेण कप् भविष्यति॥ वाग्मीति मतभेदादिकगकारको द्विगकारकश्चेत्यन्यत्र व्याख्यास्यामः॥

८८१। शेषाद्विभाषा॥ ५।४।१५४॥

दी—। अनुक्तसमासान्तात् शेषाधिकारस्थाद्बहुव्रीहेः कप् वा स्यात्। महायशस्कः—महायशाः। 'अनुक्त' इत्यादि किम्? व्याघ्रपात्। सुगन्धिः। प्रियपथः। 'शेषाधिकारस्थात्' किम्? उपबहवः। उत्तरपूर्वा। सपुत्रः। तन्त्रादिना 'शेष' शब्दः अर्थद्वयपरः।

A बहुव्रीहि coming under the jurisdiction of "शेषो बहुव्रीहिः" (829—2.2. 23), and for which no समासान्त is announced, option-

ally takes कप् as a समासान्त। Thus महा &c. Why say 'अनुक्त' &c. Witness व्याघ्रपात् &c, to which लोप etc, have been attached and therefore कप् does not come in. Why say 'शेषाधिकारस्थात्' ? Witness उपबहव: etc., which are outside the range of "शेषो—" (829) and do not take कप्। शेष is here understood simultaneously in two different senses, this is because of a peculiar way of pronouncing ( तन्त्र ) the word शेष here.

मित—। उक्तादन्य: 'शेष:'। तदाह 'अनुक्तसमासान्तात्' ॥ प्रथमान्तपदानामन्यपदार्थे समासोऽपि शेष इत्युक्तं प्राक्। सोऽपीहार्थ:। तदाह 'शेषाधिकार—" इति ॥ 'व्याघ्रपात्' इति प्रथमान्तयो: समास: तदयं शेषाधिकारस्थ:' समासान्तस्तु विहित एवास्मात् 'लोप:' इति। तन्नेह कप् ॥ सुगन्धि:' इति च शेषाधिकारस्थम् विहितत्वाआदित् समासान्त:, अत: कबभाव: ॥ एवं प्रियपथ इति च ॥ 'उपबहव:' इति न कश्चित् समासान्तो विहित:। न पुनरयं शेषाधिकारस्थ: अतो न कप्। एवम् उत्तरपूर्वा, सपुत्र: ॥ नन्विह एकैव आवृत्तिः शेषशब्दस्य द्वौ चार्थौ युगपदागतौ इति कोहशमेतत् ? आह च—'तन्त्रादिना' इति । तन्त्र' कारणविशेष: येन एकेनैव प्रयासेन उभयप्रयोजनं सिध्यति। तथाच मेदिनी "तन्त्र' कुटुम्बकृत्ये स्यात्" इति प्रक्रम्य "ईशावुभयार्थप्रयोजके—" इति ॥ अथवा एकशेष: क्रियताम्। 'शेष:' उक्तादन्य:। 'शेष:' शेषाधिकारस्थ:। शेषश्च शेषश्च शेष:। एकवचनं सौत्रम्। तस्मात् 'शेषात्' इति ॥

८८२। आपोऽन्यतरस्याम् ॥ ७।४।१५ ॥

दी—। कपि आबन्तस्य ह्रस्वो वा स्यात्। बहुमालाक:—बहुमालक:। कबभावे बहुमाल:।

When कप् follows, the preceding feminine word in आप् is optionally shortened. Thus बहु etc., having several strings of garland. Without कप् the form is बहुमाल: with उपसर्जनह्रस्व।

मित—। 'आप्' इति स्त्रियां विहितष्टाप्। 'कपि' इति पूर्वसूत्रादनुवर्त्तते। 'ह्रस्व' इति चानुवृत्तम्। "शेषाद्विभाषा" (८८१) इति वैकल्पिक: कप्। कबभावे उपसर्जनह्रस्व:—बहुमाल: ॥

८८३ । न संज्ञायाम् ॥ ५।४।१५५ ॥

दी—। "शेषात्—" (७८१) इति प्राप्तः कप् न स्यात् संज्ञायाम्। विश्वे देवा अस्य विश्वदेवः।

The कप् enjoined by "शेषात्—" will not come in if the compound is intended as a संज्ञा। Thus विश्वदेवः, the name of some one who adores the gods known as विश्व।

मित—। संज्ञा भवतु कस्यचित् इति यो बहुव्रीहिः क्रियते ततः "शेषात्—" इति वैकल्पिकः कप् न स्यात्। सिद्धा संज्ञा नास्य सूत्रस्य विषयः। सिद्धस्य संज्ञाशब्दस्य नित्या एकरूपता द्वैरूप्यं न सम्भवति ॥ 'विश्वे' इति जसि रूपम्। विश्वाख्यदेवगणविशेष इत्यर्थः ॥ विश्वदेवः इत्यपि क्वचित् पाठो दृश्यते। तत्र तु "विश्वदेव इत्यपपाठः" इति नागेशः ॥

८८४ । ईयसश्च ॥ ५।४।१५६ ॥

दी—। ईयसन्तोत्तरपदान्न कप्। बहवः श्रेयांसः अस्य बहुश्रेयान्।

कप् is not attached if the उत्तरपद in a बहुव्रीहि ends in ईयस। Thus बहु etc., having blessings in many ways.

मित—। 'ईयस्' इति आतिशायनिक ईयसुन् प्रत्ययः। तस्मात्। तदन्तविधिः। 'बहुव्रीहौ' इत्यस्ति। 'बहुव्रीहौ' समासे 'ईयसुन् प्रत्ययान्तात्' उत्तरपदात् समासान्तः कप् न भवति इत्यर्थः ॥ बहुश्रेयान् इति "शेषाद्विभाषा" (८८१) इत्यस्य प्रतिषेधः ॥ ननु "न संज्ञेयसोः" इत्येव किं नोक्तम्, किमर्थम् "ईयसश्च—" इति पृथक् सूत्रयित्वा गौरवं कृतम्? उच्यते—एकयोगे इहापि "शेषाद्विभाषा" इत्यस्यैव निषेधः प्राप्नोति। इष्यते च ईयसुनि सर्वस्यापि कपो निषेधः। अतः पृथग्योगः। तेन स्त्रीलिङ्गे श्रेयसीशब्दे उत्तरपदे "नद्यृतश्च—" (८८२—५।४।१५३) इति नित्योऽपि कप् न भवति—बहुश्रेयसी ॥

दी—। "गोस्त्रियोः—" (६५६—१।२।४८) इति ह्रस्वत्वे प्राप्ते "ईयसो बहुव्रीहेर्न" इति वाच्यम् (वार्त्तिक)। बह्व्यः श्रेयस्यः अस्य बहुश्रेयसी। 'बहुव्रीहेः' किम्? अतिश्रेयसिः।

What is ordained of ईयस in the masculine is available for ईयस् in the feminine also. Hence बह्व्यः श्रेयस्यः अस्य will have no कप्, and the form is expected to be बहुश्रेयसी; but then by the rule "गोस्त्रियोः—" the ई of श्रेयसी has to be shortened. This however, is prevented by the Varttika "ईयसो—" which means—the affix ईयस् in the feminine, if final in a बहुव्रीहि, will not be shortened by "गोस्त्रियोः—" । Hence finally बहुश्रेयसी in the masculine. This is a बहुव्रीहि only; thus अतिश्रेयसिः—past blessings—in a तत्पुरुष has the ई shortened.

मित—। "नद्यृतश्च—" ( ८३३—५।४।१५३ ) इत्यस्य प्रतिषेधं दर्शयति । श्रेयान् इत्यस्य स्त्रियां श्रेयसी तदन्तादित्यर्थः ॥ सूत्रे ईयसित्यनेन ईयसन्तस्य ग्रहणम् । ईयसन्तञ्च प्रातिपदिकम् । प्रातिपदिकग्रहणे च लिङ्गविशिष्टस्यापि ग्रहणम् । तेन श्रेयसीशब्दस्याप्ययं कबभावः । बह्व्यः श्रेयस्यः अस्य इति बहुव्रीहौ बहुश्रेयसी इति स्थिते "गोस्त्रियोः—" इत्युपसर्जनह्रस्वः प्राप्तः । स इह प्रतिषिध्यते "ईयसो—" इति । बहुव्रीहावेव, तत्पुरुषे तु अतिक्रान्तः श्रेयसीम् अतिश्रेयसिः इति ह्रस्व एव ॥

८८५। वन्दिते भ्रातुः ॥ ५।४।१५७ ॥

दी—। पूजिते अर्थे यो भ्रातृशब्दः तदन्तात् न कप् स्यात् । प्रशस्तो भ्राता यस्य स प्रशस्तभ्राता—सुभ्राता । "न पूजनात्" (८५४—५।४।६९) इति निषेधस्तु "बहुव्रीहौ सक्थ्यक्ष्णोः—" (८५२—५।४।११३) इत्यतः प्रागेव इति वक्ष्यते । 'वन्दिते' किम् ? मूर्खभ्रातृकः ।

The word भ्रातृ, when referring to one that is esteemed, will not take कप् if final in a बहुव्रीहि । Thus प्रशस्त &c., and सु &c., meaning one with an esteemed brother. It must not be said that सुभ्राता is no example of this rule, the समासान्त after it being barred already by "न पूजनात्" (954) ; for, the prohibition "न पूजनात्" applies up to the rule "बहुव्रीहौ सक्थ्यक्ष्णोः—" as will be

explained later, and कप् comes long after. Why say वन्दिते ? Witness मूर्खं etc., where मूर्खं does not imply estimation, and we have कप् by "नद्यृतश्च" (836—5. 4. 153).

मित—। वदिधातुरभिवादने स्तुतौ च वर्त्तते। उभयत्र पूजास्ति, तत् 'वन्दितः' पूजितः। भ्रातुरिति पञ्चमी। 'वन्दिते' पूजिते भ्रातरि वर्त्तमानो यो 'भ्रातृ' शब्दस्तदन्तात् बहुव्रीहेर्न कप्। 'पूजिते अर्थे' इत्यत्र 'अर्थः' इति भ्रातृशब्दस्य अर्थः। स च भ्राता एव। तत्र 'पूजिते भ्रातरि वर्त्तमानो यो भ्रातृशब्दः, इति फलितम् ॥ प्रशस्तभ्राता—सुभ्राता इत्यत्र "नद्यृतश्च—" (८३३—५।४।१५३) इति प्रतिषिध्यते ॥ 'सुभ्राता' इत्यत्र तु 'न पूजनात्—' (६५४) इति न प्रवर्त्तते। "बहुव्रीहौ—" (८५२) इत्यत आरभ्य परवर्त्तिनः समासान्तास्तस्य न विषयः। अतोऽनेन कप्-निवार्य्यते ॥ मूर्खो नैव हि पूजितः तेन मूर्खभ्रातृकः कथेव ॥

## ८८६। नाडीतन्त्र्योः स्वाङ्गे ॥ ५।४।१५८ ॥

दी—। स्वाङ्गे यौ नाडीतन्त्रीशब्दौ तदन्तात् कप् न स्यात्। बहुनाडिः कायः। बहुतन्त्रीर्ग्रीवा। बहुतन्त्रीर्धमनी। स्त्रीप्रत्ययान्तत्वाभावात् ह्रस्वो न। 'स्वाङ्गे' किम्? बहुनाडीकः स्तम्भः। बहुतन्त्रीका वीणा।

When नाडी and तन्त्री are what is technically known as स्वाङ्ग, a बहुव्रीहि ending in them will not take कप्। Thus बहुनाडि etc. a body has several arteries in it. बहुतन्त्रीः etc., the neck has several tendons in it; बहुतन्त्रीः etc., an artery has several guts in it. The final ई is not shortened in the last two because it is not a feminine affix. Why say स्वाङ्गे? witness बहुनाडीकः etc., a post with several guy-ropes; बहुतन्त्रीका etc., a many-stringed lyre.

मित—। स्वाङ्गमिति "अद्रवं मूर्त्तिमत्—" इति पारिभाषिकं गृह्यते (८४२) ॥ बहुनाडिः इत्युपसर्जनस्य ॥ तन्त्रीशब्दस्तु "अवितृस्तृतन्त्रिभ्य ईः—" (उ० ३।१५८) इत्यौणादिके ई-प्रत्यये स्त्रियां सिद्धः न तु स्त्रीप्रत्ययान्तः, ततस्तु ह्रस्वो न, नापि ततः

सुश्रीव:—बहुलग्रीवोर्मा ॥ . समासस्य अन्यतरस्याम उपचारात् तमीति कथ्यते । साङ्कला-भावात् कप् । "न कपि" ( ८२५—७।४।१४ ) इति ह्रस्वनिषेध: ॥

८८७ । निष्प्रवाणिश्च ॥ ५।४।१६० ॥

दो— । कबभावोऽत्र निपात्यते ॥ प्रपूर्वाद्वयतेर्ल्युट् । प्रवाणी तन्तुवायशलाका ॥ निर्गता प्रवाणी अस्य निष्प्रवाणि: पट: । समाप्तवान: नव इत्यर्थ: ।

The word निष्प्रवाणि is derived as a बहुव्रीहि by निपातन here with out कप्। The affix is ल्युट् after वेञ् with प्र preceding. प्रवाणी is the weaver's needle. A cloth is निष्प्रवाणि when the needle is taken out of it, i.e. when the weaving is just finished—a new cloth.

मित— । प्रोयते अनया इति प्रवाणी । करणे ल्युट् । टित्वात् ङीप् । भागीरथस्तु प्रोयते अस्यामित्यधिकरणे ल्युटमाह । "अत्यच:—" ( २८३५—५।४।१५२ ) इति णत्वम् ॥ समाप्ते वाने पठात् प्रवाणी निष्काश्यते तदा निष्प्रवाणि: पट: । "नद्युतश्च" ( ८३३—५।४।१५३ ) इति प्राप्तस्य कप: प्रतिषेध: । उपसर्जनह्रस्व: ॥

८८८ । सप्तमीविशेषणे बहुव्रीहौ ॥ २।२।३५ ॥

दो— । सप्तम्यन्तं विशेषणञ्च बहुव्रीहौ पूर्वं प्रयोज्यम् । कण्ठेकाल: । अतएव ज्ञापकात् व्यधिकरणपदो बहुव्रीहि: । चित्रगु: ।

A सप्तम्यन्त word as well as a विशेषण leads in a बहुव्रीहि compound. Thus कण्ठेकाल:, one with a black spot on the neck, has सप्तमी leading. This is a बहुव्रीहि of non-collocative words ; this very rule implies its validity. Similarly चित्रगु, one having a brindled cow, has चित्र, the विशेषण, leading in the compound.

मित— । "अनेकम्—" (८३०—२।२।२४ ) इति बहुव्रीहिघटकानां सर्वेषामेव उपसर्जनत्वे पूर्वनिपातस्य अनियम: प्राप्त: । तदनेन नियम: क्रियते सप्तम्यन्तं विशेषणञ्च प्राक् प्रयुज्यते इति ॥ विशेषणं प्राक् इति सामर्थ्यात् विशेष्यं परमित्यायाति, पूर्वपदं परपदस्य विशेषणमिति च ॥ सप्तमीमुदाहरति कण्ठे काल: अस्य कण्ठेकाल: । "अमूर्धमस्तकात्—" ( ८६०—६।३।१२ ) इति सप्तम्या अलुक् । तन्मिह

कण्ठस्य य आधारो न हि स कालस्यापि। तत् समानाधिकरणत्वाभावात् समासे एव न भवति कुतः पुनः पूर्वनिपातनियमः ? उच्यते—'अतएव' सूत्रात् 'ज्ञाप्यते' अर्थे 'व्यधिकरणत्वेऽपि' सप्तम्याः समासः। अन्यथा कथमयं सप्तम्याः पूर्वनिपातं शास्ति ? ननु इष्यते चेत् सप्तम्याः समासः "विशेषणं बहुव्रीहौ" इत्येव स सिध्यति किं पुनः सप्तमीति पृथग्ग्रहणेन ? न सिध्यति। समानाधिकरणानां बहुव्रीहिरित्यध्यसि। तत् यदेव समानाधिकरणतया विशेषणं तस्यैव भविष्यति। कण्ठे कालः, हस्ते कालः इत्यादिषु कण्ठे हस्ते इत्यादयः एकस्य कालं कालान्तरात् भेदयन्ति। एवं भेदकत्वात् कण्ठे, हस्ते इत्यादयो विशेषणानि सत्यम्, परं व्यधिकरणतया, न समानाधिकरणतया। तत् "विशेषणम्—" इत्येतावता इह सप्तम्यादीनां ग्रहणं न भवति समासश्च न सिध्यति। "सप्तमी—" इति पृथगुक्तेः व्यधिकरणानां मध्ये सप्तम्याः समासः सिध्यति नान्येषां द्वितीयादीनाम् ॥ विशेषणमाह—चित्रा गौर्यस्य इति विग्रहे चित्रशब्दो विशेषणं तस्य च पूर्वनिपाते चित्रगुः ॥

दी—। "सर्वनामसंख्ययोरुपसंख्यानम्" (वार्त्तिक)। सर्वश्वेतः। द्विशुक्लः॥ मिथोऽनयोः समासे संख्या पूर्वम्, शब्दपरविप्रतिषेधात्। द्व्यन्यः।

The lead of pronouns and numerals in a बहुव्रीहि has to be noted. Thus सर्व etc., one having all white, द्वि etc., one having two only white. The Varttika prevails over the rule and श्वेत and शुक्ल, though विशेषण, does not lead. When सर्वनाम and संख्या are compounded together, संख्या leads because संख्या is pronounced later in the Varttika. Thus द्व्यन्यः, one who has made two mistakes.

मित—। बहुव्रीहौ पूर्वनिपातप्रसङ्गे सर्वनामसंख्ययोरुपसंख्यानं कर्त्तव्यम्। सर्वनाम पूर्वं पतति संख्या च इत्यर्थः॥ सर्वः श्वेतः अस्य, द्वौ शुक्लौ अस्य इति विग्रहः। तत्र श्वेतशुक्लयोर्विशेषणत्वेऽपि वार्त्तिकस्य बलवत्तरत्वात् सर्वनामसंख्ययोः पूर्वनिपातः। द्विशब्दस्य सर्वनामत्वात् 'द्विशुक्लः' इति नागेशः पठति॥ 'परेण' परवर्त्तिना 'विप्रतिषेधः' विरोधः परविप्रतिषेधः। 'शब्दात् परविप्रतिषेधः' तस्मात्, उच्चारणवशात् यः

परविप्रतिषेधो जातस्संख्यात्। अयमाशय:—वार्त्तिके प्रथमं सर्वनाम धर्मं ततः संख्या। संख्यायाः परत्वात् तथा विप्रतिषेधे संख्या एव प्रवर्त्तते, प्राक् पतति, न सर्वनाम। अत एव 'संख्यासर्वनाम्नोः' इति नोक्तं वार्त्तिके। एवं 'द्वौ अन्यौ' अन्यथाभूतौ अस्य इति विग्रहे द्विशब्दस्य पूर्वनिपाते द्व्यन्यः। येन वाक्यवृत्तिकाले द्वौ शब्दौ अन्यथा पठितौ स एवमुच्यते॥ अत्रापि नागेशः 'द्व्यन्यः' इति युक्तं मन्यते। इदमपि क्वचित् वार्त्तिक-रूपेणैव पठितम्। वस्तुतस्तु पूर्ववर्त्तिनो वार्त्तिकस्य भाष्यकृता कृत व्याख्यानमात्रमेतत् न वार्त्तिकान्तरम्॥

दी—। "संख्याया अल्पीयस्याः" (वार्त्तिक)। द्वित्राः॥ द्वन्द्वेऽपि। द्वादश॥

When numerals are compounded together, the less leads. Thus द्वित्राः। This is true of a द्वन्द्व also; thus द्वादश।

मित—। संख्यानां मिथः समासे अल्पीयसी संख्या प्राक् पतति इति वाच्यम् इत्यर्थः। एतद्द्वन्द्वेऽपि भवति। बहुव्रीहौ द्वित्राः, द्वन्द्वे द्वादश, इत्युदाहरणम्॥ तत्-पुरुषेऽपि—सहस्राणां शतं शतसहस्रम्॥

दी—। "वा प्रियस्य" (वार्त्तिक)। गुड़प्रियः—प्रियगुड़ः।

The word प्रिय optionally leads in a बहुव्रीहि। Thus गुड़ etc. fond of non-clarified sugar.

मित—। बहुव्रीहौ विशेषणस्य प्रियशब्दस्य पूर्वनिपातविकल्पार्थं वार्त्तिकम्। अत-एव प्रियेण सह इति विग्रहे प्रियशब्दस्य विशेषणत्वाभावात् प्रियसह इति न भवति॥

दी—। "गड्वादेः परा सप्तमी" (वार्त्तिक)। गडुकण्ठः। क्वचिन्न—वहेगडुः।

सप्तम्यन्त words follow when compounded with words of the गड्वादि class in a बहुव्रीहि। Thus गडुकण्ठः--having a tumour in the throat. Sometimes they do not follow. Thus वहेगडुः—having a swelling on the neck.

मित—। गडुः स्फीतिमिदः। 'गड्वादेः' इति पञ्चमी। 'सप्तमी' सप्तम्यन्तं

पदम्। गड्वादिभिः शब्दैः सह बहुव्रीहौ सप्तम्यन्तं परं स्यात्॥ गडुः कण्ठे यस्य गडुकण्ठः॥ 'क्वचित्' सप्तमी परा 'न' यथाविहितं प्रागेव। वहे स्कन्धः। वहे गडुः यस्य वहेगडुः। "अमूर्द्धमस्तकात्—" (९७०) इति सप्तम्या अलुक्॥

८९८। निष्ठा॥ २।२।३६॥

दी—। निष्ठान्तं बहुव्रीहौ पूर्वं स्यात्। कृतकृत्यः।

Words derived with क्त or क्तवतु lead in a बहुव्रीहि। Thus कृत &c., one who has finished his work.

मित—। क्तक्तवतू 'निष्ठा' इत्युच्येते। तदन्तविधिः। तदाह 'निष्ठान्तम्' इति॥ ननु कृतं कृत्यमनेन इति विग्रहे कृतमिति विशेषणं, तस्य च पूर्वेणैव सिद्धः पूर्वनिपातः, किमर्थं सूत्रम्? उच्यते—द्वावपि इह क्रियाशब्दौ इति विशेषणविशेष्यभावे कामचारः। तथाच कृत्यमिति करणीयम्। करणीयेषु कानिचित् कृतानि कानि पुनरकृतानि वर्त्तन्ते इति कृत्वा कृतमिति विशेषणं कृत्यमिति विशेष्यम्। किञ्च कृतेषु अनुष्ठितेषु कर्मसु कानि वा कृत्यानि कानि वा अकृत्यानि सन्ति, एवं कृत्वा कृत्यमिति विशेषणं कृतमिति विशेष्यं भवति। तदिह नियमः क्रियते निष्ठान्तमेव विशेषणम् इतरत् विशेष्यमिति॥ अथवा निष्ठान्तस्य विशेष्यत्वेऽपि पूर्वनिपातो यथा स्यात् तदर्थं सूत्रम्। तेन "स्मितपूर्वमभाषत" इत्यादि सिद्धम्। अत्र हि स्मितं पूर्वं यस्मिन् कर्मणि तत् यथा तथा अभाषत इत्यर्थः। ततः स्मितमिति विशेष्यं पूर्वमिति विशेषणम् विशेष्यस्य च निष्ठान्तस्य पूर्वनिपातः। एतमेव मार्गमस्य दर्शनं प्रतिभाति, यदसौ "चारुस्मिता इत्याहिताग्न्यादित्वात् साधु" इत्याह। चारु स्मितं यस्या इति विग्रहे स्मितशब्दस्य विशेष्यत्वेऽपि पूर्वनिपातः प्रसक्तः इति पक्षे एव आहिताग्न्यादित्वकल्पनं सङ्गच्छते, अन्यथा "सप्तमीविशेषणे—" इति स्मितमेव चारुस्मितेति॥

दी—। "जातिकालसुखादिभ्यः परा निष्ठा वाच्या" (वार्त्तिक)। सारङ्गजग्धी। मासजाता। सुखजाता॥ प्रायिकञ्चेदम्। कृतकटः। पीतोदकः॥

Words derived with निष्ठा follow class-names,—words indica-

ting time, and words of the सुखादि class, in a बहुव्रीहि। Thus सारङ्ग &c.,—a woman that eats venison; मास &c.,—one who has acquired a month in age, i. e., a month old; सुख &c.—one unto whom happiness has come. The Varttika, however, has exceptions; thus कृत etc., though कट is a जाति; पीत etc. उदक being a जाति।

मित—। बहुव्रीहौ इत्यस्ति। "सप्तमीविशेषणे—" (८९८) इत्यस्य प्रतिषेधः। जातिमुदाहरति सारङ्गी जग्धः अनया सारङ्गजग्धी। "अस्वाङ्गपूर्व—" (५०९—४।१।५२ इति ङीप् विकल्पः॥ काले उदाहरणम्—मासो वयस्त्वेन अस्याः मासजाता॥ सुखादिषु—सुखं जातमस्याः सुखजाता॥ 'प्रायिकं' बाहुल्येन 'इदं' भवति, व्यभिचारोऽपि दृश्यते इति भावः। तद् यथा—कृतकट इत्यादिषु जातेः पूर्वं निष्ठा॥

## ९००। वाहिताग्न्यादिषु॥ २।२।३७॥

### दी—। आहिताग्निः—अग्न्याहितः। आकृतिगणोऽयम्।

In words of the आहिताग्न्यादि list, निष्ठान्त words lead optionally. Thus आहितः अग्निः अनेन gives आहिताग्निः or अग्न्याहितः। The list is not a closed one, but determined from usage.

मित—। आहिताग्निप्रभृतिषु शब्देषु निष्ठान्तं वा पूर्वं दृश्यते बहुव्रीहौ। आहितः अग्निः अनेन इति विग्रहे आहिताग्निः—अग्न्याहितः। गण एव प्रयोगानुसर्तव्यः॥

### दी—। "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ" (वार्त्तिक)। अस्युद्यतः। दण्डपाणिः। क्वचिन्न—विवृतासिः।

In a बहुव्रीहि compound, निष्ठान्त and सप्तम्यन्त words are placed after words meaning a weapon. Thus अस्युद्यतः, one with uplifted sword; दण्डपाणिः one with stick in hand. Exceptions occur sometimes, as in विवृतासिः—one with sword drawn.

मित—। बहुव्रीहौ 'प्रहरणार्थेभ्यः' शस्त्रवाचकेभ्यः शब्देभ्यः 'परं निष्ठान्तं सप्तम्य-

न्तं' शब्दः प्रयोज्य इत्यर्थः ॥ उद्यतः असि अनेन इति विग्रहे निष्ठायाः परनिपाते अमुद्यतः ॥ दण्डः पाणौ अस्य इति दण्डपाणिः । सप्तम्यन्तस्य परनिपातः ॥ क्वचि-देव विधिर्न, यथाप्राप्त एव भवति । विहृतः असिः अनेन विहृतासिः । "सप्तमी—" ( ८१९ ) इति विशेषणस्य पूर्वनिपातः, प्रहरणं परम् ॥

---

## अथ द्वन्द्वः

९०१ । चार्थे द्वन्द्वः ॥ २।२।२९ ॥

टी—। अनेकं सुबन्तं चार्थे वर्त्तमानं वा समस्यते, स द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । परस्पर-निरपेक्षस्य अनेकस्य एकस्मिन्नन्वयः समुच्चयः । अन्यतरस्य आनुषङ्गिकत्वे अन्वाचयः मिलितानामन्वये इतरेतरयोगः । समूहः समाहारः ॥ तत्र 'ईश्वरं गुरुञ्च भजस्व' इति समुच्चये "भिक्षामट गाञ्चानय" इत्यन्वाचये च न समासः, असामर्थ्यात् ॥ धवखदिरौ । संज्ञापरिभाषम् ॥ अनेकोक्तिः होतृपोतृनेष्टोद्गातारः । द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्वे तु होतापोतानेष्टोद्गातारः ॥

Several सुबन्त words implying the sense of च are compounded optionally and the compound is called a द्वन्द्व । The senses of च are समुच्चय, अन्वाचय, इतरेतरयोग and समाहार । समुच्चय is the sense of च when it makes the same predication of several mutually independent matters. अन्वाचय is its sense when it states one matter as subordinate to another. It means इतरेतरयोग if it predicates the same thing of several mutually dependent objects united. समाहार is its meaning when it speaks of several as for-

ming a single group. Of these four senses, समास is not available in समुच्चय, such as ईश्वरम् etc. ; nor in अन्वाचय, such as भिक्षाम् etc., because of the absence of सामर्थ्य । धवखदिरौ is an example of इतरेतरयोग, and संज्ञा etc, of समाहार । As we say several ( अनेक ), we may compound more than two ; thus होतृ etc., with आनङ् at the end. But if we compound two and two and then again, we get होता etc., with आनङ् in all the first three.

मित—। 'शेषः' इत्यस्ति 'अनेकम्' इति च। 'अनेकम्' एकाधिकम् न तु द्वे एव। 'सुबन्तं' शेषः, प्रथमान्तमित्यर्थः। 'चार्थे वर्तमानम्' इति समासघटकपदस्य विशेषणम्। समासोऽपि चार्थे एव। तदेवं चार्थे वर्तमानानां प्रथमान्तानां द्वन्द्वः, समासश्च चार्थे इति फलितम् ॥ चार्थं विवृणोति समुच्चयेति। 'परस्परेण निरपेक्षं' समकार्यं यत् 'अनेकम्', द्रव्यं वा गुणो वा क्रिया वा, तस्य 'एकस्मिन्' द्रव्ये वा गुणे वा क्रियायां वा यदा 'अन्वयः' तदा चार्थः 'समुच्चयः'। तथा हि 'ईश्वरं गुरुञ्च भजस्व' इत्यत्र एकस्यां भजनक्रियायां ईश्वरस्य गुरोश्च अन्वयः। ईश्वरभजनं गुरुभजनञ्च परस्परनिरपेक्षम्। तदिह समुच्चये च-शब्दः। इयञ्च निरपेक्षता अर्थबोधे। वाक्ये तु च-शब्दो गुरुणा सम्बद्धः। 'ईशं भजस्व' इत्येव वाक्यं प्रथममुत्तिष्ठते। ततः 'गुरुञ्च' इति। तत्र च-शब्द न भजनक्रियायाम् ईश्वरेण सह गुरोः समुच्चयः। एवं गुरुरिह ईश्वरेण सापेक्षः चार्थे च गुरुरेव वर्तमानः न ईश्वरोऽपि ॥ आनुषङ्गिकत्वे अन्वाचयत्वम्। उदाहरणम् 'भिक्षामट गाञ्चानय' इति। भिक्षाटनं प्रधानम्। भिक्षाटनम् यदि गां पश्यति आनयति, नान्यथा। गवानयनमप्रधानं प्रधानेन भिक्षाटनेन सह एकस्मिन्नेव देवदत्ते अन्वाचीयते ॥ 'मिलितानां' सहितानां सापेक्षाणाम् एकस्मिन् 'अन्वये इतरेतरयोगः' चार्थः। तथा हि धवञ्च खदिरञ्च छिन्धि इत्यत्र द्वयोरपि दर्शनं युगपदेव भवति। मिलितौ तौ दर्शनविषयौ भवतः युगपद्दर्शने अनयोः सापेक्षतास्ति। तदिह इतरेतरयोगश्चार्थः ॥ 'समूहः' संहतिः 'समाहारः' सोऽपि चार्थः। संज्ञा च परिभाषा च यदा अपृथग्भावेन उपलभ्येते तदा समाहारश्चार्थः ॥ समुच्चये यथा प्रागुक्तं तथा 'गुरु' इति चार्थे वर्तमानम्, ईश्वर' इति तु न तथा। तत् समासघटकपदानां सर्वेषां चार्थे वर्तमानता नास्ति इति एकार्थीभावविरहात् असामर्थ्यम्, ततः 'ईश्वरं गुरुम्' इति

न द्वन्द्वः ॥ किञ्च—इह द्वयोर्भजनक्रिययोर्भिन्नं कर्म। कर्मभेदात् क्रियापि भिन्ना। अतोऽपि एकार्थीभावो नास्ति, नापि समासः ॥ अन्वाचये स्पष्टमेव भिन्ना क्रिया, नैव एकार्थीभावः। असामर्थ्यं प्राग्वदेव, नापि समासः ॥ तदाह 'न समासः असामर्थ्यात्' इति ॥ इतरेतरयोगे सर्वेषामेव तुल्यं प्राधान्यं मिलितानाञ्च क्रियायोगः। तेन एकार्थीभावोऽस्ति समासश्च सिद्धः। च-शब्दस्य स सर्वैरेव योगः। धवश्च खदिरश्च धवखदिरौ। धवस्य खदिरस्य च पृथगुपलब्धिरिति द्वित्वे द्विवचनम्। चार्थस्य समासेन उक्तत्वात् च-शब्दस्याप्रयोगः ॥ एवं संज्ञापरिभाषम्। संज्ञा च परिभाषा च इति विग्रहे सापेक्षयोर्मिलितयोरेव क्रियायोगः। परम् इयं संज्ञा इयं परिभाषा इति विभागेन अनयोर्न ग्रहणम्। अविभागेनैव एव समाहार इति समूहस्य एकस्य ग्रहणम्। समूहस्य एकत्वादेकवचनम्। "स नपुंसकम्—" (८२१—२।४।१७) इति नपुंसकत्वं ह्रस्वं, संज्ञापरिभाषम्। इह "अध्ययनतः—" (९०८—२।४।५) इति अवयवविभागविवक्षा प्रतिषिध्यते। तेन संज्ञापरिभाषे इति इतरेतरयोगो न भवति ॥ सामान्यतो विवक्षाधीनः अवयवविभागः। तत्र, उद्भूतावयवभेदे इतरेतरयोगः—हंसकोकिलौ; तिरोहितावयवभेदे समाहारः—हंसकोकिलम्। केषुचित्तु प्रतिषिद्धा विवक्षा—संज्ञापरिभाषम्। तेषु समाहार एव इतरेतरयोगो नास्ति इति वक्ष्यति ॥ 'अनेकम्' इत्यस्ति, तेन होता च पोता च नेष्टा च उद्गाता च इति चतुर्णां द्वन्द्वे "आनङृतो—" (९९१—६।३।२५) इत्युपान्त्यस्य आनङि होतृपोतृनेष्टोद्गातारः ॥ होता च पोता च इति द्वन्द्वे होतापोतारौ। नेष्टा च उद्गाता च इति नेष्टोद्गातारौ। ततः होतापोतारौ च नेष्टोद्गातारौ च इति पुनर्द्वन्द्वे उपान्त्यस्य आनङि होतापोतानेष्टोद्गातारः ॥

## ८०२। राजदन्तादिषु परम् ॥ २।२।३१ ॥

**दी—। एषु पूर्वप्रयोगार्हं परं स्यात्। दन्तानां राजा राजदन्तः।**

In compounds listed with राजदन्त leading, what should come first appears last. Thus दन्तानां राजा, instead of giving दन्तराजः, yields राजदन्तः।

मित—। 'एषु' राजदन्तगणस्थेषु शब्देषु। पूर्वप्रयोगार्हम्' उपसर्जनत्वात् प्राक्

प्रयोज्यम्। "उपसर्जनं पूर्वम्" (६५५—२।२।३०) इत्यस्यापवादः अन्यस्यापि यथालक्षणं विहितस्य पूर्वनिपातस्य ॥ इदं सर्वसमासविषयकम् ॥ दन्तानां राजा राजदन्त इति षष्ठीतत्पुरुषः ॥

दी—। "धर्मादिष्वनियमः" (गणसूत्र)। अर्थधर्मौ-धर्मार्थौ ॥ दम्पती—जम्पती—जायापती। जायाशब्दस्य जम्भावो दम्भावश्च वा निपात्यते। आकृतिगणोऽयम् ॥

There is no restriction regarding the lead with words such as धर्म, अर्थ etc.[1] Thus अर्थधर्मौ etc. जाया becomes optionally जम् or दम् by निपातन in this गण। Thus दम्पती etc. The गण has to be determined from usage.

मित—। धर्मार्थकाममोक्षाः 'धर्मादयः'। एषु पूर्वनिपातस्य नियमो नास्ति। एते प्रागपि परमपि दृश्यन्ते। इदं द्वन्द्वविषयकम् ॥ जाया च पतिश्च इति विग्रहे पत्युरभ्यर्हितत्वात् पूर्वनिपाते प्राप्ते (८०५, वा) परनिपातः। 'जायापति' इति प्रातिपदिकम्। द्विवचने जायापती। जायाशब्दस्य वैकल्पिके आदेशे जम्पती—दम्पती ॥

८०३। द्वन्द्वे घि ॥ २।२।३२ ॥

दी—। द्वन्द्वे घिसंज्ञं पूर्वं स्यात्। हरिश्च हरश्च हरिहरौ।

Words technically known as घि (२४३—१।४।७) lead in a द्वन्द्व। Thus हरिहरौ।

मित—। घि इति "शेषो घ्यसखि" (२४३—१।४।७) इत्यनेनोक्ताः शब्दाः ह्रस्वेकारोकारान्ताः। 'हरि' इति घिसंज्ञकमिति प्राक् प्रयुक्तम् ॥ 'अनेकम्' इत्यस्य प्रथमान्तत्वात् बहुव्रीहिरिव द्वन्द्वोऽपि सर्वोपसर्जनः। तत् पूर्वनिपातस्य अनियमे प्राप्ते नियमं आरभ्यते ॥

दी—। "अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे" (वार्त्तिक)। हरिगुरुहराः—हरिहरगुरवः।

When the rule applies to more than one, the lead is re-

stricted to one only without any restriction as to the rest. Thus हरि etc. where both हरि and गुरु are entitled to lead. The lead is given to one only, viz, हरि, the rest occurring in any order.

मित—। 'अनेकस्मिन्' एकाधिके शब्दे 'प्राप्ते' पूर्वनिपातप्राप्तौ सत्याम् 'एकत्र' तेषां यस्मिन् कस्मिंश्चिदेकस्मिन् 'नियमः' पूर्वनिपातो नियम्यते 'शेषे' इतरेषु 'अनियमः' नियमाभावः। एकः पूर्वं पतति इतरेषां शेषाणां यथेष्टं विनिवेश इत्यर्थः। उदाहरणे "हरि' इति 'गुरु' इति द्वयोरपि प्राप्तिः। 'हरि' इति नियतम् 'गुरु' इति अनियतम् ॥

८०९। अजाद्यदन्तम् ॥ २।२।३३ ॥

दी—। इदं द्वन्द्वे पूर्वं स्यात्। ईशकृष्णौ।

A word beginning with a vowel and ending in short अ leads in a द्वन्द्व। Thus ईश leads in ईशकृष्णौ।

मित—। 'अजादि' स्वरादि। 'अदन्तं' ह्रस्वावर्णान्तम्। अजादि च तत् अदन्तञ्च 'अजाद्यदन्तम्'। यस्य आदौ स्वरः अन्ते च ह्रस्वः अवर्णः तत्शब्दस्वरूपं द्वन्द्वे पूर्वं पतति। 'ईश' इत्यजाद्यदन्तम् अतः पूर्वं प्रयुक्तम्।

दी—। "बहुष्वनियमः" (भाष्यम्)। अश्वरथेन्द्राः। इन्द्ररथाश्वाः।

The rule does not apply when more than two are compounded. Thus अश्व etc., has इन्द्र last ; इन्द्र etc.,has अश्व last.

मित—। 'बहुषु' द्वन्द्वाङ्गेषु सत्सु 'नियमो न' नैव प्रवर्त्तते। अश्वरथेन्द्राः इत्यत्र 'इन्द्र' इति अजाद्यदन्तत्वेऽपि परम्। एवम् इन्द्ररथाश्वाः इत्यत्रापि ॥ एतत्तु भाष्यकारस्य व्याख्यानमात्रं "अल्पाच्तरम्" (८०५) इत्यत्रोक्तं न वार्त्तिकम्।

दी—। "घ्यन्तादजाद्यदन्तं विप्रतिषेधेन" (वृत्तिः)। इन्द्राग्नी।

When words ending in इ or उ clash with अजाद्यदन्त words, in the matter of lead, the latter prevails. Thus इन्द्राग्नी, where इन्द्र should have the lead because it is अजाद्यदन्त, and अग्नि claims it because it is a घि। इन्द्र gets it because "अजाद्यदन्तम्" is later than "द्वन्द्वे घि"।

मित—। 'घि' इति इवर्णोवर्णयोः संज्ञा इति पञ्चमाद्यित्याह 'घ्यन्तात्' इति इवर्णोवर्णान्तादित्यर्थः। 'विप्रतिषेधेन' "विप्रतिषेधे परम्—" (१७५—१।४।२) इति सूत्रेण। 'घ्यन्तात्' घ्यन्तं विहाय 'अजाद्यदन्तं' प्राक् पतति इत्यर्थः। इन्द्राग्नी इत्यत्र 'इन्द्र' इत्याजाद्यदन्तम् 'अग्नि' इति घि, घ्यन्तं वा परवर्त्तिना "अजाद्यदन्तम्" इत्यनेन पूर्ववर्त्तिनो "द्वन्द्वे घि" इत्यस्य बाधे इन्द्रशब्दः पूर्वं पतति॥ एतच्च न्यायप्राप्तमेव न वार्त्तिकम्। इत्तानुरोधादिहोपन्यस्तम्॥

८०५। अल्पाच्तरम्॥ २।२।७४॥

दी—। शिवकेशवौ।

That which has fewer vowels leads in a द्वन्द्व। Thus शिव etc.

मित—। अल्पः अच् अस्मिन् अल्पाच्। कुतः पुनरल्पतायाः बोधः? अल्पत्वम् आधिक्यञ्च आपेक्षिकमेव। इतरापेक्षया अल्पो वा अधिको वा कश्चिद्भवति न ह्रि प्रकृत्या। एवम् 'अल्पाच्' इत्येव अतिशयो गम्यते, कथं पुनस्तरप्? स्वार्थे तरप् इत्येव निपातनात्। अल्पाजेव अल्पाच्तरम्। तादृशं शब्दरूपं द्वन्द्वे प्राक् प्रयोज्यम्॥ द्वयोरिव नियमः बहुषु अनियमः इति द्वयोरेवोदाहरति शिवकेशवौ इति॥ ननु तरपि पूर्वस्य पदत्वे अल्पाक्तरमित्यनेन भाव्यम् किमिदमल्पाच्तरमिति? इत्येव निपातनात् कुत्वाभावः॥ मा भूत् कुत्वम्। अल्पाच्चरमिति तकारस्य चकारः कथं न भवति? तदपि निपातनादेव॥

दी—। "ऋतुनक्षत्राणां समाक्षराणामानुपूर्व्येण" (वार्त्तिक)। हेमन्त-शिशिरवसन्ताः। कृत्तिकारोहिण्यौ। 'समाक्षराणाम्' किम्? ग्रीष्म-वसन्तौ।

Names of seasons and stars containing the same number of vowels are placed in order of succession in द्वन्द्व compounds. Thus हेमन्त etc., Autumn, Winter and spring; कृत्तिका etc. Why say समाक्षराणाम्? Witness ग्रीष्म, etc., where ग्रीष्म, having fewer vowels, leads, though in the order of succession it follows वसन्त।

मित—। 'समाक्षराणां' समस्वराणामित्यर्थः। अन्यथा अक्षरशब्दस्येह वर्णमात्र-प्रसिद्धे हेमन्तशिशिरवसन्ताः न हि समाक्षरा इति उदाहरणे दोषः प्रसज्यते॥ पूर्वम्-नुगतः अनुपूर्वः। तस्य भावः आनुपूर्व्यं क्रमः। तेन। ऋतूनामानुपूर्व्यमाविर्भावेण, नक्षत्राणामुदयेन॥ समाक्षराणाम् ऋतूनां नक्षत्राणाञ्च द्वन्द्वे यथाक्रमं विन्यास इत्यर्थः॥ वसन्तात् परवर्त्तौ अपि शीतोऽल्पाच्तरत्वात् प्राक् पतति॥

टी—। "लघ्वक्षरं पूर्वम्" (वार्त्तिक)। कुशकाशम्।

A word with all light syllables, leads in a द्वन्द्व compound. Thus कुश etc., in which कुश with all light syllables leads.

मित—। "ह्रस्वं लघु—" (३१—१।४।१०) इति लघुलक्षणम्। 'अक्षरम्' इति स्वरः। लघूनि अक्षराणि स्वरा अस्य 'लघ्वक्षरम्'। तादृशं शब्दरूपं द्वन्द्वे प्राक् पतति॥ कुशाश्च काशाश्च इति बहुवचनेन विग्रहे "जातिरप्राणिनाम्" (६१०—२।४।६) इति समाहारः। कुशश्च काशश्च इत्येकवचने तु कुशकाशौ॥

टी—। "अभ्यर्हितञ्च" (वार्त्तिक)। तापसपर्वतौ।

The more esteemed leads in a द्वन्द्व। Thus तापस etc.—the sage and the hill.

मित—। 'अभ्यर्हितं' पूजितम्। तत् द्वन्द्वे प्राक् पतति॥ तापसः पूज्यो न पर्वतः इति तापसस्य पूर्वनिपातः॥

टी—। "वर्णानामानुपूर्व्येण" (वार्त्तिक)। ब्राह्मण-क्षत्रियविट्शूद्राः।

The classes are arranged in a द्वन्द्व compound in order of precedence. Thus ब्राह्मण etc.

मित—। 'वर्णाः' चातुर्वर्ण्यम्। 'आनुपूर्व्यं' क्रम इति व्याख्यातम्। क्रमश्चेह उत्पत्तिक्रमः। ब्रह्मणो मुखाद्ब्राह्मणः, बाहुभ्यां क्षत्रियः, ऊरुभ्यां विट्, पद्भ्यां शूद्र इति॥ नन्विह उत्पत्तिस्थानगौरवात् यथाक्रममेषामभ्यर्हितत्वम्। तत् "अभ्यर्हितञ्च" इत्यनेनैवेदं सिध्यति किमर्थं वार्त्तिकान्तरम्? उच्यते—अभ्यर्हितमिति कृत्वा ब्राह्मणस्य पूर्वनिपाते कृते, तत्रैव कृतार्थं वार्त्तिकमितरेषु त्रिषु सूत्रो न प्रवर्त्तते इति शेषाणामनियमः

प्राप्नोति, अतो वचनम् । तेन ब्राह्मणविट्क्षत्रियशूद्राः, ब्राह्मणशूद्रक्षत्रियविश: इत्यादयो न भवन्ति ॥

दी—। "भ्रातुर्ज्यायस:" ( वार्त्तिक ) युधिष्ठिरार्जुनौ ।

The elder brother leads in a द्वन्द्व compound. Thus युधि etc.

मित—। अतिशयेन वृद्ध इति वृद्धशब्दादीयसुनि ज्यायान् वयोधिकः । द्वन्द्वे ज्यायान् भ्राता प्राक् पतति । 'भ्राता' इति 'भ्रातृनाम्' ॥ अभ्यर्हितत्वादेव भ्रातुर्ज्यायसः पूर्वनिपाते सिद्धे व्यर्थं वार्त्तिकमिति चेत्, न । अभ्यर्हितता प्रशस्तता । लोके यं प्रशस्तं मन्यते स एवाभ्यर्हितः । वयोधिकत्वं जन्मना कृतं न लोकेन । तत् वयोधिक एव अभ्यर्हितः इति नास्ति नियमः, अस्ति च वार्त्तिकस्यावकाशः ॥ इद्वपूर्वनिपातप्रकरणे विप्रतिषेधेन "अजाद्यदन्तम्" "अल्पाच्तरम्" "लघ्वक्षरम्—" "ऋतुनक्षत्राणाम्—" "अभ्यर्हितञ्च", "भ्रातुर्ज्यायस:" इति पूर्वं पूर्वमपबाध्य परमेकं प्रवर्तते । "सर्वतोऽभ्यर्हितं पूर्वम्" इति मतान्तरमावेदितं नागेशेन ॥

८०६ । द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ॥ २।४।२ ॥

दी—। एषां द्वन्द्वः एकवत् स्यात् । पाणिपादम् । मार्दङ्गिकपाणविकम् । रथिकाश्वारोहम् । समाहारस्य एकत्वादेकत्वे सिद्धे नियमार्थं प्रकरणम्—प्राण्यङ्गादीनां समाहार एव यथा स्यात् ।

द्वन्द्व compounds of parts of the body of the animate, of members of an orchestra, of divisions of an army, are always in the singular. Thus पाणि etc., hands and feet ; मार्दङ्गिक etc., drummers and taborers ; रथिक etc., charioteers and the cavalry; Well, the singular in these is already available if we make a समाहारद्वन्द्व, because a समाहार, being a group, conveys a singular idea. Hence this rule is to be interpreted as restrictive—समाहार alone is available in a द्वन्द्व of प्राण्यङ्ग etc., no इतरेतरद्वन्द्व ।

मित—। तूर्ये मार्दङ्गिकपाणविकवादकसमूहः, अङ्गं तु तदेकदेशः । 'सेना' वचनम् ।

प्राणी च तूर्यञ्च सेना च प्राणितूर्यसेनाः। तेषामङ्गानि। तेषाम्। अङ्गशब्दः प्रत्येकं सम्बध्यते। 'एषां' प्राण्यङ्गानां तूर्याङ्गाणां सेनाङ्गानाञ्च 'द्वन्द्वः एकवत् स्यात्'। पाणी च पादौ च पाणिपादम्। प्राण्यङ्गमपि प्राणी इति कृत्वा "जातिरप्राणिनाम्" (९१०—२।४।६) इत्यनेन न सिद्धिः। 'मृदङ्गः' मृदङ्गवादनम्। मृदङ्गः शिल्पमस्य मार्दङ्गिकः। एवं पाणविकः। मार्दङ्गिकश्च पाणविकश्च इति विग्रहः॥ च-शब्दः समुच्चये। 'द्वन्द्वः' इत्यस्य पूर्वसूत्रस्थेन 'द्विगुः' इत्यनेन सह तदन्तो 'एकवचनम्' इत्येतस्मिन् समुच्चयः। तेन 'द्विगुरेकवचनं द्वन्द्वश्च' इत्यर्थः सम्पद्यते॥ तदाह 'द्वन्द्व एकवत् स्यात्' इति। अतः परम् 'द्वन्द्वः एकवचनम्' इत्यनुवर्तते॥ रथाः सन्ति एषां रथिकाः। मत्वर्थीयष्ठन्। अश्वानारोहन्ति अश्वारोहाः। रथिकाश्च अश्वारोहाश्च इति बहुवचनेन विग्रहे रथिकाश्वारोहम्। एकवचनेन तु रथिकाश्वारोहौ॥ अत्र अङ्गशब्दस्य प्रत्येकमन्वयात् प्राण्यङ्गानां द्वन्द्वः, तूर्याङ्गाणां द्वन्द्वः, सेनाङ्गानां द्वन्द्वः इत्येवं भवति, अतः पाणिमार्दङ्गिकमित्यादि न॥ ननु द्वन्द्वे विवक्षावशात् इतरेतरयोगः समाहारश्च भवति इत्युक्तम्। तत्र समाहारपक्षे एकत्वं भविष्यति इत्यलं तदर्थमिह यत्नेन। अत आह 'नियमार्थं प्रकरणम्' इति। नियमश्च 'प्राण्यङ्गादीनां समाहार एव' न तु पक्षे इतरेतरयोगोऽपि इत्येवंविधः॥

९०७। अनुवादे चरणानाम् ॥ २।४।३ ॥

दी—। चरणानां द्वन्द्वः एकवत् स्यात् सिद्धस्य उपन्यासे।

द्वन्द्व compounds of students of particular schools of Vedic study, are in the singular only if the compounds occur in reports of what are found out to be facts.

मित—। 'द्वन्द्वः एकवचनम्' इत्यस्ति। प्रमाणादिना सिद्धत्वेन ज्ञातस्य अर्थस्य अनुकथनम् अनुवादः। चरणं वेदशाखा। तस्य अप्राणित्वात् "जातिरप्राणिनाम्" (९१०—२।४।६) इति सिद्धमेवैकत्वम्। तदत्र चरणाध्येतॄ चरणः, स एव सूत्रस्य विषयः॥ सिद्धस्य विज्ञापने चरणानां द्वन्द्वः एकवत् स्यात् ॥ इत्यर्थः समयः॥

दी—। "स्थेणोर्लुङीति वक्तव्यम्" (वार्त्तिक)। "उदगात् कठकालापं प्रत्यष्ठात् कठकौथुमम्"।

The rule applies only if the report is made with लुङ् attached to the root स्था or इण्। Thus उदगात् etc.,—the students of कठशाखा and कालापशाखा were in the ascendant, and those of कठ and कौथुम got established—where उदगात् has लुङ् after इण् and प्रत्यष्ठात् has it after स्था।

मित—। यदा च स्थाधात्वोरिण्धात्वोर्वा लुङि कर्मेण अनुवादो भवति तदैव सूत्रं प्रवर्तते इत्यर्थः ॥ उदगात् इति इण्धातोर्लुङ्, प्रत्यष्ठादिति स्थाधातोः ॥ कठः इति ऋषिः वैशम्पायनशिष्यः। तेन प्रोक्तः इति "कलापिवैशम्पायन—" (१४८४—४।३।१०४) इति णिनिः। कठ णिनि इति स्थिते "कठचरकाल्लुक्—" (१४८७—४।३।१०७) इति लुकि कठः वेदशाखाविशेषः ॥ कलापी अपि वैशम्पायनशिष्यः। तेन प्रोक्तः इति णिनौ प्राप्ते "कलापिनोऽण्" इत्यण्। ततः "नान्तस्य टिलोपे सब्रह्मचारि—" (१४८८, वा) इति टिलोपे कलाप् अण् इति स्थिते कालापः वेदशाखाविशेषः ॥ कठमधीयते कालापमधीयते इति "तदधीते—" (१२६९—४।२।५९) इत्यण्। ततः कठ अण् कालाप अण् इति स्थिते "प्रोक्ताल्लुक्" (१२७४—४।२।६४) इत्यणो लुकि कठाः कालापाः ॥ कठाश्च कालापाश्च इति विग्रहः ॥ कौथुमी इति ऋषिः। तेन प्रोक्तः इत्यणि कौथुमः। कौथुममधीयते इत्यण्लुकि कौथुमाः, इत्यादि ॥ अनुवादे किम्? उदगुः कठकालापाः इति अनुवादः न हि प्रमाणान्तरनिरूपितोऽर्थः ॥ स्थेणोः किम्? अवर्तिषत कठकालापाः ॥ लुङि किम्? प्रत्यतिष्ठन् कठकालापाः ॥

९०८। अध्वर्युक्रतुरनपुंसकम् ॥ २।४।४ ॥

दो—। यजुर्वेदे विहितो यः क्रतुः तद्वाचिनामनपुंसकलिङ्गानां द्वन्द्वः एकवत् स्यात्। अर्काश्वमेधम्। 'अध्वर्युक्रतु' किम्? इषुवज्रौ सामवेदे विहितौ। 'अनपुंसकम्' किम्? राजसूयवाजपेये। अर्धर्चादौ।

द्वन्द्व compounds of names of sacrifices, not in the neuter and enjoined in the यजुर्वेद, are in the singular only. Thus अर्क etc.,—the sacrifices अर्क and अश्वमेध। Why say अध्वर्युक्रतुः? Witness

इषु &c., in which इषु and वज्र are sacrifices laid down in the साम-वेद and the compnund is in the singular. Why say अनपुंसकम्? Witness राजसूय &c. in the dual, the विग्रह being राजसूयश्च वाजपेयश्च in the neuter which is allowable because these are अर्धर्चादि words and therefore optionally neuter.

मित—। 'द्वन्द्वः एकवचनम्' इत्यस्ति। 'अध्वर्युः' इत्लिङ्गिग्रहीषः, तथा च "अध्वर्युम्वः पूर्वहता मयीति" इति प्रयोगः। इह लक्षणया अध्वर्युर्वेदः अध्वर्युः यजुर्वेद इत्यर्थः। अध्वर्यौ क्रतुः 'अध्वर्युक्रतुः' यजुर्वेदे विहितः क्रतुः। तस्य। षष्ठ्यर्थे प्रथमा॥ 'अन-पुंसकम्' अनपुंसकस्य इत्यर्थः। क्रतुविशेषणम्॥ अनपुंसकानामध्वर्युक्रतूनां द्वन्द्व एकवत् स्यादित्यन्वयः॥ अर्कश्च अश्वमेधश्च इति विग्रहे द्वन्द्वैकत्वम्॥ इषुश्च वज्रश्च इति तु सामवेदे विहितत्वात् इतरेतरद्वन्द्वोऽपि॥ राजसूयश्च वाजपेयश्च इति नपुंसकेन विग्रहे तु यजुर्वेदक्रतावपि पक्षे इतरेतरद्वन्द्वः। राजसूयवाजपेयशब्दौ अर्धर्चादिषु पठ्येते, तदनयोर्वैकल्पिकी नपुंसकता॥

९०६। अध्ययनतोऽविप्रकृष्टाख्यानाम्॥ २।४।५॥

टी—। अध्ययनेन प्रत्यासन्ना आख्या येषां तेषां द्वन्द्व एकवत्। पदकक्रमकम्।

द्वन्द्व compounds of designations received through study are in the singular only if the subjects of study follow one another close. Thus पदक etc., students of पद and क्रम। Here the rule applies because पदपाठ immmediately precedes क्रमपाठ।

मित—। 'द्वन्द्वः एकवचनम्' इति वर्त्तते। अध्ययनेन इति 'अध्ययनतः'। आद्या-दित्वात् तसिः॥ विप्रकृष्टं दूरम्। न विप्रकृष्टा 'अविप्रकृष्टा' प्रत्यासन्ना। 'आख्या' नाम। अनुक्रमेण अध्ययने कस्यचित् विषयस्य पूर्वः परश्च विषयस्तस्य प्रत्यासन्नः। विषयस्याख्यया यदा पाठकानामाख्या भवति तदा विषयप्रत्यासत्त्या पाठकाख्या अपि प्रत्यासन्ना इत्युच्यन्ते। तत्र हेतुरध्ययनम्। तदाह 'अध्ययनतः' इति॥ पदानां

विन्यासविशेषः क्रमः । प्रथमं पदपाठः ततः क्रमपाठः इति प्रसाकसिद्धिः ॥ पदमधीयते पदकाः "क्रमादिभ्यो वुन्" (१२०१—४।२।६१) इति वुन् । एवं क्रमकाः । पदकाश्च क्रमकाश्च इति विग्रहः ॥

९१० । जातिरप्राणिनाम् ॥ २।४।६ ॥

दो— । प्राणिवर्जजातिवाचिनां द्वन्द्वः एकवत् । धानाशष्कुलि । प्राणिनां तु—विट्शूद्राः । द्रव्यजातीयानामेव । नेह—रूपरसौ, गमनाकुञ्चने । जातिप्राधान्ये एवायमेकवद्भावः । द्रव्यविशेषविवक्षायां तु—बदरामलकानि ।

द्वन्द्व compounds of class-nouns, other than those of the animate, are in the singular only. Thus धाना etc. fried grain and sweets. But विट्शूद्राः—Vaisyas and Sudras—in the plural, in the case of the animate. This is of class-names of substances only, not otherwise. Thus रूप &c.—form and taste; गमन etc.—motion and flexure. Besides this is only when the class is prominent; if particular individuals only are meant, not the class, we have no restriction. Thus बदर etc.—the plums and the Amalakas—meaning not plums etc in general but a particular collection of them lying before the speaker.

मित— । 'जातिः' इति जातिवाचकानां शब्दानामित्यर्थः । षष्ठ्यर्थे प्रथमा । 'अप्राणिनाम्' इति जातिसम्बन्धे षष्ठी । 'अप्राणिनां' प्राणिभिन्नानां द्रव्याणां या 'जातिः' तस्या वाचकानां शब्दानां द्वन्द्वः एकवत् स्यात् ॥ वर्जनं वर्जः । प्राणिभिर्वर्जं प्राणिवर्जं ॥ धानाः भृष्टयवादिरूपाणि । घृतं रसानां कुलं समावेशः शष्कुली खाद्यद्रव्यविशेषः । पृथीदरादिः । मोदकादिः । धानाश्च शष्कुल्यश्च इति विग्रहे धानाशष्कुली इति प्रातिपदिकम् । द्वन्द्वैकत्वम् । "स नपुंसकम्" (८२१—२।४।१७) इति नपुंसकम् । "ह्रस्वो नपुंसके—" (२२८—१।२।४७) इति ह्रस्वः

धानाशष्कुलि ॥ प्राणिजातित्वात् विट्शूद्राः इत्यत्र समाहार एव इति न नियमः, तदितरेतरयोगमुदाहरति ॥ 'अप्राणी' इति पर्युदासात् 'द्रव्यजातीयानामेव'। गुणक्रिययोस्तु न नियमः। तेन तत्र अवयवभेदविवक्षया इतरेतरयोगोऽपि भवति। रूपरसौ इति गुणजाती। गमनाकुञ्चने इति क्रियाजाती ॥ बदरविशेषे दृष्टे यथा दृष्टाया बदरव्यक्तेर्बोधस्तथा तदाश्रयाया बदरजातेरपि। तयोरन्यतरस्यामनायष्टे सति इतरा प्रधानं भवति। यदा जातिः प्रधानम् तदैवायमेकवद्भावः। व्यक्तिप्राधान्ये तु इह मार्गे बदराणि च आमलकानि च इति 'बदरामलकानि' तिष्ठन्ति इत्यवयवभेदविवक्षया इतरेतरयोगोऽपि भवति ॥ इह प्रकरणे इतरेतरयोगो नास्ति इति बोधयितुं समाहार उदाह्रियते। पर्युदासपक्षेषु तु इतरेतरयोग एव इति नार्थः किन्तु सोऽप्यस्ति समाहारोऽपि इति ॥

८११। विशिष्टलिङ्गो नदीदेशोऽग्रामाः ॥ २।४।७ ॥

दी—। ग्रामवर्जनदीदेशवाचिनां भिन्नलिङ्गानां समाहारे (?) द्वन्द्व एकवत् स्यात्। उद्ध्यश्च इरावती च उद्ध्येरावति। गङ्गा च शोणश्च गङ्गाशोणम्। कुरवश्च कुरुक्षेत्रञ्च कुरुकुरुक्षेत्रम्। 'भिन्नलिङ्गानाम्' किम्? गङ्गायमुने। मद्रकेकयाः। 'अग्रामाः' किम्? जाम्बवं नगरम्, शालूकिनी ग्रामः—जाम्बवशालूकिन्यौ।

द्वन्द्व compounds of names in different genders, referring all to rivers or all to lands excepting villages, are in the singular only. Thus उद्ध्य is a river in the masculine and इरावती one in the feminine; hence उद्ध्येरावति in the neuter. Similarly गङ्गा etc., कुरु etc. Why भिन्न etc.? Witness इतरेतरयोग in गङ्गा etc. both गङ्गा and यमुना being feminine; also in मद्र etc both being masculine. Why अग्रामाः? Witness जाम्बव etc, where शालूकिनी being a ग्राम there is optionally इतरेतरयोग also.

मित—।'द्वन्द्वः एकवचनम्' इत्यस्ति। सूत्रे विशिष्टलिङ्गादयः शब्दा द्वन्द्वविशेषणानि। 'विशिष्टं' भिन्नं 'लिङ्गम्' यस्य 'विशिष्टलिङ्गः' द्वन्द्वः। ननु कथमेकस्मिन्नेव 'द्वन्द्वे' भिन्न-

लिङ्गता ? घटकपदेषु भिन्नलिङ्गता द्रष्टव्या। ततो लक्षणया द्वन्द्वोऽपि भिन्नलिङ्गः। एतेन 'विशिष्टलिङ्गः' इत्यस्य 'विशिष्टलिङ्गावयवकः' इत्यर्थः फलति। एवं 'नदी' इत्यस्य 'नद्यवयवकः' इति 'देशः' इत्यस्य 'देशावयवकः' इति 'ग्रामाः' इत्यस्य ग्रामावयवकाः' इति। तदयं सूत्रार्थः—नद्यवयवको द्वन्द्वः ग्रामभिन्नदेशावयवकश्च द्वन्द्व एकवचनं स्यात् यदि स विशिष्टलिङ्गावयवको भवेत्। 'एतदेवोच्यते 'ग्रामवर्जं' इत्यादिना। नदीग्रहणेन नदोऽपि गृह्यते ततो भिन्नलिङ्गता भवति। 'ग्रामवर्जं' इति 'प्राणिवर्ज्ज' इव व्युत्पाद्यम्; यद्वा यमुना साधनीयम्। ततः सुप्सुपा॥ इह उत्तरसूत्रे च 'समाहारे' इति प्रक्षिप्तमिवा भाति। समाहारे एव नियता एते द्वन्द्वा, इतरेतरयोगस्य प्रसक्ती नास्ति, तदर्थं 'समाहारे' इति वचनम्। अथवा स्पष्टार्थं समाहारे इति॥ नदी देश इति भिन्ने पदे। तेन नदी सर्वावयवकः देशसर्वावयवकः इत्यर्थः। अतएव गङ्गा च पाटलिपुत्रश्च गङ्गापाटलिपुत्रे इति इतरेतरयोगसम्भवः॥

८१२। क्षुद्रजन्तवः॥ २।४।८॥

दी—। एषां समाहारे (?) द्वन्द्व एकवत् स्यात्। यूकालिक्षम्। आ नकुलात् क्षुद्रजन्तवः।

द्वन्द्व compounds of names of minute creatures are in the singular only. Thus यूक &c., louce and vermin. Minute creatures are from the weasel down-wards.

मित—। 'द्वन्द्वः एकवचनम्' इत्यस्ति। 'क्षुद्रजन्तवः' इति षष्ठ्यर्थे प्रथमा। तदाह 'एषाम्' इति॥ इहापि 'समाहारे' इति प्रक्षिप्तम् स्पष्टार्थं वा॥ यूका केशकीटः लिक्षा अपि। यूकाश्च लिक्षाश्च इति बहुवचनेन विग्रहः (८१६, वा)॥

८१३। येषाञ्च विरोधः शाश्वतिकः॥ २।४।९॥

दी—। एषां प्राग्वत्। 'अहिनकुलम्' 'गोव्याघ्रम्' 'काकोलूकम्' इत्यादौ परत्वात् "विभाषा वृक्षमृग—" (८१६—२।४।१२) इति प्राप्तं चकारेण बाध्यते।

And of those whose feud is eternal the द्वन्द्व is in the singular.

Thus अहि etc., the snake and the weasel etc. In these instances the rule "विभाषा—" (916) alternates इतरेतरयोग with समाहार ; and that rule coming later would have superseded this one had not the च in the rule here prevented it and made समाहार compulsory.

मित—। 'येषाम्' इत्यनेन पूर्वसूत्रस्थ 'अन्तवः' इति परामृश्यते। 'विरोधः' वैरम्। शश्वदित्यव्ययं सदार्थे। तत्र भवः। "कालाट् ठञ्—" (१३८१—४।३।११) इति ठञ्। शश्वत् ठञ् इति स्थिते "इसुसुक्—" (१२२१—७।३।५१) इति ठस्य कादेशे प्राप्ते इकैव निपातनात् इकः। ततो भसंज्ञायाम् "अव्ययानां भमात्रे टिलोपः" (१३१४, वा—) इति टिलोपे प्राप्ते निपातनादेव सोऽपि न—शाश्वतिकः नित्यः। "शाश्वते प्रतिषेधः" इति भाष्योक्तेः शश्वच्छब्दस्य सन्धिवेलादिषु पाठं परिकल्प्य अणि शाश्वत इत्यपि॥ येषां जन्तूनां नित्यं वैरं तेषां द्वन्द्वः एकवत् इत्यर्थः॥ अहिनकुलम् इत्यादीन्युदाहरणानि। ननु "विभाषा—" (९१६) इति पशुद्वन्द्वे शकुनिद्वन्द्वे च विकल्पः उक्तः, तच्च परं सूत्रम्। तेन अहिनकुलादिषु वैकल्पिक एव समाहारः न नित्यः तत् कथमेतानीहोदाहरणानि ? उच्यते—इहसूत्रे चकारोऽवधारणार्थः। तेन 'एकवचनमेव' इत्यर्थः सम्पद्यते, ततश्च विकल्पस्य बाधो भवति। यद्वा—चकाराद्दतेऽपि "येषां विरोधः शाश्वतिकः" इत्येतावतैव समाहारस्य नित्यता प्रतीयते। कुतः ? विरोधो वैरमित्युच्यते। तच्च पशूनां वा शकुनीनां वा भवेत्। तेन विरोधे सर्वत्र "विभाषा—" (९१६) इत्यनेन विकल्पः प्रसज्यते, प्रकृतञ्च सूत्रं निर्विषयं भवति। अयुक्तं किल तत्। अतः सूत्रकरणसामर्थ्यादेव विरोधे नित्यः समाहारो भविष्यति। तेन अश्वश्च नकुलाश्च इत्यादि विग्रहे अहिनकुलादिषु अनेन नित्यः समाहारः, हंसाश्च कोकिलाश्च इति तु "विभाषा—" इत्यनेन हंसकोकिलम्—हंसकोकिलाः इति विकल्पः। चकारस्तु समुच्चये। जन्तवो ये क्षुद्राः येषाञ्च विरोधः शाश्वतिकः तेषां द्वन्द्व एकवचनम् इति समुच्चयः॥

९१४। शूद्राणामनिरवसितानाम्॥ २।४।१०॥

दी—। अबहिष्कृतानां शूद्राणां प्राग्वत्। तक्षायस्कारम्। पात्रात् बहिष्कृतानां तु चाण्डालमृतपाः।

द्वन्द्व compounds of Sudras, to whom the use of one's plate is not denied, hre in the singular only. Thus तक्षायस्कारम्—The carpenter and the smith. But witness चाण्डाल etc., the Chandala and the Dom, with इतरेतरयोग because these two are not allowed the use of plates.

मित—। 'निरवसिताः' पात्राद्बहिष्कृताः, येभ्यो धातवं भोजनपात्रं न दीयते तादृशाः। न तथा 'अनिरवसिताः'। 'तक्षा' सूत्रधरः। अयस्कारो लोहकारः। आभ्यां भुक्ते पात्रं भस्मादिना शुध्यति तस्मैतौ निरवसितौ। द्वन्द्वश्च समाहार एव॥ चण्डालेन मृतपेन वा भुक्ते पात्रं परित्यज्यते एव तदेतौ निरवसितौ द्वन्द्वश्च इतरेतरयोगोऽपि भवति॥

९१५। गवाश्वप्रभृतीनि च॥ २।४।११॥

टी—। यथोच्चारितानि साधूनि स्युः। गवाश्वम्। दासीदासम्। इत्यादि।

द्वन्द्व compounds classed with गवाश्व leading are restricted to समाहार only in the form they are listed. Thus गवाश्वम्; the alternative form गोऽश्व etc., are not necessarily to be in the समाहार। Hence गोश्वम्—गोश्वाः etc.

मित—। 'यथा' येन रूपेण 'उच्चारितानि' गणे निवेशितानि तेन रूपेणैव 'साधूनि स्युः' नान्यरूपेण 'गवाश्वम्' इति अवङ्कृतमेतं गणे दृश्यते। अवङि कृते समाहार एव इति न नियमः। तेन गोश्वम् इति समाहारे गोश्वा इति इतरेतरयोगे॥ अश्वाश्च गावश्च इति विग्रहे तु नायं नियमः। तत्र परत्वात् "विभाषा—" (९१६) इत्येव प्रवर्तते॥ दासी च दासश्च इति विग्रहे समाहारे दासी दास इति स्थिते सुप्योगात् पूर्वमेव "पुमान् स्त्रिया—" (९६९—१।२।६७) इत्येकशेषः प्राप्नोति। स च स्वाद्युत्पत्तिनिपातनाद्बाध्यते॥ दासश्च दासी च इति विग्रहे तु भेदे सूत्रं प्रवर्तते तेन एकशेषे दासौ इत्येव॥

८९६। विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ॥२।४।१२॥

दी—। वृक्षादीनां सप्तानां द्वन्द्वः अश्ववडवेत्यादि द्वन्द्वत्रयञ्च प्राग्वद्वा। वृक्षादौ विशेषाणामेव ग्रहणम्। प्लक्षन्यग्रोधम्—प्लक्षन्यग्रोधाः। रुरुपृषतम्—रुरुपृषताः। कुशकाशम्—कुशकाशाः। व्रीहियवम्—व्रीहियवाः। दधिघृतम्—दधिघृते। गोमहिषम्—गोमहिषाः। शुकबकम्—शुकबकाः। अश्ववडवम्—अश्ववडवौ। पूर्वापरम्—पूर्वापरे। अधरोत्तरम्—अधरोत्तरे।

द्वन्द्व compounds of different kinds of trees, deer, grass, grain, flavourings, animals, birds, as well as the compounds अश्ववडव, पूर्वापर, अधरोत्तर, are optionally in the singular. Compounds of different species are intended in वृक्ष etc. Thus प्लक्ष etc, where प्लक्षand न्यग्रोध are different species of the same genus—Fig. Similarly रुरु etc. दधि and घृत merely add flavour to the food and are therefore व्यञ्जन। पूर्व etc, means East and West; अधर etc. means high and low, up and down, etc. The reason for the rule will appear below.

मित—। 'द्वन्द्वः एकवचनम्' इत्यस्ति। 'प्राग्वत् वा' द्वन्द्वः एकवत् वा स्यात् इत्यर्थः॥ 'विशेषाणां' वृक्षादिविशेषाणाम्। एवञ्च वृक्षाणां द्वन्द्व इत्यस्य भिन्नजातीयानां वृक्षाणां मिथो द्वन्द्व इत्यर्थः। प्लक्ष इत्येका जातिः, न्यग्रोधश्च जात्यन्तरं वृक्षाणाम्। तयोर्द्वन्द्वे समाहारो वा॥ एवं मृगाणाम्। रुरवो मृगभेदाः तथा पृषता अपि॥ कुशाः तृणभेदाः तथा काशा अपि॥ व्रीहयो धान्यविशेषाः तथा यवा अपि॥ दधि व्यञ्जनविशेषः तथा घृतमपि॥ गावः पशुभेदाः तथा महिषा अपि॥ शुकाः शकुनिविशेषाः तथा बका अपि॥ न्यायसिद्धमेतत्। यो हि वृक्षसर्वावयवको द्वन्द्वः स एव वृक्षद्वन्द्वः। प्लक्षकोविदारौ इत्यादयो न तथा। एवं मृगद्वन्द्वादयोऽपि॥ अश्वाश्च वडवाश्च इति द्वन्द्वे एकवत् वा। इतरेतरयोगे तु "पूर्ववदश्व—" (८९९—२।४।२७) इति पुंस्त्वम्। पूर्वश्च

अपरश्च इति विग्रहेऽपि ॥ अधरं निम्नञ्च उत्तरम् ऊर्ध्वं च इति विग्रहेऽपि ॥ अधिक-मग्रे द्रष्टव्यम् ॥

टी—। "फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्" ( वार्त्तिक )। बदराणि च आमलकानि च बदरामलकम्। "जातिरप्राणिनाम्" ( ९१०—२।२।६ ) इत्येकवद्भावः। नेह—बदरामलके, रथिकाश्वारोहौ, प्लक्षन्यग्रोधौ, इत्यादि।

The singular is compulsory in a द्वन्द्व of fruits, army-divisions, trees, deer, birds, minute creatures, grain, grass, only when the constituents are in the plural. Thus बदर etc., in समाहार only, the exposition being बदराणि etc. in the plural. जातिरप्राणिनाम् ( 910 ) guides the singular here. If the constituents are not in the plural, witness बदरामलके etc.

मित—। प्रकृतिः उपादानं घटकपदमित्यर्थः। बह्व्यः बहुवचनान्ताः प्रकृतयः अस्मिन् बहुप्रकृतिः। अत्र प्रकरणे येषां नित्यमेकवद्भाव उक्तः तेषु फलानां सेनाङ्गानां मृगाणां शकुनीनां क्षुद्रजन्तूनां धान्यानां तृणानाञ्च बहुवचनेन विग्रहे कृते एव एकवत्ता भवति नान्यथा। तथा च "जातिरप्राणिनाम्" ( ९१० ) इत्यत्र बदराणि च इत्यादि विग्रहे बदरामलकम्। बदरञ्च आमलकञ्च इति तु बदरामलके ॥ "द्वन्द्वश्च प्राणि—" ( ९०६—२।४।२ ) इत्यत्र रथिकश्च इत्याद्येकवचनान्ते सति रथिकाश्वारोहौ ॥ अत्रापि सूत्रे दृष्टवर्थं प्लक्षश्च इत्यादेकवचनान्ते प्लक्षन्यग्रोधौ ॥ एवमन्यत्रापि ॥ अधिकमुपरिष्टात् द्रष्टव्यम् ॥

टी—। "विभाषा वृक्ष—" ( ९१६ ) इति सूत्रे ये अप्राणिनस्तेषां ग्रहणं "जातिरप्राणिनाम्" ( ९१०—२।४।६ ) इति नित्ये प्राप्ते विकल्पार्थम् ॥ पशुग्रहणं हस्त्यश्वादिषु सेनाङ्गत्वान्नित्ये प्राप्ते। मृगाणां मृगैरेव शकुनीनां तैरेव उभयत्र द्वन्द्वः, अन्यैस्तु सह इतरेतरयोगः एव, इति नियमार्थं मृगशकुनि ग्रहणम् ॥ एवं 'पूर्वापरम्' 'अधरोत्तरम्' इत्यपि ॥

अश्ववडवग्रहणं तु पक्षे नपुंसकत्वार्थम्। अन्यथा परत्वात् "पूर्ववदश्ववडवौ" (८१३—२।४।२७) इति स्यात्॥

In the rule "विभाषा वृक्ष—" (916) there are four—viz, वृक्ष, तृण, धान्य, व्यञ्जन—that are अप्राणिन्। द्वन्द्व compounds of these are by the rule "जातिरप्राणिनाम्—" (910) expected to be always in the singular. This rule makes the singular optional as in the examples above. The rule includes पशु; this is to make the singular optional in the case of हस्तिन्, अश्व &c., which, being सेनाङ्ग are expected to yield a compound always in the singular. मृग and शकुनि are included to introduce a restriction, viz., the general option allowed by the rule "चार्थे द्वन्द्वः" (901—2.2.29) is here available, in the case of मृग, only when one class of मृग is compounded with another, and in the case of शकुनि only when one class of शकुनि is compounded with another; but if a मृग or a शकुनि is compounded with something else the द्वन्द्व will imply इतरेतरयोग only. पूर्वापर and अधरोत्तर also imply a similar restriction, viz, the general option is not available unless the constituents are in this order. अश्ववडव is included to have the neuter as an alternative, for, otherwise, the rule "पूर्ववत्—" (813) being later than the rule "विभाषा—" (916), it will supersede this rule. The result will be the पशुद्वन्द्व with the optional singular, and the consequent neuter, will be barred and we shall always have the masculine.

मित—। ननु "चार्थे द्वन्द्वः" (९०१—२।२।२९) इत्येतावता सिद्धः समाहारविकल्पः तत् व्यर्थं इह "विभाषा—" (९१६) इत्येष वैकल्पिको विधिः इत्याशङ्क्य सूत्रं समर्थयते। सूत्रे अप्राणिनश्चत्वारः—वृक्ष, तृण, धान्य, व्यञ्जन। असति सूत्रे "जातिरप्रा—" (९१०) इत्येषां नित्यमेकवद्भावः स्यात्। 'प्लक्षन्यग्रोधाः' 'कुशकाशाः' 'व्रीहियवाः' 'दधिघृते' इत्यादि न स्यात्। एतदर्थं कर्तव्यं सूत्रम्॥ पशुग्रहणे असति सेनाङ्गत्वात्

'करितुरगाः' इति न स्यात्। एतदर्थमपि कर्त्तव्यो विधिः॥ किञ्च ह्यादौ विशेषाणामेव ग्रहणमितुाक्तम्। तेन मृगगृहणे मृगाणां मृगैरेव द्वन्द्वे समाहारविकल्पः, अन्यैः सह द्वन्द्वे इतरेतरयोग एव इति नियमः प्रसज्यते। ततश्च रुरुऋषभाः इत्येव भवति। मृगगृहणे तिरोहितावयवभेदे 'रुरुऋषभम्' इत्यनिष्टमपि प्राप्नोति॥ एतेन शकुनिगृहणमपि समर्थितम्॥ पूर्वापरशब्दे यथोक्तावितिे समाहारविकल्पः। अन्येन पूर्वशब्दस्य, अन्यस्य वा अपरशब्देन, समासे तु इतरेतरयोग एव इति भागेशः। एवमधरोत्तरशब्देऽपि। यदा—अपरं पश्चिमम्। तेन पूर्वमिति अपरमिति च विप्रतिषिद्धम्। एवम् अधरं निम्नम्। उत्तरम् ऊर्ध्वम् इत्यपि विप्रतिषिद्धम्। तत् एतयोः "विप्रतिषिद्धम्—" (९१७) इति नियमः प्रवर्त्तते। अद्रव्यवाचित्वे एव एतयोः समाहारविकल्पः नान्यथा इति। तथाविधो नियमो मास्तु, द्रव्यवाचित्वेऽपि समाहारविकल्पो भवतु इत्यर्थमेतयोर्ग्रहणम्॥ अश्ववडवग्रहणमपि सार्थकम्। असति अस्मिन् अश्वश्च वडवा च इति पशुद्वन्द्वे अनेन पक्षे एकवद्भावः, तदा च नपुंसकम् (८२१—२।४।१७) प्राप्नोति। "पूर्ववत्—" (८१३—२।४।२७) इत्यनेन तु नित्यं पुंस्त्वम्। परत्वात् पुंस्त्वमेव भवति, अश्ववडवम् इति न सिध्यति। तदप्यस्तु इत्येतदर्थमर्थवदश्ववडवग्रहणम्॥ एवं सार्थकं सर्वावयवे सुकृतं सूत्रम्॥

९१७। विप्रतिषिद्धञ्चानधिकरणवाचि ॥ २।४।१३ ॥

**वी—। विरुद्धार्थानामद्रव्यवाचिनां द्वन्द्व एकवद्वा स्यात्। शीतोष्णम्—शीतोष्णे॥ वैकल्पिकः समाहारद्वन्द्वः "चार्थे—" (९०१—२।२।२९) इति सूत्रेण प्राप्तः। स विरुद्धार्थानां यदि भवति तर्हि अद्रव्यवाचिनामेव, इति नियमार्थमिदम्। तेन द्रव्यवाचिनामितरेतरयोग एव। शीतोष्णे उदके स्तः॥ 'विप्रतिषिद्धम्' किम्? नन्दकपाञ्चजन्यौ। इह पाक्षिकः समाहारद्वन्द्वो भवत्येव॥**

द्वन्द्व compounds of words implying contrary character are optionally in the singular if the words do not refer to substances. Thus शीत &c., hot and cold. This rule attaches restriction to

the general option allowed by the rule "चार्थे—" (901), viz, when the constitutents are of a contrary character, the singular is not available unless the द्वन्द्व is of non-substantial things. Hence in the case of substances we have इतरेतरयोग only. Thus शीतोष्णौ, hot and cold, in reference to water. Why say विप्रतिषिद्ध ? Witness नन्दक &c., where the general option is available.

मित—। 'अधिकरणम्' द्रव्यम्। 'विप्रतिषिद्धम्' परस्परविरुद्धम्। विरोध इह एकत्रस्थितिविरहः न वैरम् अद्रव्येषु वैरस्य असम्भवात्। 'विभाषा' इत्यस्ति। षष्ठ्यर्थे प्रथमा। 'द्वन्द्व एकवचनम्' इत्यप्यस्ति। तदाह 'विरुद्धार्थानाम्' इत्यादि॥ शीतल-सुखलघ एकत्र न तिष्ठतः, तदस्ति विप्रतिषेधः॥ "चार्थे—" (९०१) इति समाहार-द्वन्द्वो वैकल्पिकः। परमनेन विरुद्धार्थानां वैकल्पिकः समाहारद्वन्द्वः अद्रव्यवाचिनामेव इति नियमः। न तु अद्रव्यवाचिनां वैकल्पिकः समाहारद्वन्द्वो विरुद्धार्थानामेव इति। एवमेव हि व्याख्यातं प्रामाणिकैः। नियमफलमाह—'द्रव्यवाचिनां' विरुद्धार्थानाम् 'इतरेतरयोग एव'। शीतोष्णे उदके इति शीतम् उष्णं द्रव्यवाचि। तेन शीतोष्णम् इति न भवति॥ नन्दको हरेः खड्गः पाञ्चजन्यस्तस्य शङ्खः। एकत्र स्थितावेतौ न विरुद्धौ। नन्दकपाञ्चजन्यौ—नन्दकपाञ्चजन्यम्।

## ९१८। न दधिपयआदीनि॥ २।४।१४॥

### द्वौ। एतानि नैकवत् स्युः। दधिपयसी। इध्मा-बर्हिषी। निपातनाद्दीर्घः। ऋक्सामे।

द्वन्द्व compounds listed with दधिपयस् leading, are not in the singular. Thus दधि etc., इध्म etc., fagots and Kusa grass. इध्म becomes इध्मा by निपातन in the list; ऋक् etc., वाक् etc.

मित—। 'द्वन्द्व एकवचनम्' इत्यस्ति। 'न' इति प्रतिषेधः। "दधिपय आदीनि शब्दरूपाणि न" इति स्थिते क इह प्रतिषेधविषयः? नियमः प्रतिषिध्यते उत एकवत्ता? नार्थं सर्वाणि द्विवचनान्येव पठ्यन्ते। तदिह 'एकवचनम्' इत्यस्य प्रतिषेधः प्रतीयते।

तदाह 'न एकवत् स्युः' इति ॥ एकवचनद्वन्द्वविषयकं शास्त्रं विधायकं नियामकं वा सर्वमिह प्रतिषिध्यते ॥ दधिपयसी इति व्यञ्जनद्वन्द्वः। तस्य "विभाषा—" ( ९१६ ) इति वैकल्पिकः एकवद्भावः प्रतिषिद्ध्यते ॥ इध्मं काष्ठम्। बर्हिः कुशः। इध्मश्च बर्हिश्च। "जातिरप्रा—" ( ९१०—२।४।६ ) इति नित्य एकवद्भावः प्रतिषिध्यते। ऋक् च साम च, वाक् च मनश्च, इति विग्रहे "अचतुर—" (९४५—५।४।७८) इत्यच् समासान्तः। "चार्थे द्वन्द्वः" (९०१—२।२।२९) इति वैकल्पिक एकवद्भावः प्रतिषिध्यते ॥

## ९१९। अधिकरणैतावत्त्वे च ॥ २।४।१५ ॥

**दी ।** **द्रव्यसंख्यावगमे एकवदेव इति नियमो न स्यात्। दश दन्तोष्ठाः।**

The restriction 'singular only' does not exist if the number of things denoted by the constituents of a द्वन्द्व is declared. Thus दन्तोष्ठाः in the sentence दश etc.—the lips and the teeth make up ten in all.

मित—। 'न' इत्यस्ति। 'अधिकरणं' द्रव्यं समासघटकपदस्य अर्थं इति शेषः। 'एतावत्त्वम्' इयत्ता संख्या इति यावत। समासघटकपदैर्यानि द्रव्याणि अभिधीयन्ते तेषां संख्या चेत प्रतीयते तदा एकवदेव इति नियमो न इत्यर्थः ॥ दन्ताश्च ओष्ठाश्च इति विग्रहे प्राण्यङ्गत्वात् एकवदेव इति नियमोऽस्ति। किं पुनः क्रियते नियमेन ? न हि समाहारो विधीयते। स तु विहितः "चार्थे—" ( ९०१—२।२।२९ ) इत्यनेनैव। इतरेतरयोगो निवर्त्यते इत्येतन्मात्रमिह नियमफलम्। अथ नियम एव निषिद्धः भूयोऽप्युपस्थापित इतरेतरयोगः ॥ समाहारस्तु न भवति। कुतः ? तिरोहितावयवभेदो हि सः। इह तु प्रत्यवयवं गणनया 'दश' इति बोधे उद्भूतः खलु अवयवभेदः। अतः इतरेतरयोगमात्रमुदाह्रियते 'दश दन्तोष्ठाः' इति न समाहारोऽपि ॥

## ९२०। विभाषा समीपे ॥ २।४।१६ ॥

**दी—। अधिकरणैतावत्त्वस्य सामीप्येन परिच्छेदे समाहार एव एकवद्भावरूपो नियमो वा स्यात्। उपदशं दन्तोष्ठम्—उपदशा दन्तोष्ठाः।**

The restriction 'singular only' operates optionally if only

the approximate number of things is declared. Thus उप etc.—the lips and the teeth are about ten in all.

मित—। 'समीपे' सामीप्ये इत्यर्थः। 'अधिकरणैतावत्त्वे' इत्यस्ति षष्ठ्या च विपरिणम्यते। तदाह 'अधिकरणैतावत्त्वस्य सामीप्येन परिच्छेदे' इति॥ यदा नियमः तदा समाहार एव 'उपदशं दन्तोष्ठम्'। समाहारस्य एकत्वात् दशानां समीपे ये सन्ति इति बहुव्रीहिरसङ्गतः। अव्ययीभावेन विशेषणम् दशानां समीपमिति॥ ननु गच्छन्ते अवयवाः, तत् कथं तिरोहितावयवभेदः समाहारः? 'विभाषा' इति वचनसामर्थ्यादेव सः। अन्यथा व्यर्थं स्याद्वचनम्॥ यदा तु नियमाभावस्तदा प्राग्वदितरेतरयोगोऽपि—उपदशा दन्तोष्ठाः बहुव्रीहिश्च विशेषणम्॥

## ८२१। आनङृतो द्वन्द्वे॥ ६।३।२५॥

दी—। विद्यायोनिसम्बन्धवाचिनामृदन्तानां द्वन्द्वे आनङ् स्यादुत्तरपदे परे। होतापोतारौ। होतृपोतृनेष्टोद्गातारः। मातापितरौ। "पुत्रेऽन्यतरस्याम्—" (८८०—३३२२) इत्यतो मण्डूकप्लुत्या 'पुत्रे' इत्यनुवृत्तेः पितापुत्रौ।

In द्वन्द्व compounds of ऋकारान्त words implying scholastic or family connection आनङ् is attached to the last but one constituent. आनङ् drops अ and ङ leaving आन् and then न् is elided by "नलोपः—" (236—8.2.7). Thus होता etc., the sacrificial priests होतृ and पोतृ; होतृ etc. These illustrate scholastic connection. Again माता etc., illustrates family connection. The word पुत्र comes over here at a bound like a frog from the rule "पुत्रे—" (980); hence पिता etc.—another illustration of family connection.

मित—। 'ऋतः' इति षष्ठी। तदन्तविधिः। ऋदन्तानामित्यर्थः "ऋतो विद्यायोनि—" (८८१—६।३।२३) इत्यतो 'विद्यायोनिसम्बन्धः' इत्यनुवर्तते षष्ठ्या च

विपरिणम्यते। तदाह '—वाचिनामृदन्तानाम्' इति ॥ 'उत्तरपदे' इत्यधिक्रियते। 'आनङ्' इति ङित्। नकारे अकारः उच्चारणार्थः। 'आन्' इति स्थितिः। एतच्च ङित्वात् पूर्वपदस्य अन्त्यवर्णस्य आदेशः॥ होता च पोता च इति विग्रहे 'होतान् पोतृ' इति स्थिते "न लोपः—" (२३६—८,२।७) इति नलोपे होतापोतारौ॥ पूर्वपदस्याऽयमानङ्। न पारिभाषिकस्य, किन्तु पूर्वं पदं पूर्वपदमिति यौगिकस्य। तेन होता च पोता च नेष्टा च उद्गाता च इति चतुर्णां द्वन्द्वे नेष्टृशब्दस्य आनङ् भवति॥ एतौ विद्यासम्बन्धे। योनिसम्बन्धे—'मातापितरौ'॥ ननु 'ऋतः' इत्यनुवर्त्तते तस्य षष्ठ्या विपरिणामेन सिद्ध्यति किमर्थं पुनरिह 'ऋतः' इत्युच्चार्यते? 'ऋतः' इति पुनर्ग्रहणं ऋदन्तसर्वावयवकद्वन्द्वार्थम्। तेन 'पितृपितामहौ' इत्यत्र नानङ्। कथं 'पितापुत्रौ'? "पुत्रे—" (९८०) इत्यतः 'पुत्रे' इति मण्डूक इव उत्प्लुत्य अनुवर्त्तते तेन ऋदन्ते पूर्वपदे पितान् पुत्र इति स्थिते न लोपः॥ भवतु, यदि सर्वत्र लुप्यते एव नकारः तदा 'आङ्' इत्येवास्तु आदेशः कथम् 'आनङ्' इति? तथा सति आकारमात्रस्थित्या "उरण् रपरः" (७०—१,१,५१) इत्यार् स्यात्। अतो नकारः क्रियते॥

## ९२२। देवताद्वन्द्वे च॥ ६।३।२६॥

दी—। इह उत्तरपदे परे आनङ्। मित्रावरुणौ।

When names of gods are compounded into a द्वन्द्व the penultimate constituent has its final letter replaced by आनङ्। Thus मित्र वरुण gives मित्रावरुणौ।

मित—। 'च' इति 'आनङ्' इत्यस्य अनुकर्षणार्थः। 'ऋतः' इति न सम्बध्यते। 'विद्यायोनिसम्बन्धेभ्यः' इति निवृत्तम्॥ देवतावाचिनां द्वन्द्वे उत्तरपदे परतः पूर्वस्य आनङ् स्यादादेशः इत्यर्थः। मित्र वरुण इति विग्रहे 'मित्रान् वरुण' इति स्थिते न-लोपे मित्रावरुणौ॥

दी—। "वायुशब्दप्रयोगे प्रतिषेधः" (वार्त्तिक)। अग्निवायू —वाय्वग्नी॥ पुनर्द्वन्द्वग्रहणं प्रसिद्धसाहचर्यस्य परिग्रहार्थम्। तेन 'ब्रह्मप्रजापती' इत्यादौ नानङ्। एतद्धि नैकहविर्भागित्वेन श्रुतं नापि लोके प्रसिद्धं साहचर्यम्।

आनङ् is not available if the word वायु is present in the compound. Thus अग्निवायू not अग्नावायू, वायुग्नी not वाय्वाग्नी। द्वन्द्व is there in the preceding rule, yet it is here repeated to imply that this rule applies only when the association of the two compounded is well known. Hence there is no आनङ् in ब्रह्मप्रजापती। The Vedas do not refer to their association in same sacrificial offering, nor is their association well known in the world.

मित—। 'प्रतिषेधः' आनङादेशस्य इति शेषः। वायुशब्दस्य प्रयोगे इत्युच्यते न तु वायुशब्दे उत्तरपदे। तेन द्विधाप्रयोगसम्भवे उत्तरपदे अग्निवायू, पूर्वपदे वायुग्नी॥ पूर्वसूत्रे 'द्वन्द्वे' इत्यस्ति तदाह 'पुनर्द्वन्द्वग्रहणम्' इति। यत् युगलं सहचारि तद्धि द्वन्द्वमित्युच्यते। पुनर्द्वन्द्वग्रहणं सहचारित्वद्योतनार्थम्। साहचर्यञ्च यदा प्रसिद्धं तदैवानङ् भवति नान्यथा। अतएव 'ब्रह्मप्रजापती' इति यत् दधिपय आदिषु (९१८) पठ्यते तत्र आनङ् न दृश्यते। अप्रसिद्धमनयोरेतत् साहचर्यम्। 'एतद्धि साहचर्यम् एकहविर्भागित्वेन न श्रुतं' श्रुतौ वेदे गीतं 'नापि लोके प्रसिद्धम्'॥

९२३। ईदग्नेः सोमवरुणयोः॥ ६।३।२७॥

टी—। देवताद्वन्द्वे इत्येव।

When सोम or वरुण follows as an उत्तरपद in a द्वन्द्व of names of gods, अग्नि changes its last letter into ई।

मित—। देवताद्वन्द्वे सोमवरुणयोः उत्तरपदयोः अग्निशब्दस्य ईकार अन्तादेशः स्यात्। आनङोऽपवादः॥ अग्निश्च सोमश्च इति विग्रहे अग्नीषोमौ इति प्राप्ते—

९२४। अग्नेः स्तुत्स्तोमसोमाः॥ ८।३।८२॥

टी—। अग्नेः परेषामेषां सस्य षः स्यात् समासे। अग्निष्टुत्। अग्निष्टोमः। अग्नीषोमौ। अग्नीवरुणौ।

स्तुत, स्तोम and सोम coming after अग्नि in a compound change their स into ष। Thus अग्निष्टुत्, a sacrifice; अग्निष्टोम् the first stage

of Soma sacrifice ; अग्नीषोम fire and moon. अग्नीवरुण illustrates ईत्व when वरुण follows.

मित— । 'अग्नेः' इति पञ्चमी । '—सोमाः' इति षष्ठ्यर्थे प्रथमा । 'सस्य' इत्यपेक्षया षष्ठी । 'समासे' इत्यनुवर्तते ॥ अनेन षत्वे अग्नीषोमौ । "सात्पदाद्योः" (१०२३—८।३।१११) इति षत्वनिषेधस्यापवादः । एवम् अग्निः स्तुयते अत्र इति क्विपि उत्तरपदसमासे अग्निष्टुत् । षष्ठीसमासे अग्निष्टोमः । अग्निवरुणौ इति वरुण शब्दस्योदाहरणम् ॥ "अग्ने र्दीर्घात् सोमस्येष्यते" इत्युक्तेः ईदन्तादेवाग्निशब्दात् सोमस्य षत्वम् । ईत्व देवताद्वन्द्वे एव । तेन अदेवताद्वन्द्वे न षः—अग्निसोमौ माणवकौ ।

९२५ । इद्वृद्धौ ॥ ६।३।२८ ॥

दी— । वृद्धिमत्युत्तरपदे अग्नेरिदादेशः स्याद्देवताद्वन्द्वे अग्नामरुतौ देवते अस्य आग्निमारुतं कर्म । अग्नीवरुणौ देवते अस्य आग्निवारुणम् । "देवताद्वन्द्वे च—" (१२३८—७।३।२१) इत्युभयपदवृद्धिः । अलौकिकवाक्ये आनङमीत्वञ्च बाधित्वा इत् । 'वृद्धौ' किम् ? आग्नेन्द्रः । "नेन्द्रस्य परस्य" (१२४०—७।३।२२) इत्युत्तरपदवृद्धिप्रतिषेधः ।

If in a देवताद्वन्द्व the उत्तरपद has to undergo वृद्धि then इ is the आदेश of the final of अग्नि in place of आनङ् or ईत् । Thus आग्नि मारुतम् etc.,—a rite having fire and wind for its presiding deities. Similarly आग्निवारुणम्—having Fire and Varuna for its presiding deities. In these, both constituents of the compound suffer वृद्धि by the rule "देवता—" (1239—7.3.19). The exposition for वृद्धि is one that exists in books only and is not in common use ; and in it आनङ् and ईत् are barred by इ । Why say वृद्धौ ? Witness आग्नेन्द्र which has the usual आनङ् because the वृद्धि in the उत्तरपद is prohibited by 'नेन्द्रस्य—' (1240—7.3.22).

मित—।—'अग्नेः' इत्यस्य । 'उत्तरपदे' इत्यधिकारः । वृद्धौ उत्तरपदे अग्नेः

इत् इत्यन्वयः। तत वृद्धिमात्रस्य उत्तरपदत्वासम्भवात् वृद्धिशब्देन वृद्धिमदुच्यते। तदाह 'वृद्धिमति' इत्यादि॥ आनङः ईतश्च अपवादः॥ अथ कथमिह वृद्धिः? तद्धितेन। तद्धितश्च प्रातिपदिकादुत्पद्यते। द्वन्द्वे प्रातिपदिकं ततस्तद्धितः। तत्—अग्निश्च मरुच्च इति अग्नामरुतौ। तौ देवते अस्य इत्यर्थे "सास्य देवता—"(१२२६—४।२।२४) इत्यण्। ततः अग्नामरुत अण् इति स्थिते "देवता—"(१२३९७।३।१।८) इत्युभयपदवृद्धौ आग्नामारुतमिति भवति। एवमाग्निवारुणमिति च। उभयत्र भूत एव आदेश इति इद्वादेशस्य प्रसङ्गो नास्ति॥ अत्र समाधत्ते 'अलौकिकवाक्ये' इत्यादि। अयमाशयः— लौकिके वाक्ये सङ्कटमेतत्। तदास्तां लौकिकम्, अलौकिकेन तद्धितो भवतु। अग्नि मरुत् औ अण् इति स्थिते सुब्लोपे अग्नि मरुत् अण् इति जाते मरुच्छब्दे भाविनीं वृद्धिमाश्रित्य आनङमीत्वञ्च बाधित्वा इत् प्रवर्त्तते। ततः सिद्धमाग्निमारुतमिति॥ एवमाग्निवारुणमित्यपि॥ कष्टोऽयं पन्थाः। तदित्थं व्याख्यायताम्—'वृद्धौ' इति वृद्धौ कर्त्तव्यायामित्यर्थः। 'उत्तरपदे' इत्यस्ति। तद्धितहेतुका वृद्धिः। तद्धिते कर्त्तव्ये उत्तरपदे वृद्धौ च कर्त्तव्यायाम् अर्थः इत् देवताद्वन्द्वे। अग्निश्च मरुच्च देवते अस्य इत्यर्थे यदि तद्धितः कर्त्तव्यो भवति उत्तरपदे वृद्धिश्च कर्त्तव्या। तदिह आनङ् न भविष्यति। इत्वे आग्निमारुतम्॥ एवमाग्निवारुणम्॥ अग्निश्च इन्द्रश्च देवते अस्य इत्यर्थे तद्धिते कर्त्तव्ये उत्तरपदे वृद्धिर्न कर्त्तव्या। तेन इत् न, आनङि च आग्नेन्द्रः॥

दी—। "विष्णौ न" (वार्त्तिक)। आग्नावैष्णवम्।

There is no इत् if विष्णु is the उत्तरपद। Thus आग्नावैष्णवम्— Having fire and Vishnu for the presiding deities.

मित—। विष्णौ उत्तरपदे वृद्धौ कर्त्तव्यायाम् अग्नेः इत् न। अग्निश्च विष्णुश्च देवते अस्य इति तद्धिते अपि कर्त्तव्ये वृद्धिश्च कर्त्तव्या। तेन आनङं बाधित्वा प्रवर्त्तमान इत् वार्त्तिकेन निषिध्यते। अत आनङ् एव। अग्निश्च विष्णुश्च अग्नाविष्णू। तौ देवते अस्य इत्यणि उभयपदवृद्धौ आग्नावैष्णवम्॥

९२६। दिवो द्यावा॥ ६।३।२९॥

दी—। देवताद्वन्द्वे उत्तरपदे। द्यावाभूमी। द्यावाक्षमे।

In a देवताद्वन्द्व, when an उत्तरपद follows, दिव् becomes द्यावा। Thus द्यावा &c.—Heaven and Earth.

मित—। दिव्शब्दस्य 'द्यावा' इत्यादेशः स्यात् उत्तरपदे परतः देवताद्वन्द्वे ॥ द्यौश्च भूमिश्च द्यावाभूमी। एवं द्यौश्च क्षमा च द्यावाक्षमे ॥

८२७। दिवसश्च पृथिव्याम् ॥ ६।३।३० ॥

दी—। दिवः इत्येव। चात् द्यावा। आदेशे अकारोच्चारणं सकारस्य रुत्वं माभूदित्येतदर्थम्। द्यौश्च पृथिवी च दिवस्पृथिव्यौ —द्यावापृथिव्यौ। छन्दसि दृष्टानुविधिः—"द्यावाचिदस्मै पृथिवी"। "दिवस्पृथिव्योररतिः" इत्यत्र पदकारा विसर्गं पठन्ति।

When पृथिवी follows as an उत्तरपद in a द्वन्द्व of names of gods, दिव् changes optionally into दिवस् or द्यावा। The अ final in दिवस is to show that स is heard and does not become र and thence विसर्ग; hence the आदेश is really दिवस्। Thus दिवस्पृथिव्यौ &c.—Heaven and Earth. In the Vedas the injunctions have to follow what is seen in usage. Thus द्यावा etc.—where the आदेश is seen though पृथिवी is separated from दिव् by चिदस्मै। The Padakaras read a विसर्ग in दिवस्पृथिव्योः etc.

मित—। 'दिवः' दिवस आदेशः 'इत्येव'। चकारः समुच्चये 'द्यावा' इत्यनेन समुच्चयः। तदाह 'चात् द्यावा'॥ देवताद्वन्द्वे पृथिवीशब्दे उत्तरपदे दिव्शब्दस्य दिवस् इति च द्यावा इति च आदेशौ भवत इत्यर्थः॥ सकारात् परः अकारः किमर्थम्? सकारो यथा श्रूयते रुत्वादिको विकारस्तस्य माभूदिति। तेन दिवस्पृथिव्यौ इत्यत्र सकारः प्रकृत्या तिष्ठति॥ वेदेषु तु यथादृष्टं विषयः। तथाहि "द्यावा चिदस्मै—" इत्यत्र व्यवहितेऽपि पृथिवीशब्दे द्यावादेशो दृश्यते। किञ्च "दिवस्पृथिव्याः—" इत्यत्र पदपाठेषु विसर्गत्वेन विकृतोऽपि सकारो दृश्यते दिवःपृथिव्योरिति॥

८२८। उषासोषसः ॥ ६।३।३१ ॥

दो—। उषस्शब्दस्य उषासादेशो देवताद्वन्द्वे। उषासासूर्य्यम्।

In a द्वन्द्व of names of gods उषस् becomes उषासा when an उत्तरपद follows. Thus उषासासूर्य्यम्—the dawn and the sun.

मित—। देवताद्वन्द्वे इत्यतः परम् 'उत्तरपदे' इति योजनीयम्॥ उषाश्च सूर्य्यश्च इति वैकल्पिकः समाहारः॥

८२९। मातरपितरावुदीचाम्॥ ६।३।३२॥

दो—। मातरपितरौ। 'उदीचाम्' किम्? मातापितरौ।

According to Professors in the North, मातृ leading in a द्वन्द्व of मातृ and पितृ, becomes मातर yielding मातरपितरौ। Why say उदीचाम्? Witness मातापितरौ which others derive with आनङ्।

मित—। माता च पिता च इति द्वन्द्वे उदीचामाचार्य्याणां मतेन पूर्वपदस्य अरङ् इत्ययामादेशो भवति मातरपितरौ इति च रूपम्॥ अन्येषां तु आनङि माता-पितरौ॥ ननु इह द्वन्द्वे कर्त्तव्ये सुबुत्पत्तेः प्रागेव "पिता मात्रा" (८२६—१।२।७० इत्येकशेषे 'पितरौ' इति रूपमापद्यते तत् कथं मातापितरौ इति? सत्यम्। परमय-मेकशेषो वैकल्पिकः। तत् तेन सूत्रे रूपं सिध्यति। एवमिह चत्वारः पक्षाः—अकृते एव द्वन्द्वे सुबुत्पत्तेः प्रागपि वैकल्पिके एकशेषे 'पितरौ' इत्येकः। एकशेषेण मुक्ते द्वन्द्वे उदीचां 'मातरपितरौ' इति द्वितीयः, अन्येषां 'मातापितरौ' इति तृतीयः। महाविभाषया वाक्ये 'माता च पिता च' इति चतुर्थः॥

८३०। द्वन्द्वाच्चुदषहान्तात् समाहारे॥ ५।४।१०६॥

दो—। चवर्गान्तात् दषहान्ताच्च द्वन्द्वात् टच् स्यात् समाहारे। वाक् च त्वक् च वाक्त्वचम्। त्वक्स्रजम्। शमीदृषदम्। वाक्त्विषम्। छत्रोपानहम्॥ 'समाहारे' किम्? प्रावृट्शरदौ॥

टच् is added as a समासान्त after द्वन्द्व compounds in the sense of समाहार and ending in चवर्ग, द, ष and ह। Thus वाक् च त्वक् च

gives वाच्त्वचटच्=वाक्त्वचम्। Similarly त्वक् स्रज् टच् yields त्वक्स्रजम्। शमीदृषद् टच् शमीदृषदम्। वाक् त्विष् टच् वाक्त्विषम्। छत्रोपानह् टच् छत्रोपानहम्। Why say समाहारे? Witness प्रावृट् &c., without टच् in an इतरेतरयोग though ending in ह।

मित—। वाक् च त्वक् च इति वैकल्पिके समाहारे वाक् त्वच् टच् इति स्थिते वाक्त्वचम्। एवं त्वक् च स्रक् च इति त्वक् स्रज् टच्—त्वक्स्रजम्। शमी च दृषच्च शमीदृषदम्। वाक् च त्विट् च वाक्त्विषम्। छत्रं च उपानच्च इति छत्रोपानहम्। "जातिरप्राणिनाम्—" (९१०—२।४।६) इति एकवद्भावः॥ क्वचित् द्वन्द्वे कर्त्तव्ये, प्रकृते च तस्मिन्, सुबुत्पत्तेः प्रागपि, एकशेषो भवति इति प्रसङ्गात् तमेव एकशेषं प्रपञ्चयति—

**टी—। अथैकशेषः। "सरूपाणाम्—" (१८८—१।२।६४)। रामौ। रामाः।**

We now proceed with एकशेष। The rule on this point is "सरूपाणाम्—" (188). Thus रामौ—two Ramas; रामाः—more than two Ramas.

मित—। 'अथ एकशेषः' प्रारभ्यते। इह रामौ इत्युक्ते 'रामश्च रामश्च' इत्यर्थो गम्यते। एवं 'रामाः' इत्यत्र 'रामश्च रामश्च रामश्च' इति। एतयोरर्थयोः पुनश्चार्थो वर्त्तते। सुबन्तश्च सुबन्तेन सहितो दृश्यते। तेन "चार्थे द्वन्द्वः (९०१—२।२।२९) इति द्वन्द्वः प्राप्नोति, "सरूपाणाम्—" इत्येकशेषश्च। परत्वात् एकशेषं बाधित्वा द्वन्द्व एव प्रवर्त्तते। एवं सर्वत्र सुबन्तेषु सरूपेषु। तत् को नाम एकशेषस्य विषयः? उच्यते—उत्पन्ने सुपि द्वन्द्वः, प्राक् सुबुत्पत्तेरेकशेषः इति विषयविभागः॥ रामश्च रामश्च इत्यत्र सुबुत्पत्तेः प्राक् राम राम इति स्थिते एकशेषे 'राम' इति शिष्यते। अर्थस्तु स एव, तेन इह 'राम' इति द्व्यर्थो गम्यते। ततो द्विवचने 'रामौ'॥ रामश्च रामश्च रामश्च इत्यत्र सुबुत्पत्तेः प्राक् 'राम राम राम' इति स्थिते 'राम' इति शिष्यते। स च सम्प्रति त्रीनर्थान् गमयति। ततः बहुवचने 'रामाः'॥

दो—। "विरूपाणामपि समानार्थानाम्" (वार्त्तिक)। वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ—कुटिलदण्डौ।

Even of words that spell differently, one alone is retained if the meaning be the same. Thus either वक्रदण्डौ or कुटिलदण्डौ may be used for "वक्रदण्ड and कुटिलदण्ड"।

मित—। अर्थे तुल्ये, रूपभेदेऽपि शब्दानामेकः शिष्यते इतरे लुप्यन्ते इति वार्त्तिकार्थः॥ वक्रदण्डश्च इत्यादि सुबुत्पत्तेः परं द्वन्द्ववाक्यम्। अकृते सुपि तु वक्रदण्ड कुटिलदण्ड इति स्थिते अन्यतरस्य लोपे 'वक्रदण्ड' इति 'कुटिलदण्ड' इति वा शेषः। तत् द्वे रूपे वक्रदण्डौ—कुटिलदण्डौ॥

८३१। वृद्धो यूना तल्लक्षणश्चेदेव विशेषः॥ १।२।६५॥

दो—। यूना सहोक्तो गोत्रं शिष्यते गोत्रयुवप्रत्ययमात्रकृतं चेत् तयोः कृत्स्नं वैरूप्यं स्यात्। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। 'वृद्धः' किम्? गर्गगार्ग्यायणौ। 'यूना' किम्? गार्ग्यगर्गौ। "तल्लक्षणः' किम्? भागवित्तिभागवित्तिकौ। 'कृत्स्नम्' किम्? गार्ग्यवात्स्यायनौ।

When a word technically known as वृद्ध is spoken of along with one known as युवन्, the वृद्ध is retained if the only difference between them is that of the affixes that make one a वृद्ध and the other a युवन्। Thus when गार्ग्य, which is a वृद्ध, is spoken with गार्ग्यायण which is a युवन्, the वृद्ध, i. e., गार्ग्य, is retained and the युवन्, i. e., गार्ग्यायण, is dropped, the result is गार्ग्यौ। Why say वृद्ध? Witness गर्गगार्ग्यायणौ which speaks of गर्ग and गार्ग्यायण; but, though the latter is a युवन्, the former not being a वृद्ध we cannot have गर्ग्यौ। Why say यूना? Witness गार्ग्यगर्गौ in which गार्ग्य and गर्ग are mentioned together; but, though former is a वृद्ध, the latter is not a युवन्, consequently we cannot have गार्ग्यौ। Why say तल्लक्षणः?

Witness भागवित्तिभागवित्तिकौ where, though भागवित्ति is a वृद्ध and भागवित्तिक a युवन्, yet that much is not the only difference between the words; the ठक् in भागवित्तिक, besides being a युवप्रत्यय, is derogatory also. Hence owing to this additional difference in the affixes we do not get भागवित्ती। Why say तल्लक्षण? Witness गार्ग्यवात्स्यायनौ where though गार्ग्य is a वृद्ध and वात्स्यायन is a युवन्, and the affixes again imply nothing beyond वृद्धत्व and युवत्व yet we do not get गार्ग्यौ because the bases also differ, in the one it is गर्ग and in the other वत्स।

मित—॥ 'वृद्धः' इति गोत्रम्। तत्र "अपत्यं पौत्रप्रभृति—" (१०८९—४।१।१६२) इति वंशकर्तुर्मूलपुरुषस्य पौत्रादारभ्य अपत्यानां सर्वेषां संज्ञा॥ "जीवति तु वंश्ये—" (१०९०—४।१।१६३) इति प्रपौत्रादारभ्य गोत्रस्यैव पित्रादौ कस्मिंश्चित् पूर्वपुरुषे जीवति 'युवा' इति संज्ञा॥ तौ वृद्धयुवप्रत्ययौ लक्षणमस्य 'तल्लक्षणः' वत् क्षत इत्यर्थः॥ 'विशेषः' वैरूप्यम्, शब्दगतमर्थगतञ्च॥ गर्ग इति मूलपुरुषः। तस्य गोत्रापत्यं गार्ग्यः। "गर्गादिभ्यो यञ्—" (११०७—४।१।१०५) इति यञ्। गार्ग्यस्य अपत्यं युवा गार्ग्यायणः। "यञिञोश्च—" (११०२—४।१।१०१) इति फक्। गार्ग्यश्च गार्ग्यायणश्च इति द्वन्द्वे विवक्षिते सुबुत्पत्तेः प्रागेव 'गार्ग्य गार्ग्यायण' इति स्थिते वृद्धस्य एकशेषः—गार्ग्यौ॥ गर्गश्च गार्ग्यायणश्च इति द्वन्द्वे कर्तव्ये प्राक् सुबुत्पत्तेः 'गर्ग गार्ग्यायण' इति स्थिते गर्गशब्दस्य अवृद्धत्वात् नैकशेषः। तेन पृथक् सुबुत्पत्तौ 'गर्गश्च गार्ग्यायणश्च' इति भवति द्वन्द्वश्च प्रवर्तते—गर्गगार्ग्यायणौ॥ गार्ग्यश्च गर्गश्च इति विवक्षिते गर्गशब्दस्य युवत्वाभावात् नैकशेषः। तेन द्वन्द्वे गार्ग्यगर्गौ॥ भगवित्त इति मूलपुरुषः। तस्य गोत्रापत्यं भागवित्तिः। "अत इञ्" (१०८५—४।१।९५) इति इञ्। भागवित्तेरपत्यं युवा कुत्सितः भागवित्तिकः। "वृद्धाट्ठक् सौवीरेषु—" (११७२—४।१।१४८) इति ठक्। अनयोस्तु प्रत्ययकृतं शब्दगतं वैरूप्यमस्त्येव, परं भागवित्तिकशब्दे कुत्सा अपि अर्थगतं वैरूप्यं गम्यते। तेन नैकशेषः। सुबुत्पत्तिः, द्वन्द्वश्च॥ वत्स इति मूलपुरुषः। तस्य गोत्रापत्यं वात्स्यः। गर्गादि यञ्। वात्स्यस्य अपत्यं युवा वात्स्यायनः। यञः फक्, गार्ग्यवात्स्यायनशब्दयोः मूलपुरुषौ भिद्येते। तत्

वृद्धयोर्विशेषः 'तल्लक्षण एव' इति न, मूलपुरुषकृतोऽपि भवति। तेन नैकशेषः॥ 'एव' इत्यवधारणे कृतम्' विशेषं लक्षयति। एकशेषः सरूपाणामुक्तः विरूपाणां न प्राप्नोति इति वचनम्॥

८३२। स्त्री पुंवच्च॥ १।२।६६॥

दी—। यूना सहोक्तौ वृद्धा स्त्री शिष्यते तदर्थश्च पुंवत्। गार्गी च गार्ग्यायणौ च गर्गाः। 'अस्त्रियाम्' इत्यनुवर्त्तमाने "यञञोश्च" (११०८—२।४।६४) इति लुक्। दाक्षी च दाक्षायणश्च दाक्षी।

When the वृद्ध is a female, it alone is retained if spoken along with a युवन्, under the same conditions as above, and the feminine character is replaced by the masculine. Thus we have गर्गाः meaning गार्गी and two गार्ग्यायणs. Here गार्ग्यः was expected in the plural of गार्गी। But, as this is to assume male character, we should have गार्ग्याः in the plural of गार्ग्य। Now comes in the rule "यञञोश्च" (1108), which applies to male characters owing to the अनुवृत्ति of अस्त्रियाम्; and then यञ् disappears leaving गर्गाः। Similarly दाक्षौ in the sense दाक्षी and दाक्षायण। In this दाक्षी is retained, and in the dual it becomes दाक्ष्यौ which is the form expected. But पुंवद्भाव gives दाक्षि plus the dual termination, i.e दाक्षी।

मित—। "वृद्धो यूना—" (८३१) इति सर्वमनुवर्त्तते। वृद्धशब्दो लिङ्गविपरिणामेन 'स्त्री' इत्यस्य विशेषणं भवति। तदाह 'वृद्धा स्त्री' गोत्रप्रत्ययान्तः स्त्रीवाचकः शब्दः इत्यर्थः॥ 'तदर्थः' इति तस्याः स्त्रिया अर्थः। 'पुंवत्' भवति स्त्री च पुमानिव गृह्यते इति भावः॥ गर्गस्य गोत्रापत्यं स्त्री इत्यर्थे यञि कृते, "यञश्च" (४७१—४।१।१६) इति ङीपि 'गार्ग्य ई' इति स्थिते "हलस्तद्धितस्य" (४७२—६।४।१५०) इति यलोपे गार्गी। गार्गी च वृद्धा गार्ग्यायणौ च युवानौ इति द्वन्द्वे कर्त्तव्ये, प्रकृते

एव तस्मिन्, प्राक् च सुबुत्पत्तेः 'गार्गी गार्ग्यायणश्च' इति स्थिते स्त्रियाः एकशेषः। तेन बहुषु वर्त्तमाने गार्गीशब्दे प्राप्तः पुंवद्भावः। ततो बहुषु अस्त्रियां गार्ग्यशब्दे जाते "यञञोश्च" इति यञो लुक्—गर्गाः॥ दक्षस्य गोत्रापत्यं स्त्री इत्यर्थे इञि दाक्षि इति स्थिते "इतो मनुष्यजातेः" (५२०—४।१।६५) इति ङीषि दाक्षी। दाक्षी च इञा दाक्षायणश्च युवा इति द्वन्द्वे कर्त्तव्ये प्राग्वदेकशेषे दाक्षी इति स्त्रियां द्वयोर्वर्त्तमानः शब्दः। तस्य पुंवत्त्वे दाक्षि इति द्वयोर्वर्त्तमानः शब्दः, तस्य च द्विवचने रूपं दाक्षी॥ अथ किमत्र विधीयते पुंवत्त्वमात्रम् उत् एकशेषोऽपि? एकशेषोऽपि। स्त्रीत्वमिह अधिको विशेष इति पूर्वेण न सिध्यति॥ इहापि विरूपाणामप्राप्त एकशेषो विहितः॥

## ८३३। पुमान् स्त्रिया॥ १।२।६७॥

**दी—। स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेत्। हंसी च हंसश्च हंसौ।**

The male alone is retained when spoken along with the female provided the difference consists only in one of them having the female affix. Thus हंसौ—the male and the female duck.

मित—। स्त्रीप्रत्ययमात्रकृते वैरूप्येऽपि यथा एकशेषः स्यात् तदर्थं वचनम्॥ सुबुत्पत्तेः प्रागेव एकशेषे हंसौ॥ हंसश्च वरटा च इति नैकशेषः। इह स्त्रीप्रत्ययकृतविशेषं विना प्रकृतिगतविशेषोऽप्यस्ति इति॥

## ८३४। भ्रातृपुत्रौ स्वसृदुहितृभ्याम्॥ १।२।६८॥

**दी—। भ्राता च स्वसा च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ।**

भ्रातृ and पुत्र are retained when spoken along with स्वसृ and दुहितृ respectively. Thus भ्रातरौ and पुत्रौ।

मित—। इहापि वैरूप्यादप्राप्ते विधिः॥ 'भ्रातृ' 'स्वसृ' इतिशब्दस्वरूपग्रहणात् 'तल्लक्षणः—' इत्यादि नेह सम्बध्यते॥

८३५। नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ॥ १।२।६९ ॥

दी—। अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत् स्यात्, तल्लक्षण एव विशेषश्चेत्। शुक्लः पटः, शुक्ला शाटी, शुक्लं वस्त्रम्—तदिदं शुक्लम्, तानीमानि शुक्लानि।

The neuter alone is retained when spoken of along with the non-neuter and the neuter is then optionally in the singular. Thus शुक्लः शुक्ला शुक्लम् give शुक्लम् or शुक्लानि।

मित—। इह द्वे वाक्ये। 'नपुंसकमनपुंसकेन' इत्येकम् 'एकवच्चास्यान्यतरस्याम्' इत्यपरम्। आद्ये अनुवृत्त्या सह 'अनपुंसकेन सहोक्तौ नपुंसकं शिष्यते तल्लक्षणश्चेदेव विशेषः' इत्यन्वयः। द्वितीये 'अस्य नपुंसकस्य च अन्यतरस्यामेकवत्' इति। एवं वाक्यभेदात् 'अन्यतरस्याम्' इति आद्ये न सम्बध्यते, एकवत्ता एवास्य विषयः, सैवेह विकल्प्यते ॥ शुक्लशब्दस्य लिङ्गभेदे हेतुप्रदर्शनार्थं 'पटं शाटी वस्त्रम्' इति विशेष्यमादीयते, तच्च न वृत्तौ घटकम् ॥ 'तल्लक्षणः' इति नपुंसकानपुंसकलक्षण इत्यर्थः। तेन 'पटः शाटी शुक्लम्' इति तु नैकशेषः नपुंसकानपुंसकव्यतिरिक्तप्रकृतिकृतविशेषस्यापि सत्त्वात् ॥ शुभशब्दः शुभं ब्रह्म इति एकत्र शुभो धवलः अन्यत्र शुभम् अनिन्द्यम् इति अर्थेऽपि विशेषः तेन नैकशेषः ॥

८३६। पिता मात्रा ॥ १।२।७० ॥

दी—। मात्रा सहोक्तौ पिता वा शिष्यते। माता च पिता च पितरौ, मातापितरौ वा।

पितृ alone is retained optionally when spoken of with मातृ। Thus पितरौ by एकशेष; मातापितरौ without एकशेष and by द्वन्द्व as usual.

मित—। वैकल्प्यादप्राप्ते विधिः ॥ 'अन्यतरस्याम्' इत्यनुवर्त्तते। माता च

पिता च इति विग्रहे द्वन्द्वे कर्तव्ये अनेन एव शिष्यते, मातृ च सुप्तपत्ने रेकशेषे पितरौ। पक्षे एकशेषेण मुक्ते द्वन्द्वे मातापितरौ। अभ्यर्हितत्वात् मातृशब्दस्य पूर्वनिपातः। "पितुर्दशगुणं माता गौरवेणातिरिच्यते"। "आनङ्ऋतो—" (९२१—६।३।२५) इत्यानङ्॥ "पुमान् स्त्रिया" (९३२) इत्यस्य तु नायं विषयः। मातृशब्दो हि जनन्यां रूढ़ न त्वत्र स्त्रीप्रत्ययः कश्चित् क्रियते॥ इहापि शब्दस्वरूपे विधिः "तल्लक्षणः—" इति नापेक्षते॥

९३७। श्वशुरः श्वश्र्वा॥ १।२।७१॥

दी—। श्वश्र्वा सहोक्तौ श्वशुरो वा शिष्यते तल्लक्षण एव विशेषश्चेत्। श्वश्रूश्च श्वशुरश्च श्वशुरौ, श्वश्रूश्वशुरौ वा।

श्वशुर alone is retained optionally when spoken along with श्वश्रू। Thus श्वशुरौ with एकशेष and श्वश्रू etc. by द्वन्द्व as usual तल्लक्षण etc, seems to be an interpolation.

मित—। 'अन्यतरस्याम्' इत्यस्ति। 'तल्लक्षण—' इत्यादेरिह नास्त्युपयोगः। तत् प्रक्षिप्तमिवैतदाभाति॥ एकशेषेण मुक्तो सुप्तपत्तिद्वन्द्वश्च। "श्वश्रूः पूर्वजपत्नी च मातुलानी प्रकीर्तिता" इति मातृतुल्यत्वादभ्यर्हिता श्वश्रूः तेन पूर्वनिपातः श्वश्र्वाः।

९३८। त्यदादीनि सर्वैर्नित्यम्॥ १।२।७२॥

दी—। सर्वैः सहोक्तौ त्यदादीनि नित्यं शिष्यन्ते। स च देवदत्तश्च तौ।

The pronouns त्यद्, तद् etc. alone are retained when spoken with any other word. Thus तौ when तद् and देवदत्त are spoken together.

मित—। नित्यग्रहणमन्यतरस्यामित्यस्य निवृत्त्यर्थम्॥ 'सर्वैः' अशेषैरितरैरित्यर्थः॥ 'तौ' इत्यत्र देवदत्तेन सहोक्तौ तच्छब्दः शिष्यते देवदत्तशब्दो निवर्तते। एवमन्यैरपि सहोक्तौ। अहञ्च भवांश्च आवाम्॥ सर्वनामसु पठितानि अखिलानि त्यदादीनि गृह्यन्ते न तु तिशब्दपर्यन्तान्येव॥

दौ—। "त्यदादीनां मिथः सहोक्तौ यत् परं तच्छिष्यते" (वार्त्तिक)। स च यश्च यौ। "पूर्वशेषोऽपि दृश्यते" इति भाष्यम्। स च यश्च तौ।

That which is subsequent in the list is retained when words of the त्यदादि class are spoken of together. Thus यौ for तद् and यद्। The भाष्य says that sometimes one prior in the list is seen retained ; thus तौ for तद् and यद्।

मित—। 'यत् परम्—' गणे यस्य परः पाठः स शिष्यते इत्यर्थः॥ प्रथमं तच्छब्दः पठ्यते ततो यच्छब्दः तेन यच्छब्दः शिष्यते। क्वचित् पूर्वपठितोऽपि शिष्यते अतः 'तौ' इत्यपि भवति इति भाष्यम्॥

दौ—। "त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि" (वार्त्तिक)। सा च देवदत्तश्च तौ। तच्च देवदत्तश्च यज्ञदत्ता च तानि। पुंनपुंसकयोस्तु परत्वान्नपुंसकं शिष्यते—तच्च देवदत्तश्च ते।

When त्यदादि words are retained the gender is determined by what is masculine or neuter in the group before एकशेष। Thus in the group सा and देवदत्तः the तच्छब्द in सा will be retained but the gender will be that of देवदत्तः, i. e., masculine ; hence तौ। Again in तत्, देवदत्तः and यज्ञदत्ता the gender will be that of तत्, i. e., neuter ; hence तानि। Then the conflict is between masculine and neuter, as here, the neuter prevails because it is placed later in the Varttika, hence in तत् and देवदत्तः the final is ते in neuter dual.

मित—। 'त्यदादितः' इति षष्ठ्यर्थे तसिः, पुंनपुंसकत इति तृतीयार्थे॥ उच्यते एभिः वचनानि। ल्युट् करणे। लिङ्गस्य वचनानि 'लिङ्गवचनानि' लिङ्गाभिधायकानि। 'त्यदादितः' त्यदादीनां 'शेषे' सति यानि त्यदादीनि शिष्यन्ते तानि शेषात् पूर्वं सहोक्तेन 'पुंसा नपुंसकेन' वा 'लिङ्गवचनानि' लिङ्गाभिधायकानि भवन्ति, सहोक्त

पुमांश्चेत् कश्चित् पुंलिङ्गानि भवन्ति, नपुंसकश्चेत् नपुंसकलिङ्गानि इत्यर्थः ॥ उदाहरणे देवदत्त इति पुमान्, तेन 'तौ' इति शेषः ॥ द्वितीये 'तत्' इति नपुंसकम् 'देवदत्त' इति पुमान्, तत् किं शेषस्य लिङ्गम्? उत्तरमाह 'परत्वात् नपुंसकम्'। वार्तिके 'पुंनपुंसकतः' इति विन्यासः, तत्र नपुंसकं परम्। तेन नपुंसकं भवति। तदाह 'तानि' इति ॥ एवं तच्च देवदत्तश्च 'ते' इति नपुंसकद्विवचनं शेषः ॥ सा च देवदत्ता च इति तु स्त्रीलिङ्गमेव शेषः 'ते' इति ॥

**टी—। "अद्वन्द्वतत्पुरुषविशेषणानामिति वक्तव्यम्" (वार्त्तिक)। कुक्कुटमयूर्यौ इमे। मयूरीकुक्कुटाविमौ। तच्च सा च अर्द्धपिप्पल्यौ ते।**

This injunction about the gender of the शेष does not apply to qualifying epithets of द्वन्द्व and तत्पुरुष compounds. Thus the शेष of अयम् and इयम् as seen in अयं कुक्कुटः इयं मयूरी will not be इमौ always, but will depend upon the form of the द्वन्द्व of कुक्कुटः and मयूरी। If it is कुक्कुटमयूर्यौ the शेष will be इमे in the feminine; if मयूरकुक्कुटौ then इमौ in the masculine. This is in accordance with the rule "परवल्लिङ्ग—" (812—2. 4. 26). Similarly तत् पिप्पल्यर्द्धम् सा अर्द्धपिप्पली will give पिप्पल्यर्द्धे ते in the neuter or अर्द्धपिप्पल्यौ ते in the feminine in accordance with "परवल्लिङ्गम्—" (812) and not ते in the neuter always as this Vartika requires.

मित—। द्वन्द्वविशेषणानां तत्पुरुषविशेषणानाञ्च त्यदादीनां नैतद्वार्त्तिकं लिङ्गनियामकम्। तानि तु परवल्लिङ्गान्येव भवन्ति। तथा च अयञ्च कुक्कुटः इयञ्च मयूरी इत्यत्र द्वन्द्वे कृते कुक्कुटमयूर्यौ मयूरीकुक्कुटाविति वा भवति। विशेषणयोरेकशेषे वार्त्तिकमते नियतम् अयञ्च इयञ्च इमौ इत्येव भवितव्यम्, न च पुनस्तथा भवति। "परवल्लिङ्गम्—" (८१२—२।४।२६) इति तु कुक्कुटमयूर्यौ इति कृते 'इमे', मयूरीकुक्कुटौ इति सति 'इमौ' इति बोध्यमेव ॥ एवम् तच्च पिप्पल्यर्द्धम् अर्द्धपिप्पली च सा इत्यत्र एकशेषे वार्त्तिकमते नियतमेव तच्च सा च इति 'ते' इति नपुंसकेन भवितव्यम्। भवति तु पिप्पल्यर्द्धे ते इति नपुंसके, अर्द्धपिप्पल्यौ ते इति स्त्रियाम् ॥

९३८। ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री ॥ १।२।७३ ॥

दी—। एषु सह विवक्षायां स्त्री शिष्यते। "पुमान् स्त्रिया" (९३३—१।२।६७) इत्यस्यापवादः। गाव इमाः। 'ग्राम्य' इति किम्? रुरव इमे। 'पशु'-ग्रहणं किम्? ब्राह्मणा इमे। 'सङ्घेषु' किम्? एतौ गावौ। 'अतरुणेषु' किम्? वत्सा इमे।

The female alone is retained when speaking of more than two of grown up domesticated animals. This over-rules "पुमान् स्त्रिया" (933). Thus गावः in the feminine. Why ग्राम्य? Witness रुरवः in the masculine. Why पशु? Witness ब्राह्मणाः in the masculine. Why सङ्घेषु? Witness गावौ in the masculine when speaking of only two animals. Why अतरुणेषु—among those that are not young? Witness वत्साः in the masculine.

मित—। सङ्घाः समूहाः। ग्राम्याणां पशूनां सङ्घाः। तेषु। अतरुणेषु इति यथाहष्टं 'सङ्घेषु' इत्यस्य न विशेषणं, किन्तु सामर्थ्यात् 'पशु' इत्यस्य। तदयमर्थः—अतरुणानां ग्राम्यपशूनां ये सङ्घाः तेषु सहोक्तौ स्त्री शिष्यते इति॥ गौरयं गौरियं गौरयम् इति गाव इमाः॥ रुरुस्तु न ग्राम्यो मृगः, तेन रुरुरयम् रुरुरियम् रुरुरयम् इति "पुमान् स्त्रिया" ( ९३३ ) इति पुंसि रुरव इमे॥ इह बहूनां सङ्घो विवक्षितः, तेन एष गौः एषा च गौः इति एतौ गावौ पुंसि॥ तरुणेषु तु वत्सोऽयम् वत्सेयम् वत्सोऽयम् इति पुंसि वत्सा इमे।

दी—। "अनेकशफेष्विति वाच्यम्" (वार्त्तिक)। अश्वा इमे।

This retention of the female applies to cloven-hoofed animals only. Thus अश्वाः in the masculine.

मित—। शफाः खुराः। ये तु पशवः प्रतिपदमेकशफाः तेषां पुमानेव न स्त्री शिष्यते इत्यर्थः॥

दी—। इह सर्वत्र एकशेषे कृते अनेकसुबन्ताभावात् द्वन्द्वो न। तेन 'शिरसी' 'शिरांसि' इत्यादौ "समासस्य" ( ३७२४—

६।१।२२३ ) इत्यन्तोदात्तः प्राण्यङ्गत्वादेकवद्भावश्च न। 'पन्थानौ' 'पन्थानः' इत्यादौ समासान्तो न।

In examples of एकशेष including those quoted here we cannot have a द्वन्द्व after एकशेष has operated, because then there is only one सुबन्त word left; while द्वन्द्व, or समास in general for the matter of that, requires more than one सुबन्त word. Hence शिरसी शिरांसि &c., which result from एकशेष are no instances of समास। If they were they would have the final vowel in them of a high pitch by the rule "समासस्य" (3738); besides शिरस् being a प्राण्यङ्ग the forms would be all singular. Moreover पन्थानौ, पन्थानः &c., would take the समासान्त affix अ by the rule "ऋक्पूरब्—" (940).

मित—। प्रागुक्तेषु एकशेषोदाहरणेषु एकशेषात् परं द्वन्द्वसंज्ञा कथं न भवति इत्याह—समाससंज्ञा हि एकाधिके सुबन्ते भवति, इह च एकमेव शिष्टम्। तत् समास एव न, कुतो द्वन्द्वः। यदि द्वन्द्वः स्यात् 'शिरसी' इत्यादौ समासस्वरः अन्तोदात्तः स्यात् प्राण्यङ्गत्वात् एकवद्भावश्च। किञ्च "ऋक्पूरब्—" (९४०) इति समासान्तश्च स्यात्। एकशेषश्च प्रातिपदिकानामित्युक्तं प्राक् तेन तस्यापि समाससंज्ञा न भवति, अतः स्वरः समासान्तश्च सर्वथा अप्रसक्त एव॥

---

# अथ सर्वसमासशेषः

दो—। कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः। "परार्थाभिधानं वृत्तिः"।

वृत्ति is that in which a word besides expressing its own

meaning also declares the meaning of another. There are five instances of वृत्ति, viz, कृत्, तद्धित, समास, एकशेष, सनाद्यन्तधातु ।

मित—। वृत्तय: पञ्च। ताश्च कृत्, तद्धित:, समास:, एकशेष:, सनाद्यन्तधातु:, इति। वृत्तिश्च 'परस्य' आत्मेतरस्य य: 'अर्थ:' स: 'अभिधीयते' यस्यां सा। अधिकरणे ल्युट्। एतत् कैयटस्य। नागेशस्तु अभिधीयते यया इति करणे ल्युटमाह ॥ कृति—कुम्भकार इत्यत्र कुम्भशब्द: कारशब्दार्थेन संसृष्टं स्वार्थमाह, कारशब्दोऽपि कुम्भार्थेन संसृष्टं स्वार्थम्। एवमस्ति परार्थाभिधानम् ॥ तद्धिते—दाशरथिरित्यत्र, दशरथशब्द इञ्प्रत्ययोपस्थितेन अपत्यार्थेन संसृष्टं स्वार्थम्, अपत्यार्थक इञ्प्रत्ययोऽपि दशरथशब्दार्थेन संसृष्टं स्वार्थमाह। तदस्ति परार्थाभिधानम् ॥ समासे—राजपुरुष इत्यत्रापि परार्थाभिधानमस्ति। एकशेषे—पितरौ इत्यत्र पितृशब्दो मातृशब्दस्यार्थमभिधत्ते, तदस्ति परार्थाभिधानम् ॥ सनाद्यन्तधातौ—पुत्रकाम्यति इत्यत्र पुत्रशब्द: काम्यच्प्रत्ययार्थेन संसृष्टं स्वार्थमाह इत्यस्ति परार्थाभिधानम् ॥

टी—। वृत्त्यर्थावबोधकं वाक्यं विग्रह:। स द्विधा, लौकिक: अलौकिकश्च। परिनिष्ठितत्वात् साधुर्लौकिक:। प्रयोगानर्ह: असाधुरलौकिक:। यथा—राज्ञ: पुरुष:, राजन् अस् पुरुष सु, इति। अविग्रहो नित्यसमास: अस्वपदविग्रहो वा।

विग्रह is a statement indicating the meaning of the वृत्ति। This is of two kinds—लौकिक and अलौकिक। When its constituents are in their final form with suitable affixes attached, it is admissible in usage and called लौकिक। It is अलौकिक in a form not capable of usage in common language. Thus राज्ञ: पुरुष: is a लौकिकविग्रह while राजन् अस् पुरुष सु is अलौकिक। A नित्यसमास is one with no विग्रह at all, or with a विग्रह that does not contain one or more of the constituents of the समास।

मित—। 'वृत्तेर्थ:' 'अर्थ:' तस्य 'अवबोधकं' प्रतिपादकं 'वाक्यं' विभक्त्यन्तपद-

समुच्चय: 'विग्रह:' इति कथ्यते। विग्रहश्च लौकिको वा अलौकिको वा। 'परिनिष्ठ' समाप्ति: विभक्तिविहितानां प्रक्रियाणामिति शेष: जाता अस्य 'परिनिष्ठित:' तस्य भावस्तस्मात् 'साधु:' प्रयोगार्ह: लौकिक:' इत्युच्यते। 'प्रयोगानर्ह:' अतएव 'असाधु:' लोके अनीप्सित: 'अलौकिको' विग्रह:। राज्ञ: पुरुष: इति लौकिक:, राजन् अस् इत्याद्यलौकिक: ॥ 'नित्यसमास: अविद्यमानो विग्रहो यस्य तादृश: 'अविग्रहो' वा भवति, 'अविद्यमान: स्वपदेन' समासघटकपदेन 'विग्रहो' यस्य तादृशो वा भवति। एतत्तु "नित्य: समासो नित्यसमास: यस्य विग्रहो नास्ति" इति भाष्यवाक्यस्य सन्दिग्धार्थत्वादुक्तम्। इह 'विग्रह:' इति येन केनचिदपि विग्रह इति चेत्, विग्रहो नास्ति' इत्युक्ते अविग्रह:' प्राप्त:। अथ 'विग्रह:' इत्यस्य घटकपदेन विग्रह: इति चेदर्थ: तदा 'अस्वपदविग्रह:' आयाति ॥

दी—। समासश्चतुर्विध इति प्रायोवाद:। अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वाधिकारबहिर्भूतानामपि "सह सुपा" (६४९—२।१।४) इति विधानात्।

That समास is of four kinds is a general statement subject to exceptions, because the rule "सह सुपा" (649) sanctions Samasas outside the four—अव्ययीभाव, तत्पुरुष, बहुव्रीहि and द्वन्द्व।

मित—। 'प्रायस्' इत्यव्ययं बाहुल्यार्थे। प्राय: बाहुल्याभिप्रायेण वाद: कथनं 'प्रायोवाद:'। एतेन 'चतुर्विध:' इत्यस्य 'प्रायेण चतुर्विध:' इत्यर्थ: फलित:। तदेव दर्शयति "सह सुपा" (६४९) इति पञ्चमोऽपि समासो विहित: कादाचित्क इति।

दी—। पूर्वपदार्थप्रधानोऽव्ययीभाव:, उत्तरपदार्थप्रधानस्तत्पुरुष:, अन्यपदार्थप्रधानो बहुव्रीहि:, उभयपदार्थप्रधानो द्वन्द्व:' इत्यपि प्राचां प्रवाद: प्रायोऽभिप्राय:। 'सूपप्रति' 'उन्मत्तगङ्गम्' इत्याद्यव्ययीभावे, 'अतिमालादौ' तत्पुरुषे, 'द्वित्रा:' इत्यादि बहुव्रीहौ, 'दन्तोष्ठम्' इत्यादि द्वन्द्वे चाभावात्।

Another statement of the older grammarians which has to-

be taken with exceptions is that an अव्ययीभाव has the sense of the leading word prominent, a तत्पुरुष that of the final word, a बहुव्रीहि that of a quite different word and a द्वन्द्व has the sense of all its constituents eqally prominent. Thus सूपप्रति which is an अव्ययीभाव, has the sense of प्रति, the final prominent in it; उन्मत्तगङ्गम्, another अव्ययीभाव compound, is अन्यपदार्थप्रधान। अतिमाल:, a तत्पुरुष, has the sense of अति prominent—it is पूर्वपदार्थप्रधान। द्विमा: बहुव्रीहि is उभयपदार्थप्रधान। दन्तोष्ठम्, a द्वन्द्व, is अन्यपदार्थप्रधान।

मित—। 'प्राय:' बाहुल्यम् 'अभिप्राय:' अस्य 'प्रायोभिप्राय:' प्रायेण एवंविधा: इत्यस्याभिप्राय: इत्यर्थ:। व्यभिचारं दर्शयति—सूपप्रति इत्यत्र प्रतिशब्दस्यार्थ: प्रधानम्। उन्मत्तगङ्गम् इत्यत्र अन्यपदार्थ: (देश:) प्रधानम्। इत्यव्ययीभावे व्यभिचार:। अतिमाल: इत्यत्र अतिशब्दार्थ: प्रधानम् इति व्यभिचारस्तत्पुरुषे॥ द्विमा: इत्यत्र उभयपदार्थ: प्रधानम् इति व्यभिचारो बहुव्रीहौ॥ दन्तोष्ठम् इत्यत्र अन्यपदार्थ: (समाहारार्थ:) प्रधानम् इति व्यभिचारो द्वन्द्वे॥

दी—। तत्पुरुषविशेष: कर्मधारय:। तद्विशेषो द्विगु:। अनेकपदत्वं द्वन्द्वबहुव्रीह्योरेव, तत्पुरुषस्य क्वचिदेव इत्युक्तम्।

कर्मधारय is a variety of तत्पुरुष, द्विगु one of कर्मधारय। द्वन्द्व and बहुव्रीहि only may have more than two constituents, and it is said in the Bhashya that a तत्पुरुष has them rarely.

मित—। विशिष्यते इति विशेष:। घञन्तात् कर्मणि घञ्। तत्पुरुषस्य विशेष: कर्मधारय:। घटकपदयो: समानाधिकरणत्वे कर्मधारय: इति विशेष:। तस्य कर्मधारयस्य विशेष: तद्विशेष:। समानाधिकरणयोरपि पूर्वं चेत् संख्या स द्विगु: इति पुनर्विशेष:। 'क्वचिदेव' द्व्यङ्गजातादिषु॥

दी—। किञ्च—

सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा।
सुबन्तेनेति विज्ञेय: समास: षड्विधो बुधै:।

सुपां सुपा—राजपुरुषः। तिङा—पर्य्यभूषयत्। नाम्ना—कुम्भकारः। धातुना—कटप्रूः, अजस्रम्॥ तिङां तिङा—पिबतखादता, खादतमोदता। तिङां सुपा—कृन्त विचक्षणेति यस्यां क्रियायां सा कृन्तविचक्षणा। "एह्रीडादयोऽन्यपदार्थे च" इति मयूरव्यंसकादौ पाठात् समासः॥

Moreover, the wise have to note that समास is of six kinds,—A सुप् may be compounded with a सुप्, a तिङ्, a नामन्, a धातु; a तिङ् may be compounded with a तिङ्, a सुबन्त word; making six altogether. Thus सुप् with सुप्—राजपुरुषः। सुप् with तिङ्—पर्य्यभूषयत् by योगविभाग of सह (649—2. 1. 4). सुप् with नामन्—कुम्भकारः by "गतिकारकोपपदानां कृद्भिः—" (782). सुप् with धातु—कटप्रूः, takes to the mat, by "क्विब्वचिप्रच्छि—" (3158, Vartika); अजस्रम्, incessant, by "नमिकम्पि—" (3147—3. 2. 167). तिङ् with तिङ्—पिबत &c., मयूरव्यंसकादि (754—2. 1. 72). तिङ् with सुप्—कृन्त &c. a ceremony at which is constantly shouted "cut it down you clever fellow"; this is by the Varttika "एह्रीडादय—" (754, Varttika).

मित—। सुपां चतुर्विधः समासः—सुपा, तिङा, नाम्ना, धातुना। तिङां द्विविधः—तिङा, सुबन्तेन। एवं षड्विधः समासः॥ राज्ञः इति सुप्, पुरुषः इति सुप्॥ परि इति सुप् अभूषयत् इति तिङ्॥ कुम्भम् इति सुप् कार इति नामन् "गतिकारकोपपदानाम्—" (७८२, वा॰) इति वचनात् प्राक् सुबुत्पत्तेर्नाम्ना समासः॥ कटम् इति सुप् प्रु गतौ इति धातुः। कटं प्रवते गच्छति इति क्विपि कटप्रूः। "क्विब्वचि—" (३१५८, वा) इत्यत्र निपातनात् धातुना समासः। नञ् इति सुप् जसु मोक्षणे इति धातुः न जसति मुञ्चति अजस्रम् क्रियासातत्यम्। "नमिकम्पि—" इत्यत्र निपातनात् धातुना समासः। पुंसिक्रीडयम्, क्लीबन्तु शब्दान्तरमव्ययेषु इति पुरुषोत्तमः॥ पिबतखादतामृततवः प्राभ्यापाखाताः (७५४ वा)॥

—:o:—

# अथ सर्वसमासान्ताः

९४० । ऋक्पूरब्धूःपथामानक्षे ॥ ५।४।७४ ॥

दी— । अ अनक्षे इति छेदः । ऋगाद्यन्तस्य समासस्य अ-प्रत्ययः अन्तावयवः स्यात्, अक्षे या धूस्तदन्तस्य तु न । अर्धर्चः । अनृचबह्वृचावध्येतर्येव । नेह—अनृक् साम, बह्वृक् सूक्तम् । विष्णोः पूः विष्णुपुरम् । क्लीवत्वं लोकात् । विमलापं सरः ।

Break up the combination as अ अनक्षे । Then the sense is—Compound ending in ऋच्, पुर्, अप्, धुर्, पथिन् take the समासान्त affix अ, but not if the धुर् refers to the axle of a wheel. Thus अर्धर्चः, half of a ऋच् । अनृच—having no knowledge of ऋच्—and बह्वृच one knowing several ऋच् verses—are allowed only when referring to the student ; hence, no समासान्त in अनृक् &c.—the Sama Veda has no ऋच् in it—and also in बह्वृक् &c.—a सूक्त containing many ऋच् verses. विष्णु &c.—the abode of Vishnu ; here the feminine was expected, but it is neuter through usage. विमलापम् etc., a lake with limpid water.

मित— । ऋक्पूरब्धूःपथाम् अ अनक्षे इति पदविभागः । 'अ' इत्यपि पदम्—लौवः सुलोपः । तदाह 'अ अनक्षे' इत्यादि ॥ "समासान्ताः" (६७६—५।४।६८) इत्यधिकारसामर्थ्यात् ऋगादयः उत्तरपदम् । तदाह 'ऋगाद्यन्तस्य समासस्य' इति । 'समासस्य' इति सामान्यतो निर्देशः । सर्वेषु समासेषु ऋगाद्यन्तेषु अ-प्रत्ययः समासान्त इत्यर्थः ॥ 'अनक्षे' इति अक्षसम्बन्धे न इत्यर्थः । अक्षसम्बन्धश्च धुर एव सम्भवति । तदाह 'अक्षे या धूः' इति ॥ तत्पुरुषे—अर्धम् ऋचः इति विग्रहे अर्ध ऋच् अ इति स्थिते अर्धर्चः ॥ ननु समासान्ताः स्वार्थिकाः प्रत्यया इति तदन्तानां प्रकृतिवल्लिङ्गं युक्तम् । तदिह "परवल्लिङ्गम्—" (८१२—२।४।२६) इति ऋचः स्त्रीत्वादर्धर्चा इति स्त्रीत्वं प्राप्तम् । "अर्धर्चाः पुंसि च" (८१६—२।४।३१) इति अर्धर्चः अर्धर्चम् इति भवति ॥ बहुव्रीहौ—

अविद्यमाना ऋगस्य इति विग्रहे अनृच इति यो ऽहर्च न अधीते तमाह। एवं बह्वृच इति। अन्यत्र तु एतयोः समासान्तो न—अनृक् साम इत्यादि॥ पुनस्तत्पुरुषे—विष्णुपुरिमित्यत्र पुर्शब्दस्य स्त्रीत्वात् स्त्रीत्वे प्राप्ते क्लीबत्वं लोकात्॥ पुनर्बहुव्रीहौ—विमला आपः अस्मिन् विमलापं सरः॥

९४१। द्व्यन्तरुपसर्गेभ्योऽप ईत्॥ ६।३।९७॥

टी—। 'अपः' इति कृतसमासान्तस्यानुकरणम्। षष्ठ्यर्थे प्रथमा। एभ्यः अपस्य ईत् स्यात्। द्विगता आपो यस्मिन्निति द्वीपम्। अन्तरीपम्। प्रतीपम्। समीपम्। "समापो देवयजनम्" इति तु समा आपो यस्मिन्निति बोध्यम्। कृतसमासान्तग्रहणान्नेह—स्वप् स्वपौ॥

Here अप is an imitation of अप् with the समासान्त attached. It is in the first case singular, the sense being that of षष्ठी। Hence the rule means—अप with the समासान्त attached, when coming after द्वि, अन्तर् and उपसर्ग, will change its अ into ई। Thus द्वि अप= द्वि ईप= द्वीप, meaning a place where the current divides itself into two. Similarly अन्तरीप etc. समाप as seen in "समापो—" is not a compound of सम् but should be expounded as, समा आपः etc., having still water or water of an even depth. स्वप् is a compound of सु and अप् and has no समासान्त owing to the prohibition "न पूजनात्" (954—5. 4. 69); hence the अ does not become ई। स्वपौ is in the dual.

मित—। अप्शब्दान्ते समासे अप्रत्यये कृते 'अप' इति अदन्तमवयवो भवति तस्येह सूत्रे अनुकरणम्॥ तच्च प्रथमान्तम्। षष्ठ्यर्थे प्रथमा॥ अपस्य इति वक्तव्ये अप इत्युक्तम् इति भावः। तदाह 'अपस्य ईत् स्यात्' इति॥ बहुव्रीहौ—'द्विः' द्विगता 'आपः' अस्मिन् इति विग्रहे द्वि अप् अ इति स्थिते द्वि अप इति जाते "तस्मादित्युत्तरस्य" (४१—१।१।६७) इति अपस्य ईत्। ईत्व "आदेः परस्य" (४४—

२।४।५४ ) इति अपस्य आदेः अकारस्य भवति। तेन द्वि इप द्वीपम्—द्वीपः, अर्द्धर्चादिः। सुजर्थः समासेन उक्त इति द्वी सुच् न दृश्यते। एवमन्तरीपादयोऽपि। उपसर्गेति प्रादीनामुपलक्षणम्॥ समाप इति समासशब्दस्य समासः न तु समित्युपसर्गस्य॥ बहुव्रीहौ—सुस्थिता आपः अस्मिन्निति विग्रहे सु अप् इति स्थिते "न पूजनात्"(९५४) इति निषेधात् न समासान्तः ईत्वञ्च न। क्लीबे रूपं स्वप् स्वपी इत्यादि॥

दी—। "अवर्णान्ताद्वा" (वार्त्तिक)। प्रेपम्—प्रापम्। परेपम्—परापम्।

अप optionally becomes ईप if after an उपसर्ग ending in अ or आ। Thus प्र अप=प्राप or प्र ईप, i. e. प्रेप। Similarly परा अप=पराप or परा ईप, i. e. परेप।

मित—। प्रादिषु ये अवर्णान्ताः तेभ्य उत्तरस्य अपस्य ईत् वा॥ प्रगता आपः अस्मात् इति प्र अप इति स्थिते प्रापम्, ईत्वे तु प्रेपम्। एवं परागता आप इत्यादि॥

९४२। ऊदनोर्देशे॥ ६।३।९८॥

दी—। अनोः परस्य अपस्य ऊत् स्याद्देशे। अनूपो देशः॥ राजधुरा। अक्षे तु—अक्षधूः, दृढधूरक्षः॥ सखिपथौ। रम्यपथो देशः॥

अप becomes ऊप when after अनु and the compound refers to a country. Thus अनूप etc, maritime country. As an example of धुर् we have राज etc., the king's burden. No समासान्त if the reference is to an axle. Thus अक्षधूः, the weight on the axle; दृढ etc., the axle with a heavy load on it. For पथिन्, witness सखिपथौ, the friend and the journey; रम्य etc., a land of fine roads.

मित—। 'अपः' इत्यनुवर्त्तते। 'अनोः' इति पञ्चमी। तदाह 'अनोः परस्य' इत्यादि॥ 'देशे' इति समास-विशेषणम्। समासेन यदि देशोऽभिधीयते इत्यर्थः॥

बहुव्रीहौ—अनुगता आपः अस्मिन् 'अनूपः' जलप्रायो 'देशः'। इह प्रक्रिया द्वीपशब्दवत्॥ तत्पुरुषे—राज्ञो धूः इति विग्रहे राजन् धुर् अ इति स्थिते "परवल्लिङ्गम्—" (८२१—२।४।२६) इति स्त्रीत्वे राजधुरा॥ अक्षो रथावयवस्य नाभिनाम्नः। स एव रथभारं धारयति। अक्षस्य अवयवसम्बन्धिनी धूः या रथधुरा अक्षं पीडयति सा, अक्षधूः। अक्षसम्बन्धात् न समासान्तः॥ एवं दृढा गुर्वी धूः, रथधुरा अस्मिन्निति दृढधूः अक्षः॥ द्वन्द्वे—सखा च पन्थाश्च इति विग्रहे सखि पथिन् अ इति स्थिते "नस्तद्धिते" (६७९—६।४।१४४) इति टिलोपे सखिपथौ॥ बहुव्रीहौ—रम्याः पन्थानः अस्मिन् इति रम्यपथिन् अ इत्यादि प्राग्वत्॥

९४३। अच् प्रत्यन्ववपूर्वात् सामलोम्नः॥ ५।४।७५॥

टी—। एतत्पूर्वात् सामलोमान्तात् समासात् अच् स्यात्। प्रतिसामम्। अनुसामम्। अवसामम्। प्रतिलोमम्। अनुलोमम्। अवलोमम्।

अच् is the समासान्त after compounds in which सामन् or लोमन् is the उत्तरपद and प्रति, अनु, or अव is the पूर्वपद। Thus प्रति etc.—the Saman that is to the contrary, अनु etc.—the Saman that is favourable, अव etc.—the Saman that is missing. Similarly प्रति etc.

मित—। "प्रत्यन्ववपूर्वात्", 'सामलोम्नः' इति समासविशेषणम्। तदाह 'एतत्पूर्वात्' इत्यादि॥ साम्नि साम्नि इति प्रतिसामम्, अव्ययीभावः। प्रतिगतं साम इति प्रादिसमासो वा। यद्वा प्रतिगतं साम अस्य इति बहुव्रीहिः। सर्वत्र "नस्तद्धिते" (६७९—६।४।१४४) इति टिलोपः॥ एवमुत्तरत्रापि॥ अवसाममित्यादिषु अवहीनं साम अवहीनं लोम, इत्यादि विग्रहः॥

टी—। 'कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरजिष्यते'। कृष्णभूमः। उदग्भूमः। पाण्डुभूमः। द्विभूमः प्रासादः।

अच् is desired after भूमि final in a compound and preceded

by कृष्ण, उदक्, पाण्डु or a numeral. Thus कृष्ण etc. of dark soil, उदक् etc,—having the ground to the north, पाण्डु etc.—of sable soil, द्वि etc.—a two-storeyed house.

मित—। 'भूमेः' इति पञ्चमी। कृष्णादिशब्दपूर्वो यो भूमिशब्दः तदन्तात् समासात् अभियुक्तैः अच्प्रत्ययः इष्यते॥ कृष्णा भूमिरस्मिन् कृष्णभूमो देश इति बहुव्रीहौ॥ उदीची भूमिरस्य उदग्भूमः॥ पाण्डुः भूमिरस्मिन् पाण्डुभूमो देशः॥ द्वे भूमी अस्मिन् द्विभूमः॥ सर्वत्र "यस्येति च" (३११—६।४।१४८) इति लोपः॥ इदन्तु 'अच्' इति योगविभागाल्लभ्यते॥

दी—। 'संख्याया नदीगोदावरीभ्याञ्च'। पञ्चनदम्। सप्तगोदावरम्।

अच् is also desired if नदी or गोदावरी is final in a compound and comes after a numeral. Thus पञ्च etc.—concurrence of five rivers.

मित—। 'संख्यायाः' इति पञ्चमी। संख्यापूर्वपदात् नदीशब्दान्तात् गोदावरीशब्दान्ताच्च समासात् अच्-प्रत्ययः स्यात् समासान्त इत्यर्थः॥ पञ्चानां नदीनां समाहार इति विग्रहे पञ्चनदी अच्। यस्येति च" (३११—६।४।१४८) इति लोपः—पञ्चनदम्॥ एवं सप्तगोदावरम्। गोदावरीशब्द इह नदीमात्रपरः॥

दी—। 'अच्' इति योगविभागादन्यत्रापि। पद्मनाभः।

All this is the result of the separation of अच् from the rule "अच्प्रत्यन्वव—"। "अच् then by itself constitutes a rule, the sense being—अच् comes in as a समासान्त after all compounds". Hence पद्मनाभः is detended.

मित—। सूत्रे 'अच्' इति विधेयम्। विधेयञ्च उद्देश्यात् परं निर्द्देष्टव्यम्। इह पूर्वमेव निर्द्दिष्टम्। तदत्र 'अच्' इति योगो विभज्यते। 'समासान्ताः' इति चाधिकारः। तेन 'अच् समासान्तः' इत्यर्थः सम्पद्यते। कस्यापि समासस्येह विशिष्य अग्रहणात् अयं सर्वत्र प्राप्नोति। परं योगविभागस्य इष्टसिद्धार्थत्वात् अभियुक्त-

प्रयोगाणां समर्थनायैव कर्त्तव्यः सः, नत्वसौ सार्वत्रिकः ॥ कृष्णभूमादयः शिष्टप्रयोगा अनेन योगविभागेन समर्थ्यन्ते । पद्मं नाभौ यस्य इति पद्मनामशब्दस्य इत्थमेव समर्थनीयः ॥ एवमनित्यत्वादस्य "प्रजा इवाङ्गादरविन्दनाभेः", "दृशितावर्त्तनाभे-र्निर्विन्ध्यायाः" इत्यादयो निर्बाधाः ॥

९४४ । अक्ष्णोऽदर्शनात् ॥ ५।४।७६ ॥

**दी—। अचक्षुःपर्य्यायात् अक्ष्णः अच् स्यात् समासान्तः । गवामक्षीव गवाक्षः ।**

अच् is attached as a समासान्त when अक्षि, not meaning 'eye', is final in a compound. Thus गवाक्ष, window, which literally means 'like the eyes of light.' Like the eye is not eye.

मिम—। दृश्यते अनेन इति दर्शनं चक्षुः । करणे ल्युट् । न दर्शनम् अदर्शनम् अचक्षुः अचक्षुःपर्य्याय इत्यर्थः । तथाविधात् अक्षिशब्दात् इत्याद्यर्थः ॥ गावः किरणाः । गवाक्षशब्दे अक्षिशब्दस्य 'अक्षि इव' इत्यर्थः न तु अक्षि एव । तत् अचक्षुः-पर्य्यायत्वादच् । "यस्येति च" ( ३११—६।४।१४८ ) इति लोपः—गवाक्षः किरणानां रन्ध्रं वातायनम् ॥

९४५ । अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मन-साक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरज-सनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशु-नगोष्ठश्वाः ॥ ५।४।७७ ॥

**दी—। एते पञ्चविंशतिरजन्ता निपात्यन्ते । आद्यास्त्रयो बहुव्रीहयः । अविद्यमानानि चत्वारि यस्य अचतुरः । विचतुरः । सुचतुरः ॥**

The 25 words अचतुर &c. are obtained with अच् as समासान्त by निपातन in this rule. The first three are instances of बहुव्रीहि। Thus अचतुरः, one who has not got a certain four; विचतुरः, one who has lost a certain four; सुचतुरः, one who has a clever set of four.

मित—। 'बहुव्रीहयः' इत्यनेन बहुव्रीहय एव अजन्ता निपात्यन्ते इति लभ्यते। तेन तत्पुरुषे अजभावे अचत्वारः, सुचत्वार इति। अप्राप्तः अच्, बहुव्रीहौ तु क्रियते॥

दी—। "त्र्युपाभ्यां चतुरोऽजिष्यते" (वार्त्तिक)। त्रिचतुराः। चतुर्णां समीपे उपचतुराः।

अच् is attached to a बहुव्रीहि ending in चतुर् and having त्रि or उप in the पूर्वपद। Thus त्रि etc., three or four; उप etc. near four, i.e. three or five.

मित—। अयमप्यच् बहुव्रीहावेव निपात्यते॥ त्रयो वा चत्वारो वा त्रिचतुराः। "संख्ययाव्ययासन्न—" (८४३—२।२।२५) इति बहुव्रीहिः। "बहुव्रीहौ संख्येये—" (८५१—५।४।७३) इति डच् प्राप्तः। तस्यायमपवादः। डचि तु त्रिचता इति स्यात्॥ एवमुपचतुरा इत्यत्रापि॥

दी—। तत एकादश द्वन्द्वाः—स्त्रीपुंसौ। धेन्वनडुहौ। ऋक्सामे। वाङ्मनसे। अक्षिणी च भ्रुवौ च अक्षिभ्रुवम्। दाराश्च गावश्च दारगवम्। ऊरू च अष्ठीवन्तौ च ऊर्वष्ठीवम्। निपातनात् टिलोपः॥ पदष्ठीवम्। निपातनात् पादशब्दस्य पद्भावः॥ नक्तञ्च दिवा च नक्तन्दिवम्॥ रात्रौ च दिवा च रात्रिन्दिवम्। रात्रेर्मान्तत्वं निपात्यते॥ अहनि च दिवा च अहर्दिवम्। वीप्सायां द्वन्द्वो निपात्यते। अहन्यहनि इत्यर्थः॥

The next eleven are द्वन्द्व compounds. Thus स्त्री etc. male and female; धेनु etc. bull and heifer; ऋक् etc. Rch and Saman;

वाक् etc. mind and speech; अक्षि etc, eyes and eye-brows; दार etc. wives and cows; ऊरु etc, thighs and knees, which drops the last syllable by निपातन here; पद etc. the feet and the knees, which has पाद replaced by पद by निपातन here; नक्तम् etc. by day and by night; रात्रिम् etc, by day and by night, in which रात्रि becomes रात्रिम् by निपातन; अहर् etc. by day and by day, in which द्वन्द्व in the sense of pervasion is got by निपातन, the sense being evidently every day.

मित—। 'द्वन्द्वाः' इति द्वन्द्वे एव अप्राप्तोऽच् निपात्यते नान्यत्र ॥ स्त्री च पुमांश्च इति स्त्रीपुंस् अच् स्त्रीपुंसौ। "पुमान् स्त्रिया" (९३३—१।२।६७) इति तु स्त्रीप्रत्ययमात्रकृते विशेषे प्रवर्तते न स्वरूपविधिः इत्युक्तं प्राक्॥ धेन्वनडुही इतीतरेतरयोग उदाह्रियते, समाहारे तु "द्वन्द्वाच्चुदषहान्तात्—" (९२०—५।४।१०६) इति टजेव॥ ऋक् च साम च इति विग्रहे ऋक्सामन् अच् इति स्थिते "नस्तद्धिते" (६७९—६।४।१४४) इति टिलोपे ऋक्सामे॥ वाक् च मनश्च वाङ्मनसे॥ अक्षिभ्रुवमित्यत्र अक्षि भ्रू अच् इति स्थिते "अचि श्नु—" (२७१—६।४।७७) इत्युवङ्। प्राण्यङ्गत्वादेकवद्भावः॥ दाराश्च गावश्च इति विग्रहे दारगो अच् दारगवम्। "सर्वो द्वन्द्वो विभाषया (? विभाषा) एकवद्भवति" इत्येकवद्भावः॥ अष्ठीवान् इति जानुपर्यायः। ऊरू च अष्ठीवन्तौ च इति विग्रहे ऊरु अष्ठीवत् अच् इति स्थिते निपातनात् टिलोपे ऊरु अष्ठीव् अ ऊर्वष्ठीवम्। प्राण्यङ्गत्वादेकवद्भावः॥ पादौ च अष्ठीवन्तौ च इति विग्रहे पाद अष्ठीवत् अ इति स्थिते निपातनात् टिलोपः पादशब्दस्य च पद। तेन पद अष्ठीव् अ इति जाते पदष्ठीवम्। प्राण्यङ्गत्वादेकवद्भावः॥ नक्तमित्यव्ययं 'रात्रौ' इत्यर्थे, दिवा इति च 'दिवसे' इत्यर्थे। प्रथमान्तानां द्वन्द्वो विहितः इह तु सप्तम्यर्थे स्थितयोरव्यययोर्द्वन्द्वो निपातनादिति वृत्तिकारः। नक्तम् दिवा अच् इति स्थिते "यस्येति च" (३११—६।४।१४८) इत्यकारलोपे 'नक्तन्दिव' इति जातम्। दिवाशब्दस्य अव्ययत्वेऽपि अजन्तत्वादनव्ययमेतत् "परवल्लिङ्गं—" (८१२—२।४।२६) इति दिवाशब्दस्य अव्ययत्वादलिङ्गत्वे नपुंसकेन निर्देशो न्याय्यः। इह अव्ययवयोः चार्थयोगो नास्ति इति हरदत्तः। तेन न द्विवचनम्। ततः सिद्धं नक्तन्दिवमिति॥ एवं रात्रिन्दिवमिति

अधिकन्तु रात्रेर्मान्तत्वम् ॥ अहर्दिवमिति च रात्रिन्दिवमिव। इह निपातनादेव "विरूपाणाम्—" ( वार्त्तिक ) इत्येकशेषं बाधित्वा द्वन्द्वः ॥

दो—। सरजसमिति साकल्येऽव्ययीभावः। बहुव्रीहौ तु सरजः पङ्कजम् ॥ निश्चितं श्रेयो निःश्रेयसम्। तत्पुरुष एव। नेह—निःश्रेयान् पुरुषः ॥ पुरुषस्यायुः पुरुषायुषम् ॥ ततो द्विगुः। द्व्यायुषम्। त्र्यायुषम् ॥ ततो द्वन्द्वः। ऋग्यजुषम् ॥ ततस्त्रयः कर्मधारयाः। जातोक्षः। महोक्षः। वृद्धोक्षः ॥ शुनः समीपम् उपशुनम्। टिलोपाभावः सम्प्रसारणञ्च निपात्यते ॥ गोष्ठे श्वा गोष्ठश्वः ॥

सरजसम् is an अव्ययीभाव in the sense of साकल्य। The अच् will not be available if we make a बहुव्रीहि of it; thus सरजः etc. a lotus with pollens intact. निःश्रेयसम् is available in a तत्पुरुष only in the sense 'assured blessings'; a बहुव्रीहि, for instance, will have no अच्; thus निःश्रेयान् etc., a luckless wight. पुरुष etc. means 'the span of human life'. Next follow two द्विगु compounds—द्व्या etc., double the length of life; त्र्या etc., treble the length of life. Next is a द्वन्द्व; thus ऋग् etc.—Rch and Yajus. Next follow three कर्मधारय compounds; जातोक्ष, a bull born; महोक्ष; a grand bull; वृद्धोक्ष, an old bull. उप etc. is an अव्ययीभाव meaning 'near the dog'; in it the अन् of श्वन् does not disappear and व becomes उ by निपातन। गोष्ठश्व is a तत्पुरुष meaning 'dog in the pasture.'

मित—। सरजसमिति नित्यसमासः। रजोऽप्यपरित्यज्य सरजसं भुङ्क्ते सर्वंभुङ्क्ते इत्यर्थः। क्रियाविशेषणत्वात् द्वितीया। तस्याश्च "नाव्ययीभावात्—" ( ६५७—२।४।८३ ) इत्यम् ॥ द्वयोरायुषोः समाहारः, त्रयाणामायुषां समाहारः, इति विग्रहः ॥ ऋचश्च यजूंषि च। समाहारद्वन्द्वः ॥ जातोक्षन् अच् इति स्थिते

टिलोपः ॥ उपशुन् अच् इति टिलोपाभावः वकारस्य च उकारो निपातनात्—उपशुनम् । सुपः अम् ॥ गोष्ठश्वन् अ इति स्थिते टिलोपे गोष्ठश्वः । भाष्यवचनात् सप्तमीतत्पुरुषः ॥ इह सर्वत्र समासो नियम्यते । यत्र यः समास उक्तः स एव तत्र, नान्य इति ॥

८४६ । ब्रह्महस्तिभ्यां वर्चसः ॥ ५।४।७८ ॥

टी— । अच् स्यात् । ब्रह्मवर्चसम् । हस्तिवर्चसम् ।

वर्चस् final in a compound and coming after ब्रह्मन् or हस्तिन् requires the समासान्त affix अच् । Thus ब्रह्म etc. the might of asceticism ; हस्ति etc. the strength of the elephant.

मित— । 'ब्रह्मन्' इति तपःसम्पत्तिरुच्यते । 'वर्चस्' दीप्तिः तेजो बलं वा । ब्रह्मणो वर्चः हस्तिनो वर्चः इति विग्रहः ॥

टी— । "पल्यराजभ्यां चेति वक्तव्यम्" (वार्त्तिक) । पल्यवर्चसम् । राजवर्चसम् ।

अच् comes in also after पल्य and राजन् । Thus पल्य etc. the strength of the meat-eater ; राज etc. the majesty of the king.

मित— । पल्यशब्दात् राजन्-शब्दाच्च उत्तरपदात् अच् स्यात् ॥ पलं मांसम् । तत्र साधुः पल्यः मांसभोजी । तस्य वर्चः इत्यादि विग्रहः ॥

८४७ । अवसमन्धेभ्यस्तमसः ॥ ५।४।७९ ॥

टी— । अवतमसम् । सन्तमसम् ॥ अन्धयतीत्यन्धम् । पचाद्यच् । अन्धं तमः अन्धतमसम् ॥

तमस् requires अच् coming after अव, सम्, अन्ध and final in a compound. Thus अव etc. massed darkness or darkness dispelled ; सम etc. pervading gloom ; continued gloom ; अन्ध etc. blinding gloom, अन्ध meaning 'that which blinds' by अच् as seen after पचादि roots.

मित—। अव, सम्, अन्ध, इत्येतेभ्यः परो यस्तमस्शब्दः तदन्तात् समासात् अच् स्यात् समासान्तः ॥ अवततं संहृतं तमः अवतमसम्। अवहीनं प्रनष्टं तम इति वा ॥ सन्ततं निरवच्छिन्नं तमः सन्तमसम् ॥

८४८। श्वसो वसीयःश्रेयसः ॥ ५।४।८० ॥

टी—। वसुशब्दः प्रशस्तावाची। तत ईयसुनि वसीयः। श्वस्शब्द उत्तरपदार्थप्रशंसामाशीर्विषयमाह। मयूरव्यंसकादित्वात् समासः—श्वोवसीयसम्, श्वःश्रेयसम्, ते भूयात्।

The words वसीयस् and श्रेयस् coming after श्वस् and final in a compound require अच्। वसु means auspicious; with ईयसुन् attached we get—more auspicious, very auspicious. श्वस् indicates that the auspiciousness expressed by the उत्तरपद is a matter for hope only and not an accomplished fact yet. The समास itself is guided by 'मयूरव्यंसकादयश्च' (754—2. 1. 72). Thus श्वः etc., may the future be auspicious to you.

मित—। 'श्वस्' इत्यव्ययं कल्याणार्थकम्, इह तु भविष्यत्कालमात्रवचनम् ॥ 'वसु' प्रशस्तम्। अतिशयेन वसु 'वसीयस्' प्रशस्ततरम् ॥ एवं 'प्रशस्यम्' प्रशस्तम्। अतिशयेन प्रशस्यम् इति प्रशस्यस्य श्रादेशे (२००६—५।३।६०) 'श्रेयस्' प्रशस्ततरम् ॥ श्वस्शब्दात् परौ यौ वसीयस्-श्रेयस्-शब्दौ तदन्तात् समासात् अच् स्यात् इत्यर्थः ॥ वसीयः प्रशस्ततरं श्वः श्वोवसीयसम्। मयूरव्यंसकादित्वाद्विशेषणस्य परनिपातः ॥ एवं श्वःश्रेयसम् ॥ उत्तरपदार्थश्चासौ प्रशंसा च इति कर्मधारयः। इह समासे 'प्रशंसा' प्रशस्तता इति भावः, 'उत्तरपदस्य'—'वसीयः' इत्यस्य 'श्रेयः' इत्यस्य वा—'अर्थः'। स च अर्थः 'आशिषो विषयः' इति 'श्वस्शब्द आह'। वृत्तिकारस्तु 'आशीर्विषयाम्' इति पठति, तत्र आशीर्विषयो यस्या इति बहुव्रीहिर्बोध्यः। उभयत्र आशिषि लिङ् प्रयोज्यः ॥ तपःसमाधिना अपरोक्षमपि साक्षाद्दृष्ट्वा यदा तत्त्वं कथयति तदा श्वःश्रेयसी भविष्यति इति नैव अच् ॥

८४९ । अन्ववतप्ताद्रहसः ॥ ५।४।८१ ॥

दी— ॥ अनुरहसम् । अवरहसम् । तप्तरहसम् ।

रहस् final in a compound and coming after अनु, अव and तप्त requires अच्। Thus अनु etc., suitable privacy; अव etc., absence of privacy; तप्त etc. extreme privacy.

मित— । अनु, अव, तप्त, इत्येतेभ्यः परो यो रहस्शब्दः तदन्तात् समासात् अच् स्यात् ॥ रहस्-शब्दो विजनमाह अप्रकाशं वा । अनुगतं रहः, अनुगतं रहः अस्मिन्निति वा विग्रहः । एवमवहीनं रहः इत्यादि विग्रहः ॥ तप्तमत्यन्तमिति हरदत्तः, असह्यमनभिमतं वा ॥

८५० । प्रतेरुरसः सप्तमीस्थात् ॥ ५।४।८२ ॥

दी— । उरसि प्रति प्रत्युरसम् । विभक्त्यर्थेऽव्ययीभावः ।

उरस् final in a compound and coming after प्रति requires अच् if it is compounded in the सप्तमी विभक्ति। Thus प्रत्युरसम् on the chest. This is an अव्ययीभाव in the sense of a case-ending.

मित— । सप्तम्यां तिष्ठति इति 'सप्तमीस्थ' सप्तम्यन्तमित्यर्थः । तस्मात् 'उरसः' अच्-प्रत्ययो भवति इत्यर्थः ॥ 'सप्तमीस्थात्' किम् ? प्रतिगतमुरः प्रत्युरः ॥

८५१ । अनुगवमायामे ॥ ५।४।८३ ॥

दी— । एतन्निपात्यते दीर्घत्वे । अनुगवं यानम् । "यस्य चायामः" (६७०—२।१।१६) इति समासः ।

When 'length' is indicated, अनुगव is got with अच् by निपातन in this rule. Thus अनु etc., the cart is as long as the bullock. The समास is अव्ययीभाव by "यस्य—" (670—2. 1. 16).

मित—। गोदेर्थं सदृशदेवं विशिष्टमित्यर्थे ;अव्ययीभावे अनुगो इति स्थिते अव्यादेव निपातनादच्। सुप्रत्ययस्य अभाव: ॥

८५२। द्विस्तावा त्रिस्तावा वेदि: ॥ ५।४।८४ ॥

**टी—॥ अच् प्रत्यय: टिलोप: समासश्च निपात्यते। यावती प्रकृतौ वेदि: द्विगुणा त्रिगुणा वा अश्वमेधादौ। तत्रेदं निपातनम्। 'वेदि:' इति किम्? द्विस्तावती त्रिस्तावती रज्जु:।**

The words द्विस्तावा and त्रिस्तवा are got by निपातन in this rule if they refer to an altar. The निपातन is for समास, अच्प्रत्यय and टिलोप। प्रकृति is a sacrifice in which subsidiaries are all ordained. The altar, as directed there, is doubled or trebled in अश्वमेध and other sacrifices. This निपातन refers to such altars. Thus द्वि: तावती being compounded gives द्वि: तावती अच्=द्विस्तावत् अच् by पुंवद्भाव=द्विस्ताव् अ by टिलोप=द्विस्तावा with टाप् attached. Similarly त्रिस्तावा।

मित—। द्विस्तावा इति त्रिस्तावा इति च निपात्यते वेदिश्चेदभिधीयते। इह 'द्वि:' इत्यस्य 'त्रि:' इत्यस्य वा सुजन्तस्य तावती इत्यनेन समास:। तावतीशब्दश्च वेद्या विशेषणम्। तत् परिमाणं यस्या वेद्या: सा तावती वेदि: ॥ "द्वित्रिचतुर्भ्य: सुच्" (२०८६—५।४।१८) इति गणनायां सुच्प्रत्यय उक्त:। 'द्वि: तावती' इति वाक्ये गणनक्रिया न दृश्यते, द्वि: इत्यस्य तयैव क्रियया सामर्थ्यं न तु 'तावती' इत्यनेन, समासश्च न प्राप्नोति। तदाह 'समासश्च निपात्यते' इति ॥ लब्धे समासे अच्प्रत्ययो निपात्यते। द्विस्तावती अच् इति स्थिते भसंज्ञाया "भस्याढे—" (८३६, वा) इति पुंवद्भावे द्विस्तावत् अच् इति। ततष्टिलोपो निपात्यते—द्विस्ताव् अ टाप् द्विस्तावा ॥ एवं त्रिस्तावा ॥ "यत्र सकलाङ्गोपदेश: सा प्रकृति:" इति नागेश:। ज्योतिष्टोमादय: प्रकृति:। अश्वमेधादयो विकृति:। प्रकृतौ यत् वेदिपरिमाणं तदेव विकृतौ द्विरावर्त्यते त्रिरावर्त्यते वा ॥ वेद्या अभावे न निपातनं तेन न समास:। तत् असमस्तं प्रत्युदाह्रियते द्विस्तावती इत्यादि ॥

८५३ । उपसर्गादध्वनः ॥ ५।४।८५ ॥

टी—। प्रगतोऽध्वानं प्राध्वो रथः ।

अध्वन् final in a compound and coming after a particle of the प्रादि class requires अच् । Thus प्राध्वः etc. the chariot has taken the road.

मित—। उपसर्ग इत्यनेन प्रादिरुपलक्ष्यते प्रादेः परो यः अध्वन्-शब्दः तदन्तात् समासात् अच् स्यात् ॥ प्र अध्वन् अच् इति स्थिते टिलोपः ॥

८५४ । न पूजनात् ॥ ५।४।६९ ॥

टी । पूजनार्थात् परेभ्यः समासान्ता न स्युः । सुराजा । अतिराजा । स्वतिभ्यामेव, नेह—परमराजः । 'पूजनात्' किम् ? गामतिक्रान्तः अतिगवः । "बहुव्रीहौ सक्थ्यक्ष्णोः—" (८५२—५।४।११३) इत्यतः प्रागेवायं निषेधः । नेह—सुसक्थः, स्वक्षः ।

No समासान्त is attached if the उत्तरपद comes after a word implying appreciation. Thus सुराजा, a good king, without the expected टच् ( 788 ) ; similarly अति etc., a mighty king. The prohibition operates only when the उत्तरपद is after सु or अति, but not in cases like परम etc., the foremost king. Why say पूजनात् ? Witness अतिगव, bigger than a cow, with टच् ( 729 ). The prohibition is in respect of rules given before "बहुव्रीहौ—" (852). Thus सुसक्थ, having fine thighs ; स्वक्ष, having fine eyes.

मित—। 'उत्तरपदे' इत्यस्ति, 'समासान्ताः' इति च । तस्य पञ्चम्या विपरिणामः । पूजनात् परं यत् उत्तरपदं तस्मात् समासान्ता न इति मिलितोऽन्वयः । तदाह 'पूजनार्थात् परेभ्यः' इत्यादि ॥ सुराजा इत्यत्र "राजाहः—" (७८८—५।४।९१ ) इति प्राप्तष्टच् प्रतिषिध्यते । एवं अतिराजा इति ॥ 'स्वतिभ्यामेव' इति

तु "पूजायां स्वतिग्रहणं कर्त्तव्यम्" इति वार्त्तिकस्यानुवादः ॥ 'अतिगवः' इत्यत्र "गोरतद्धित—" (७२८—५।४।९२) इति टच् ॥ "अतः प्रागेवायम्" इत्यादि च "प्राग्बहुव्रीहिग्रहणञ्च कर्त्तव्यम्" इतिवार्त्तिकस्यानुसरणम् ॥

८५५। किमः क्षेपे ॥ ५।४।७० ॥

टी—। क्षेपे यः किंशब्दः ततः परं यत् तदन्तात् समासान्ता न स्युः। कुत्सितो राजा किंराजा। किंसखा। किंगौः। 'क्षेपे' किम्? किंराजः। किंसखः। किं गवः।

No समासान्त is attached if the उत्तरपद comes after the word किम् in a derogatory sense. Thus किंराजा etc., without the usual टच्, the sense being 'a despicable king' etc. Why say क्षेपे? Witness किंराजः etc., with टच् in the sense of 'which king' or 'king of whom' etc., किम् implying a mere query without derogation.

मित—। 'उत्तरपदे' इत्यस्ति 'समासान्ताः' इति च। 'न' इति चानुवर्त्तते। 'किमः' इति पञ्चमी। 'क्षेपे' इति 'किमः' इत्यस्य विशेषणम्। तदाह 'क्षेपे यः' इत्यादि। 'ततः परं यत्' इत्यत्र यत् उत्तरपदम् इति बोध्यम् ॥ किंराजा इत्यादिषु क्षेपे किमित्यव्ययम्। "किं क्षेपे" (२४७—२।१।६४) इति समासः किंशब्दस्य पूर्वनिपातश्च। टजभावः ॥ किंराजः इत्यादिषु कोराजा इति विग्रहः केषां राजा इति वा इति टीकाकृतः। षष्ठीतत्पुरुष एव युक्ततरः प्रतिभाति ॥ कर्मधारये तु 'कः' इत्यस्य विधेयत्वादसमासो ज्यायान्। इह 'किम्' इत्यनव्ययम्। निन्दाभावात् टच् ॥

८५६। नञस्तत्पुरुषात् ॥ ५।४।७१ ॥

टी—। समासान्तो न। अराजा। असखा। 'तत्पुरुषात्' किम्? अधुरं शकटम्।

No समासान्त is attached if in a तत्पुरुष the उत्तरपद comes after

नञ्। Thus अराजा, no king, etc. Why say तत्पुरुषात्? Witness अधुरम् etc., a cart without a yoke, where we have the usual अ after a बहुव्रीहि।

मित—। 'उत्तरपदे' इत्यस्ति 'समासान्ताः' इति च। 'न' इति चानुवर्तते। 'नञः' इति पञ्चमी। उत्तरपदे नञः परतः सति तत्पुरुषात् समासान्तो न इत्यन्वयः। नञ्तत्पुरुषान्न समासान्ता इत्यर्थः॥ अधुरं शकटमित्यत्र बहुव्रीहिरिति भवत्येव समासान्तः॥

८५७। पथो विभाषा॥ ५।४।७२॥

दी—। नञ्पूर्वात् पथो वा समासान्तः। अपथम्—अपन्थाः। 'तत्पुरुषात्' इत्येव। अपथो देशः। अपथं वर्त्तते।

The समासान्त is optional in a नञ्तत्पुरुष if पथिन् is in the उत्तरपद। Thus अपथम् etc., a bad road. The option is allowed in a तत्पुरुष only. Witness the compulsory समासान्त in अपथः etc., a trackless tract, and in अपथम् etc., there is no road here.

मित—। 'नञः' इत्यादि सर्वमनुवर्तते। नञ्पूर्वात् तत्पुरुषात् पथिन् शब्दान्तात् समासान्तो वा स्यात्॥ प्रतिषेधविकल्पोऽयम्। सति प्रतिषेधे अपन्थाः, असति—अपथम्। "अपथं नपुंसकम्" (८१५—२।४।३०) इति क्लीबत्वम्, "पथः संख्याव्ययादेः" (८२१, वा) इति वा॥ प्रतिषेधस्तत्पुरुषे एव नान्यत्र। विकल्पोऽपि तत्रैव अन्यत्र तु नित्यः समासान्तः। 'अपथो देशः' इति बहुव्रीहौ समासान्तः, 'अपथं वर्तते' इति चावार्थेऽव्ययीभावे॥

---

# अथालुक्समासः

८५८। अलुगुत्तरपदे॥ ६।३।१॥

दी—। अलुगधिकारः प्रागानङः। उत्तरपदाधिकारस्तु आपादसमाप्तेः।

अलुक् and उत्तरपदे now continue to dominate over the rules about to be enunciated. अलुक् continues up to the rule "आनङ्—" (921—6. 3. 25) and उत्तरपदे to the end of the section.

मित—। न लुक् अलुक्। प्रसज्यप्रतिषेधः। उत्तरपदशब्दः समासस्य चरमावयवे रूढ़ः। 'आनङ्' इति "आनङ् ऋतो—" (९२१) इति लक्ष्यते॥

८५८। पञ्चम्याः स्तोकादिभ्यः॥ ६।३।२॥

टी—। एभ्यः पञ्चम्या अलुक्स्यादुत्तरपदे। स्तोकान्मुक्तः। एवमन्तिकार्थदूरार्थकृच्छ्रेभ्यः। 'उत्तरपदे' किम्? निष्क्रान्तः स्तोकात् निःस्तोकः।

The fifth case-ending, after कृच्छ्र and words meaning little, far or near, is not elided in a compound when an उत्तरपद follows. Thus स्तोकान् etc., easily released, retains पञ्चमी in स्तोक though it is a compound. Similarly in the case of कृच्छ्र etc. Why say उत्तरपदे? Witness निःस्तोकः in the sense 'easily come out' with the पञ्चमी in स्तोक elided as usual.

मित—। स्तोकान्मुक्त इत्यत्र "सुपो धातु—" (६५०—२।४।७१) इति पञ्चम्याः प्राप्तो लुक् निषिध्यते॥ "स्तोकान्तिक—" (७०१—२।१।३९) इति सूत्रोक्तानि स्तोकान्तिकदूरार्थकृच्छ्राणि स्तोकादयः। तथाच अल्पान्मुक्तः। अन्तिकादागतः—अभ्यासादागतः। दूरादागतः—विप्रकृष्टात्पलायितः। कृच्छ्रान्मुक्तः इत्यादपि॥ 'उत्तरपदे' इति उत्तरपदे परे इत्यर्थः। तथाच निःस्तोकः इत्यत्र स्तोकात् परा अपि पञ्चमी, उत्तरपदं किञ्चित् परतो नास्तीति, लुप्यते एव॥ स्तोकाभ्यां मुक्तः स्तोकेभ्यो मुक्तः इत्यादि द्विवचनबहुवचनान्तं नेदोदाहरणम्। तत्र समास एव नास्ति, कुतो तावदलुक्। "स्तोकाभ्यां मुक्तः स्तोकेभ्यो मुक्त इति विगृह्य स्तोकान्मुक्त इत्येव यथा स्यात्... द्विबहुष्वसमासः...अनभिधानात्" इति पूर्वसूत्रे भाष्यम्॥

टी—। "ब्राह्मणाच्छंसिन उपसंख्यानम्" (वार्त्तिक)। ब्राह्मणे

विहितानि शस्त्राणि उपचारात् ब्राह्मणानि। तानि शंसतीति ब्राह्मणाच्छंसी ऋत्विग्विशेषः। द्वितीयार्थे पञ्चमी उपसंख्यानादेव।

The word ब्राह्मणाच्छंसी has अलुक् of पञ्चमी by निपातन in this Varttika. Laudatory formulæ that appear in sections of the Vedas known as Brahmanas and have to be muttered low are here by transference of epithet themselves spoken of as Brahmanas. ब्राह्मणाच्छंसी is a priest who mutters them. The पञ्चमी is in the sense of द्वितीया and defended by निपातन in this very Varttika.

मित—। 'उपसंख्यानं' गणनम्, पञ्चम्या अलुग्विधौ इति शेषः। ब्राह्मणशब्दं विवृणोति—ब्राह्मणं वेदभागविशेषः। तत्र देवानां गुणकीर्तनानि विहितानि। तेषु यानि गेयानि तानि स्तोत्राणीत्युच्यन्ते, इतराणि च शस्त्राणीति। इह ब्राह्मणाच्छंसिन्शब्दे ब्राह्मणे विहितानि शस्त्राण्येव उपचारात् ब्राह्मणानीत्युच्यन्ते। यो हि ऋत्विक् तानि ब्राह्मणानि शंसति स ब्राह्मणाच्छंसी॥ 'द्वितीयार्थे पञ्चमी' इति कर्मणि पञ्चमी इत्यर्थः, सापि इहैव निपातनात्॥ 'तानि शंसति' इति तु अर्थकथनं न विग्रहः। विग्रहे सति "सुप्यजातौ—" (२९८८—)इति णिनिः स्यात्। तदा तु "तत्पुरुषे कृति—" (९७२—६।३।१४) इत्येव हि बहुलग्रहणात् अलुक् सिद्धं स्यात्, इहोपसंख्यानस्य व्यर्थं भवेत्॥ हरदत्तस्तु द्वितीयार्थे पञ्चमी स्यादित्येव उपसंख्यानं मन्यते। तच्च भाष्यविरुद्धम्। तत्र हि "पञ्चमीप्रकरणे ब्राह्मणाच्छंसिन उपसंख्यानम्" इति स्थितम्। 'पञ्चमी प्रकरणे' इत्युक्तं न 'पञ्चमीविधौ' इति। प्रकरणञ्च अलुक एव। तदलुगेवोपसंख्यायते। तथा च द्वितीयार्थे पञ्चमी इत्येतदर्थम् "अन्यार्थे च" इति वार्तिकान्तरमुपन्यस्य उक्तम् "अन्यार्थे चैषा पञ्चमी द्रष्टव्या" इति। अतः [illegible] सः "अथवा युक्त एवात्र पञ्चम्यर्थः" इति। यदि युक्ता पञ्चमी किमन्यदिह निपात्यते इति तस्याः पञ्चम्या लुगभावात्। तदिह 'सुप् सुपेति समासः' इति नागेशोक्तमेव न्याय्यः॥ अथवा शंसतीति शंसी। आवश्यके णिनिः। ब्राह्मणानि शंसी इति द्वितीयया विग्रहः, सुप्सुपेति समासः। इयं तु यदा घटकपदयोरन्तर्भावः तदा

आञ्जनाच्छंसो इति द्वितीयार्थे पञ्चमी तस्याश्चालुक्। "अकेनोर्भविष्यत्—" (६९८-२।३।७०) इति द्वितीया ॥

८६०। ओजःसहोम्भस्तमसस्तृतीयायाः ॥ ६।३।३ ॥

दी—। ओजसाकृतम्। इत्यादि।

The तृतीया after ओजस् सहस्, अम्भस् तमस् does not elide when an उत्तरपद follows. Thus ओजसा etc., forcibly done, etc.

मित—। ओजस्, सहस् अम्भस्, तमस् इत्येतेभ्यः पूर्वपदेभ्यः परस्तृतीयाया लुक् न भवति उत्तरपदे सति॥ ओजसाकृतम्, अम्भसाकृतम्, तमसाकृतम्। "कर्तृकरणे—" (६९४—२।१।३२) इति समासः॥ पूर्वपदेभ्यः किम्? सततनैश-तमोवृतम्। 'तमस्' इतीह न पूर्वपदम् अतो लुगेव इति हरदत्तादयः। भट्टोजिस्तु मनोरमायामाह—इत्थिन्त्वम्। तन्यते इति वृतम्। नैशतमसो वृतम्।... (ततः) सततं नैशतमोवृतं यस्मिन् इति।

दी—। "अञ्जस उपसंख्यानम्" (वार्त्तिक)। अञ्जसा-कृतम्, आर्जवेन कृतमित्यर्थः।

अञ्जस् has to be included in the list. Thus अञ्जसा etc. honestly done.

मित—। प्राग्वत् समासः।

दी—। "पुंसानुजो जनुषान्ध इति च" (वार्त्तिक) यस्याग्रजः पुमान् स पुंसानुजः। जनुषान्धो जात्यन्धः।

The two words पुंसानुजः and जनुषान्धः have to be taken as अलुक् compounds of तृतीया। पुंसानुज is one who is preceded by a brother in birth; जनुषान्ध is blind from birth.

मित—। पुंसानुजो जनुषान्ध इति च उपसंख्यानम् इति पूरणीयम्॥ पुंसा हेतुना अनुजः। जनुषा जन्मना हेतुना अन्धः। उभयत्र हेतौ तृतीया। सुप्-सुपेति समासः॥

८६१ । मनसः संज्ञायाम् ॥ ६।३।४ ॥

टी— । मनसागुप्ता ।

The तृतीया in मनस् is not elided when an उत्तरपद follows if the compound is used as a proper name. Thus मनसागुप्ता ।

मित— । मनसः परतस्तृतीयायाः संज्ञायामलुग्भवति उत्तरपदे ॥ 'संज्ञायां' किम् ? मनोगुप्ता ।

८६२ । आज्ञायिनि च ॥ ६।३।५ ॥

टी— । 'मनसः' इत्येव । मनसा आज्ञातुं शीलमस्य मनसाज्ञायी ।

The तृतीया is retained also when आज्ञायिन् follows. This too is of मनस् । Thus मनसा etc, one who communicates his commands mentally.

मित— । इहापि उपपदतत्पुरुषः परिहर्त्तव्यः । 'मनसा आज्ञातुम्' इत्यादि व्याख्यानमात्रं न विग्रहः ॥ आज्ञातुं शीलमस्य आज्ञायी । सोपसर्गे णिनिः । मनसा आज्ञायी, सुपसुपेति समासः ॥

८६३ । आत्मनश्च ॥ ६।३।६ ॥

टी— । आत्मनस्तृतीयाया अलुक् स्यात् ।

The तृतीया after आत्मन् is not elided when an उत्तरपद follows.

टी— । "पूरण इति वक्तव्यम्" ( वार्त्तिक ) । पूरण-प्रत्ययान्ते उत्तरपदे इत्यर्थः आत्मनापञ्चमः । "जनार्दनस्त्वात्म-चतुर्थ एव" इति बहुव्रीहिर्बोध्य । 'पूरणे किम् ? आत्मकृतम् ।

Add पूरणे after आत्मनश्च in the rule. The sense then becomes —The तृतीया after आत्मन् is not elided if an ordinal number follows as an उत्तरपद । Thus आत्मना etc, fifth counting himself. In "जनार्दनः—" the compound आत्मचतुर्थः is a बहुव्रीहि so आत्मन् is

compounded in the प्रथमा । Why say पूरणे ? Witness आत्मकृतम्, personally done.

मित—। 'पूरणे' इति सूत्रे वक्तव्यम् । "आत्मनश्च पूरणे" इति सूत्रं कर्त्तव्यमित्यर्थः । एतदेव वृत्तिकारस्य सूत्रम् ॥ 'उत्तरपदे' इत्यस्ति । 'पूरणे उत्तरपदे' इत्यस्य पूरणशब्दे उत्तरपदे इति तु नार्थः । "अपूरणीप्रियादिषु" (८३१—६।३।३४) "अप् पूरणीप्रमाण्योः" (८३२—५।४।११६) इत्यादिष्विव इहापि 'पूरणे' इत्यस्य पूरणप्रत्ययान्ते इत्यर्थः ॥ आत्मनापञ्चम इति हेतुतृतीयायाः सुप्सुपेति समासः । "जनार्दनस्तु—" इत्यत्र न हि 'आत्मना चतुर्थः' इति तृतीया लुप्ता, किन्तु आत्मा चतुर्थो यस्य इति बहुव्रीहौ प्रथमाया लोपः ॥

८९४ । वैयाकरणाख्यायां चतुर्थ्याः ॥ ६।३।७ ॥

टी—। 'आत्मनः' इत्येव । आत्मनेपदम् । आत्मनेभाषा । तादर्थ्ये चतुर्थी । 'चतुर्थी' इति योगविभागात् समासः ।

चतुर्थी after आत्मन् is not elided in technical names in use with Grammarians. Thus आत्मनेपदम् etc. The चतुर्थी is तादर्थ्य । The समास is by योगविभाग of चतुर्थी from the rule चतुर्थी "तदर्थ—" (698—2.1. 36).

मित—। 'आत्मनः' इति पूर्वसूत्रादनुवर्तते तदाह—'आत्मनः इत्येव' इति ॥ वैयाकरणानां या आख्या यया आख्यया वैयाकरणा व्यवहरन्ति तत्र स्थिता आत्मन्-शब्दात् या चतुर्थी तस्या उत्तरपदे परतो न लुक् इत्यर्थः ॥ आत्मने फले फलभिप्राये इत्यर्थः, पदम् आत्मनेपदम् ॥ एवम् आत्मने भाषा आत्मनेभाषा आत्मनेपदमित्यर्थः ॥ तादर्थ्ये चतुर्थी । सा च प्रकृतिविकारभावे एव समस्यते । इह तु स नास्ति । तदाह 'योगविभागात् समासः' इति (६९८)। अयञ्च योगविभागो भाष्ये न दृश्यते तत् सुप्सुपेति समासो युक्तः इति नागेशः ॥

८९५ । परस्य च ॥ ६।३।८ ॥

टी—। परस्मैपदम् । परस्मैभाषा ।

चतुर्थी after पर also is not elided from technical names used by Grammarians. Thus परस्मै etc.

मित—। परशब्दात् या चतुर्थी वैयाकरणाख्यायां प्रयुज्यते तस्या उत्तरपदे न लुक् इत्यर्थः। सुप्सुपेति समासः॥

८६६। हलदन्तात् सप्तम्याः संज्ञायाम्॥ ६।३।८५॥

टी—। हलन्तात् अदन्ताच्च सप्तम्या अलुक् संज्ञायाम्। त्वचिसारः।

The सप्तमी is not elided, from words ending in a consonant or अ, when an उत्तरपद follows, if the compound is a proper name. Thus त्वचि etc., one whose strength is in the skin, i. e., the bamboo.

मित—। त्वचि वल्कौ सारः यस्य त्वचिसारो वंशः। "सप्तमी—" (८९८—२।२।३५) इति ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः॥

८६७। गवियुधिभ्यां स्थिरः॥ ८।३।८५॥

टी—। आभ्यां स्थिरस्य सस्य षः स्यात्। गविष्ठिरः। अत्र 'गवि' इति वचनादेव अलुक्। युधिष्ठिरः। अरण्येतिलकः। अत्र "संज्ञायाम्" (८२१—२।१।४४) इति सप्तमीसमासः।

The स of स्थिर coming after गवि and युधि in a compound changes into ष। Thus गविष्ठिरः। Here the statement that स्थिर comes after गवि is enough to infer that the सप्तमी in गवि is not elided. Similarly युधि etc., the eldest of the Pandavas; अरण्ये etc., wild Tilakas. In these the समास is by the rule "संज्ञायाम्" (721).

मित—। 'स्थिरः' इति षष्ठ्यर्थे प्रथमा, अतएव 'स्थिरस्य सस्य' इति॥ गवि वचि स्थिरः गविष्ठिरः सप्तमन्तो। संज्ञा कस्यचित्। इह "इण्कोः" (२११—

८।३।५७ ) इति षत्वं "सात्पदाद्योः" ( २१२२—८।३।१११ ) इति निषिद्धम्। अतः अतिप्रसङ्गमाह "गवियुधिभ्याम्—" इति ॥ अलौकिके विग्रहे गो ङि स्थिर सुप् इति स्थिते ङेर्लुक् प्राप्तः। स च अन्तरङ्गमपि ङिप्रयुक्तं गो-शब्दे अवादेशं बाधते "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते" इति वचनात्। ततो हलः परो ङि न भवति, तेन "हलदन्तात्—" इति अलुक् न प्राप्नोति। तदाह गवि इति वचनादेव अलुक्" इति। लुकि सति 'गवि' इत्यतः परं 'स्थिरः' इति न, किन्तु 'गो' इत्यतः परम् ॥ 'युधिष्ठिरः' इति हलः परो ङिस्तेन अलुक् संज्ञायाम् ॥ अरण्येतिलक इति अकारात् परो ङिस्तेन अलुक् संज्ञायाम्।

टी—। "हृद्द्युभ्याञ्च" (वार्त्तिक)। हृदिस्पृक्। दिविस्पृक्।

सप्तमी after हृद् and दिव् is not elided when an उत्तरपद follows.

मित—। 'हृद्' 'दिव्' इत्येताभ्यां परा या सप्तमी तस्या अलुग्भवति उत्तरपदे परे। हृदयं स्पृशति इत्यर्थे कर्मणि सप्तमी। ततो ङौ हृदादेशे ( २२८—६।१।६३ ) हृदिस्पृक्। "स्पृशोऽनुदके क्विन्" इति क्विन्। स च कर्मोपपदे एव। तत् अलुग्विधिरेवेह कर्मणि सप्तम्या ज्ञापकः ॥ एवं दिवं स्पृशति इत्यपि ॥

८६८। कारनाम्नि च प्राचां हलादौ ॥ ६।३।१० ॥

टी—। प्राचां देशे यत् कारनाम तत्र हलादावुत्तरपदे हलदन्तात् सप्तम्या अलुक्। मुकुटेकार्षापणम्। दृषदिमाषकः। पूर्वेण सिद्धे नियमार्थम्—कारनाम्न्येव, प्राचामेव, हलादावेव इति ॥ 'कारनाम्नि' किम्? अभ्यर्हितपशुः। कारादन्यस्येतत् देयस्य नाम ॥ 'प्राचाम्' किम्? यूथपशुः ॥ 'हलादौ' किम्? अविकटोरणः ॥ 'हलदन्तात्' किम्? नद्यां दोहो नदीदोहः ॥

The सप्तमी after हलन्त and अदन्त words is not elided if the उत्तरपद begins with a consonant and the compound is the designation of some assessment in Eastern countries. Thus

मुकुटे etc., cowries for wearing a diadem ; दृषदि etc., the māsha of gold for a stone building. As the अलुक् is already available, the rule serves to attach certain restrictions in designations of assessments only, in eastern countries only, and only where the उत्तरपद begins with a consonant. Why say कारनाम्नि ? Witness अभ्यर्हित etc., the animal in honour of some august personage which, though a due, is not an assessment and therefore drops the सप्तमी although the practice prevails in eastern countries and the उत्तरपद begins with a consonant. Why say प्राचाम् ? Witness यूथपशु, the cow, goat etc. out of a herd, which is a custom in countries other than eastern, and therefore drops the सप्तमी though it is an assessment and the उत्तरपद begins with a consonant. Why say हलादौ ? Witness अवि etc., the sheep out of the herd, where the उत्तरपद does not begin with a consonant and therefore the सप्तमी is dropped although the compound designates an assessment in eastern countries. Why say हलदन्तात् ? Witness नदीदोह, the milking at the brink of the river, which is an assessment in eastern countries and has the उत्तरपद beginning with a consonant, yet drops the सप्तमी because the पूर्वपद does not end in a consonant or the short अ ।

मित—। 'हलदन्तात्' इत्यादि पूर्वसूत्रं सर्वमनुवर्तते ॥ राजग्राह्यो भागः करः। कर एव कारः, प्रज्ञादित्वादण् स्वार्थे। कारस्य करविशेषस्य नाम संज्ञा कारनाम, तस्मिन्। 'संज्ञायाम्' इत्यनुवर्तमानेऽपि नामग्रहणं स्पष्टार्थम् ॥ प्राग्देशे प्रजासु विवाहे कार्षापणमितम् [illegible] दत्त्वा राजानुमतिं लभ्यं। वरस्य मस्तके मुकुटः आरोप्यते। तदिदं देयं मुकुटेकार्षापणमित्युच्यते ॥ शिलामयं वासभवनं चेत् कश्चित् प्राग्देशे प्रजासु कर्तुमिच्छति स माषमितं सुवर्णं राज्ञे दत्त्वा तदनुमतिं लभते। स हि कारो दृषदिमाषक इत्युच्यते ॥ 'नियमार्थम्' इति विविधं नियमार्थं दर्शयति

—'कारनाम्नि च' इत्यादि। एतच्चितयसन्निपाते एव नियमः प्रवर्त्तते नान्यथा॥ एवम् एकैकस्य अभावे नियमाभावं दर्शयति॥ 'अभ्यर्हितपशुः' इति यष्टागताय पूज्याय सम्भावनार्थं यः पशुर्दीयते सः। अधिकरणविवक्षया सप्तमी। नेदं कारनाम इति प्राचामपि हलादावपि लुगेव॥ गोष्ठेषु यूथानि सञ्चारयितुं राजानुमतिरेकं पशुं दत्त्वा लभ्यते स यूथपशुरित्युच्यते। स च उदग्देशे कारः न प्राचाम् इति कारनाम्न्यपि हलादावपि लुगेव॥ अविः उरणस्य मेषपर्य्यायौ। अवीनां सङ्घातः अविकटः। संघाते कटच्प्रत्ययः (१८३०, वा)। अविकटे उरणः इति यूथपशुरिव व्याख्येयः। हलादित्वा-भावात् कारनाम्नि अपि प्राचामपि लुगेव॥ सर्वत्र हलदन्तादलुक्। नद्युत्तारणी नद्यामुत्तारणमूल्यं दुग्धम्। तदर्थं च ताः तदानीमेव दुह्यन्ते। स च दोहः कारः नदीदोह इत्युच्यते। तत्र हलदन्तत्वाभावात् सर्वेषामेव प्राचां वा उदीचां वा लुगेव॥

८६८। मध्याद्गुरौ॥ ६।३।११॥

दी—। मध्येगुरुः।

The सप्तमी after मध्य is not elided when गुरु is the उत्तरपद। Thus मध्येगुरु, heavy in the middle.

मित—। संज्ञायामिति निवृत्तम्। मध्यशब्दात् या सप्तमी तस्याः अलुक् स्यात् गुरुशब्दे उत्तरपदे॥ सुप्सुपेति समासः॥

दी—। "अन्ताच्च" (वार्त्तिक)॥ अन्तेगुरुः।

Also if the सप्तमी is after अन्त। Thus अन्तेगुरु, heavy at the end.

मित—। इहापि सुप्सुपेति समासः॥

८७०। अमूर्द्धमस्तकात् स्वाङ्गादकामे॥ ६।३।१२॥

दी—। कण्ठेकालः। उरसिलोमा। 'अमूर्द्धमस्तकात्' किम्? मूर्द्धशिखः। मस्तकशिखः। 'अकामे' किम्? मुखे कामोऽस्य मुखकामः।

The सप्तमी after हलन्त and अदन्त words denoting what are

technically known as स्वाङ्ग is retained when an उत्तरपद except काम follows and the सप्तमी is not after मूर्धन् or मस्तक। Thus कण्ठेकालः, dark in the throat ; उरसि etc., having a hairy chest. Why say अमूर्ध etc.? Witness मूर्ध etc.' having a tuft of hair on the head. Why अकामे? Witness मुख etc., having the wish expressed in the face.

मित—। हलदन्तादित्यस्ति। हलदन्तादकन्ताच्च मूर्धमस्तकवर्जितात् स्वाङ्गवाचकात् या सप्तमी तस्या अलुग्भवति कामशब्दभिन्ने उत्तरपदे॥ कण्ठेकाल: अस्य इत्यादि- सर्वत्र उदाहरणप्रत्युदाहरणेषु व्यधिकरणपदो बहुव्रीहिः॥ इह 'संज्ञायाम्' इत्यनु- वर्त्तते इति नागेशः। वृत्तिकारस्तु इमामनुवृत्तिं नेच्छति। तथा च तस्य मूर्धशिखः, मस्तकशिखः, मुखकामः, अचक्षौष्ठ, इत्यादीनि प्रत्युदाहरणानि। यदि संज्ञायामिति नानुवर्त्तेत 'हृदिस्पृक्' इत्यपि अनेनैव सिद्ध्येत। तदर्थं "हृद्युभ्यां च" (९९७ वा) इति वार्त्तिकं न स्यात् इति हि नागेशस्याशयः। तदर्थं वक्तव्यम्—"हलदन्तात्—", "कारनाम्नि—", "अमूर्धमस्तकात्—", इत्यादिषु यथाविहिता एव सप्तमी गृह्यते। 'हृदिस्पृक्' इत्यत्र तु न तथा। तत्र "अन्यार्थे चैषा सप्तमी द्रष्टव्या" इत्युक्तम्। एवं सूत्रैरप्राप्ता सप्तमी अप्राप्तेय अलुक् वार्त्तिकेन विधीयते। अकृते वार्त्तिके सप्तमी एव न सिध्यति कुतो लुक्? तस्मात् वृत्तिकारोक्त एव पक्षो ज्यायान्॥

९७१। बन्धे च विभाषा ॥६।३।१३॥

**टी—। हलदन्तात् सप्तम्या अलुक्। हस्तेबन्धः—हस्तबन्धः। 'हलदन्त—' इति किम्? गुप्तिबन्धः।**

The सप्तमी after हलन्त and अदन्त words is optionally elided when बन्ध follows as an उत्तरपद in a तत्पुरुष। Thus हस्ते &c., fetters in the hand. Why हलन्त &c.? Witness गुप्ति etc., confinement in a jail, which drops the सप्तमी।

मित—। बन्ध इति घञन्तम्। 'तत्पुरुषे' इत्युत्तरसूत्रादपकृष्यते। बन्धे उत्तरपदे हलदन्तात् सप्तम्या अलुक् वा तत्पुरुषे इत्यर्थः॥ बन्धनं बन्धः इति घञ्॥

ऋणे बन्धः इति विग्रहे अलुग्वा। बध्नातीति बन्ध इति पचाद्यचि तु "नेन्सिद्ध—" (९७७—६।३।१९) इत्यलुङ्निषेधे ऋणबन्ध इत्येकमेव रूपम्। एवं गिरौ गिरिषे इह घञि विभाषा॥ गुप्तौ कारायां बन्धः गुप्तिबन्धः॥ 'तत्पुरुषे' किम्? ऋणे बन्धः अस्य ऋणबन्ध इत्येव॥

९७२। तत्पुरुषे कृति बहुलम्॥ ६।३।१४॥

दी—। स्तम्बेरमः—स्तम्बरमः। कर्णेजपः—कर्णजपः। क्वचिन्न—कुरुचरः।

सप्तमी is dropped in a तत्पुरुष if the उत्तरपद is कृदन्त; but there is no uniformity in the matter. Thus स्तम्बे &c., an elephant; कर्णे &c., a spy, an intriguer. Sometimes there is no अलुक् as in कुरुचरः, one wandering among the Kurus.

मित—। बहुलग्रहणं व्यभिचारार्थम्। तत् "हलदन्तात्—" इति नेह सम्बध्यते। कृदन्ते उत्तरपदे तत्पुरुषे पूर्वपदस्थाया सप्तम्या बहुलमलुग्भवति॥ स्तम्बे कीचकगुल्मे शालिगुच्छे वा रमते इति विग्रहः। उपपदतत्पुरुषः। स्तम्बेरमः करी॥ कर्णे जपति निवेदयति इति विग्रहः। उपपदतत्पुरुषः। कर्णेजपः खलः॥ कुरुषु चरतीति लुगेव॥ सर्वमेतद्बहुलग्रहणाल्लभ्यते। हरदत्त आह—सर्वमेव अलुक्-प्रकरणमस्यैव प्रपञ्चः इति॥

९७३। प्रावृट्शरत्कालदिवां जे॥ ६।३।१५॥

दी—। प्रावृषिजः। शरदिजः। कालेजः। दिविजः। पूर्वस्यायं प्रपञ्चः।

सप्तमी after प्रावृष्, शरद्, काल and दिव् is not elided when ज follows as an उत्तरपद। Thus प्रावृषिजः &c. This is only a detail of the previous rule.

मित—। प्रावृष्, शरद्, काल, दिव् इत्येतेषां सप्तम्या अलुक् स्यात् तत्पुरुषे जशब्दे उत्तरपदे॥ 'ज' इति कृति डप्रत्ययान्तम्। तत् न हि विधानार्थमेतत् सूत्रं

किन्तु पूर्वसूत्रस्यायं विस्तरः। "तत्पुरुषे कृति—" इत्यस्यैव उदाहरणप्रदर्शनार्थमेवत्। तदाह 'पूर्वस्यायं प्रपञ्चः' इति ॥ बहुलग्रहणात् एषु अलुगेव ॥

८७४। विभाषा वर्षक्षरशरवरात् ॥ ६।३।१६ ॥

टी—। एभ्यः सप्तम्या अलुक् जे। वर्षेजः—वर्षजः। क्षरेजः—क्षरजः। शरेजः—शरजः। वरेजः—वरजः।

The सप्तमी after वर्ष, क्षर, शर, वर is retained optionally in a तत्पुरुष when ज follows as an उत्तरपद। Thus वर्षेजः &c. grown during rains; क्षरेजः etc., grown in water; शरेजः etc., grown among reeds; वरेजः etc, grown in a betel-grove.

मित—। 'जे' इत्यनुवर्तते। वर्षादीनां या सप्तमी तस्या वा अलुक् तत्पुरुषे जे उत्तरपदे ॥ अयमपि बहुलग्रहणाल्लभ्यते। एषु विकल्प एव ॥

८७५। घकालतनेषु कालनाम्नः ॥ ६।३।१७ ॥

टी—। सप्तम्या विभाषया अलुक् स्यात् ॥ घ। पूर्वाह्णेतरे—पूर्वाह्णतरे। पूर्वाह्णेतमे—पूर्वाह्णतमे ॥ काल। पूर्वाह्णेकाले—पूर्वाह्णकाले ॥ तन। पूर्वाह्णेतने—पूर्वाह्णतने ॥

The सप्तमी after designations of stages of time is retained optionally when तरप्, तमप्, ट्यु or ट्युल् follows or when काल follows as an उत्तरपद। Thus, when घ follows, पूर्वाह्णे etc., very early in the morning; when काल follows, पूर्वाह्णे etc, in the morning time; when तन follows, पूर्वाह्णे etc., during what happens in the morning.

मित—। 'कालनाम्नः' इति पञ्चमी। घ इति तरप्तमपौ। तन इति ट्युट्युलौ। कालनाम्नः परा या सप्तमी तस्या अलुग्वा घे परे, कालशब्दे उत्तरपदे, तने च परे ॥ अतिशयेन पूर्वाह्णे गच्छति इति सप्तम्यन्तयुक्तस्य पूर्वाह्णस्य प्रकर्षविवक्षायां

वत्प्रत्ययौ । तद्धितत्वात् प्रातिपदिकत्वम् । "सुपो धातुप्रातिपदिकयोः (६५०—२।४।७१) इति सप्तम्या नित्यलुक्प्रसक्ते वा अलुग्विधीयते ॥ एवं पूर्वाह्णकाले गम्यत इत्यादिष्वपि ॥ यत् पूर्वाह्णे भवं तस्मिन् प्रत्यये इत्यर्थे ट्युः ट्युल् वा तुट् च । आगमत्वात्: प्रसङ्गे विभाषा अलुक् ॥ सर्वत्र सामर्थ्यमपेक्ष्य सप्तमी सम्बध्यते ॥

८७६ । शयवासवासिष्वकालात् ॥ ६।३।१८ ॥

दो—। खेशयः—खशयः । ग्रामेवासः—ग्रामवासः । ग्रामेवासी—ग्रामवासी । हलदन्तादित्येव—भूमिशयः ।

The सप्तमी is optionally retained after words that do not mean some stage of time if the उत्तरपद is शय, वास or वासिन् । Thus खेशयः &c. The सप्तमी has to be after हलन्त or अदन्त words. Witness भूमि etc. which drops सप्तमी ।

मित—। कालवाचकवर्जितात् हलदन्तात् शब्दात् या सप्तमी तस्या वा अलुग्भवति शयशब्दे, वासशब्दे, वासिन्शब्दे च उत्तरपदे ॥

दो—। "अपो योनियन्मतुषु" (वार्त्तिक)। अप्सु योनिरुत्पत्तिर्यस्य सः अप्सुयोनिः । अप्सु भवः अप्सव्यः । अप्सुमन्तौ आज्यभागौ ।

The सप्तमी after अप् is retained when योनि is the उत्तरपद or यत् or मतुप् has to be attached. Thus अप्सु etc ; अप्सव्यः growing in water ; अप्सु etc. two shares of sacrificial offerings dedicated by pronouncing the word अप्सु ।

मित—। 'अपः' अप्शब्दादित्यर्थः । इह अप्शब्दस्य अर्थः अप्रधानम् । तेन 'अद्भ्यः' इति नोक्तम् । शब्दप्रधानत्वादेकवचनम् ॥ अप्शब्दात् परा या सप्तमी तस्य नित्यमलुक् योनिशब्दे उत्तरपदे, यति, मतुपि च कर्त्तव्ये ॥ अप्सव्य इति दिगादित्वात् । "ओर्गुणः" (८४०—६।४।१४६) इति गुणः । "वान्तो यि—" (३२—६।१।७९) इत्यवादेशः ॥ 'अप्सु' इत्यनुकरणशब्दः एतयोरस्ति इति अप्सुमन्तौ । ययोराज्यभागयोः प्रयुज्यमाने मन्त्रे 'अप्सु' इत्युच्चार्यते तौ इत्यर्थः । इह अनुकरणशब्दत्वात् सप्तम्या लुक्

नैव प्राप्नोति इति व्यर्थं वचनम् । अत इह 'मतिषु' इति युक्ततरः पाठः—अस्मतिरस्य अस्मतिः ॥ इह 'विभाषा' इति न सम्बध्यते ॥

९७७ । नेन्सिद्धबध्नातिषु च ॥ ६।३।१९ ॥

दी—। इन्नन्तादिषु सप्तम्या अलुक् न । स्थण्डिलशायी । साङ्काश्ये सिद्धः । चक्रबद्धः ।

The सप्तमी is not retained when सिद्ध, or some word with इन् attached, or some derivative of the root बन्ध is the उत्तरपद । Thus स्थण्डिल etc. sleeping on sacrificial ground; साङ्काश्य etc., attained salvation in the forest Samkasya; चक्र etc., tied to a wheel.

मित—। तत्पुरुषे इन्नन्ते, सिद्धशब्दे, बन्धधातुजे च शब्दे उत्तरपदे सप्तम्या अलुक् न । इह चक्रबन्ध इत्यपपाठः । घञन्तस्य बन्ध-शब्दस्य तत्पुरुषे विकल्पः उक्तः । अन्यस्य बन्धशब्दस्य विषये अलुकः प्राप्तिर्नास्ति कुतो निषेधः ? चक्रे बद्ध इति "साधनं कृता" इति भाष्योक्तेः समासः, सुप् सुपा वा ॥ "तत्पुरुषे कृति—"(९७२) इत्यनन्तरस्यायं निषेधः, न तु "अमूर्द्ध—" ( ९७० ) इत्यस्यापि, व्यवहितत्वात्तस्य ।

९७८ । स्थे च भाषायाम् ॥ ६।३।२० ॥

दी—। सप्तम्या अलुक् न । समस्थः । 'भाषायाम्' किम् ? कृष्णोऽस्याखरेष्ठः ।

The सप्तमी is not retained in ordinary lay writings when स्थ is the उत्तरपद । Thus समस्थः lying easy. Why say भाषायाम् ? Witness, in the Vedas आखरेष्ठ, with the सप्तमी retained, in कृष्णः etc.—his charioteer is dark.

मित—। तत्पुरुषे स्थशब्दे उत्तरपदे भाषायां सप्तम्या अलुक् न ॥ कथं तर्हि "कण्ठेस्थः कालोऽस्य" इति "अनेकम्—" (८३०—२।२।२४) इत्यत्र भाष्ये प्रयोगः ?

"अमूर्द्धमस्तकात्—" (९७०) इत्यस्य तु नायं निषेधः इतोऽग्रे प्राक् अतः कण्ठेस्थ इति भविष्यति ॥ आखरः अश्वशाला। तस्मिं स्तिष्ठतीति आखरेष्ठः सारथिः ॥

९७९। षष्ठ्या आक्रोशे ॥ ६।३।२१॥

दी—। चौरस्य कुलम्। 'आक्रोशे' किम्? ब्राह्मण-कुलम्।

षष्ठी is retained when an उत्तरपद follows if abuse is meant by the compound. Thus चौरस्यकुलम्, a thief's house. Why आक्रोशे? Witness ब्राह्मण etc., the house of a Brāhmana.

मित—। 'अलुगुत्तरपदे' इत्यस्ति। आक्रोशो गालिः। षष्ठ्या अलुक् उत्तरपदे परे आक्रोशे गम्यमाने इत्यर्थः ॥

दी—। "वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु" (वार्त्तिक)। वाचोयुक्तिः। दिशोदण्डः। पश्यतोहरः।

षष्ठी after वाच्, दिश्, पश्यत् is retained when युक्ति, दण्ड, हर respectively are the उत्तरपद। Thus वाचोयुक्तिः, reason for a statement; दिशः etc., punishment of a whole quarter; पश्यतः etc., one that will rob before one's eyes.

मित—। वाच्, दिश्, पश्यत् इत्येतेभ्यः परा या षष्ठी तस्या अलुक् यथाक्रमं युक्ति, दण्ड, हर इत्येतेषु उत्तरपदेषु इत्यर्थः ॥ वाचः प्रयुक्तस्य वाक्यस्य युक्तिः न्यायः वाक्यसमर्थनमित्यर्थः। षष्ठी शेषे ॥ दिशः लक्षणया दिग्विशेषवासिनां सर्वेषां दण्डः दण्डनम्। कर्मणि कृद्योगा षष्ठी ॥ पश्यतः पश्यन्तमनादृत्य हरः मोषकः। 'षष्ठी चानादरे" (६२५—२।३।३८) इति षष्ठी। सुप्सुपेति समासः ॥

दी—। "आमुष्यायणामुष्यपुत्रिकामुष्यकुलिकेति च" (वार्त्तिक)। अमुष्य अपत्यम् आमुष्यायणः। नड़ादित्वात् फक् (११०१) ॥ अमुष्यपुत्रस्य भाव आमुष्यपुत्रिका। मनोज्ञादित्वात् वुञ् (१७९८) ॥ एवमामुष्यकुलिका ॥

The षष्ठी is retained by निपातन in आमुष्यायण, आमुष्यपुत्रिका, आमुष्यकुलिका। Thus आमुष्यायण means 'son of the gentleman yonder,' फक् ( आयन ) is the affix here because अमुष्य is of the नडादि class आमुष्यपुत्रिका means 'the plight of the son of the gentleman yonder'; the affix is वुञ् ( अक ) in the feminine attached to अमुष्यकुल which is of the मनोज्ञादि class. Similarly आमुष्यकुलिका, 'the plight of the line or house of the gentleman yonder.'

मित—। आमुष्यायण, आमुष्यपुत्रिका, आमुष्यकुलिका इति त्रीणि अलुप्तषष्ठीकानि निपात्यन्ते॥ अमुष्य इति नडादिषु पठ्यते। अमुष्य अपत्यमिति फकि षष्ठ्या लोपे प्राप्ते अनेन अलुक्॥ अमुष्यपुत्र, अमुष्यकुल, इति मनोज्ञादिषु पाठः। वुञि क्रते षष्ठ्या अलुकि आमुष्यपुत्रक, आमुष्यकुलक इति। स्त्रियां टापि आमुष्यपुत्रिका, आमुष्यकुलिका॥ अमुष्य, अमुष्यपुत्र, अमुष्यकुल इति गणे पाठादेव षष्ठ्या अलुक् प्राप्यते। इह वार्त्तिके तस्यैव ज्ञापितस्यार्थस्य अनुवादः न हि अपूर्वं किञ्चिद्विधीयते॥

दी—। "देवानांप्रिय इति च मूर्खे" (वार्त्तिक)। अन्यत्र देवप्रियः।

The compound word देवानांप्रियः, idol of fools, retains the षष्ठी to mean a dullard; elsewhere देवप्रियः, beloved of the gods, with the षष्ठी dropped.

मित—। देव इति मूर्खपर्यायोऽपि इति कैयटाशयानुसारी भावः। देवानां मूर्खाणां प्रियः देवानांप्रियः॥ अन्यत्र देवशब्दस्य देवतार्थत्वे देवानां प्रियः देवप्रियः॥

दी—। "शेपपुच्छलाङ्गूलेषु शुनः" (वार्त्तिक)। शुनःशेपः। शुनःपुच्छः। शुनोलाङ्गूलः।

The षष्ठी after श्वन् is retained when शेप, पुच्छ, or लाङ्गूल is the उत्तरपद। Thus शुनःशेप, having the generative organ formed like that of the dog; शुनः etc., having a tail like that of the dog.

मित—। श्वन्-शब्दात् परा या षष्ठी तस्या अलुग्भवति। शेपशब्दे पुच्छशब्दे

लाङ्गुलशब्दे च उत्तरपदे ॥ शुनः शेपमिव उपस्थ इव शेपमस्य, शुनः पुच्छमिव पुच्छमस्य, शुनो लाङ्गुलमिव लाङ्गुलमस्य इत्यादि विग्रहः ॥ 'शेफ' इति 'शेफस्' इति च शेपशब्दस्य अर्थे दृश्यते ॥ ऋषिविशेषाणामेताः संज्ञा इति हरदत्तः ॥

दी—। "दिवश्च दासे" ( वार्त्तिक )। दिवोदासः।

The षष्ठी after दिव् is retained when दास is the उत्तरपद। Thus दिवोदास which is a proper name.

मित—। दिवोदास इति संज्ञाशब्दः। अवयवार्थ इह नास्ति ॥

९८०। पुत्रेऽन्यतरस्याम् ॥ ६।३।२२ ॥

दी—। षष्ठ्याः पुत्रे परे अलुग्वा निन्दायाम्। दास्याःपुत्रः—दासीपुत्रः। 'निन्दायाम्' किम्? ब्राह्मणीपुत्रः।

The षष्ठी is optionally retained when पुत्र is the उत्तरपद and the compound implies abuse. Thus दास्याः etc., son of a serf (harlot). Why say निन्दायाम्? Witness ब्राह्मणी etc. which drops the षष्ठी because it states a fact.

मित—। 'आक्रोशे' इत्यनुवर्त्तते। तदाह 'निन्दायाम्' इति ॥ दास्याः पुत्रः इति निन्दामात्रं न हि तत्त्वतोऽसौ दासीगर्भजातः ॥ ब्राह्मणीपुत्र इति तु तत्त्वकथनम् ॥

९८१। ऋतो विद्यायोनिसम्बन्धेभ्यः ॥ ६।३।२३ ॥

दी—। विद्यासम्बन्धयोनिसम्बन्धवाचिन ऋदन्तात् षष्ठ्या अलुक्। होतुरन्तेवासी। होतुःपुत्रः। पितुरन्तेवासी। पितुःपुत्रः।

The षष्ठी after a ऋदन्त word implying relationship through study or marriage is retained when an उत्तरपद follows. Thus होतुः etc. disciple of the Hotri; होतुः etc. son of the Hotri; पितुः etc, disciple of the father; पितुः etc., son of his father.

मित—। विद्या च योनिश्च ताभ्यां सम्बन्धः विद्यायोनिसम्बन्धः। तस्मात्। एतच्च 'ऋतः' इत्यस्य विशेषणम्। बहुवचनं चौलम्। तदाह 'सम्बन्धवाचिनः' इत्येकवचनेन॥ उदाहरणानि उपरिष्टाद्व्याख्यास्यन्ते॥

दी—। "विद्यायोनिसम्बन्धेभ्यस्तत्पूर्वोत्तरपदग्रहणम्" ( वार्त्तिक )। नेह—होतृधनम्।

In विद्यायोनिसम्बन्ध above, the relation is to be taken as existing in both पूर्वपद and उत्तरपद of the compound. Thus the अलुक् does not operate in होतृधनम् where धन implies neither विद्यासम्बन्ध nor योनिसम्बन्ध।

मित—। 'उत्तरपदे' इत्यस्ति। तेन समास आक्षिप्यते। विद्यायोनिसम्बन्धेभ्य इत्युक्तम्। तत्र 'तस्य' समासस्य 'पूर्वपदग्रहणम् उत्तरपदग्रहणञ्च' कर्त्तव्यम्। समासे यदा पूर्वोत्तरपदाभ्यां विद्यासम्बन्धं योनिसम्बन्धञ्च विना अन्यः सम्बन्धो न प्रतीयते तदैवायमलुक् प्रवर्त्तते नान्यथा इति फलितम्। तदत्र चत्वारः पक्षाः—पूर्वपदं विद्यासम्बन्धवाचि, उत्तरपदं विद्यासम्बन्धवाचि योनिसम्बन्धवाचि वा इति द्वौ। पूर्वपदं योनिसम्बन्धवाचि, उत्तरपदं विद्यासम्बन्धं योनिसम्बन्धं वा कथयति इति चापरौ द्वौ॥ ततः 'होतुरन्तेवासी' इति विद्यासम्बन्धवाची होतृशब्दः, तथा च 'अन्तेवासी' इति। होतुःपुत्रः इत्यत्र तु पुत्रशब्दो योनिसम्बन्धवाची। एवं योनिसम्बन्धवाचिनः पितृशब्दस्य विद्यासम्बन्धवाचिना अन्तेवासिशब्देन समासः योनिसम्बन्धवाचिना पुत्रशब्देन च॥ धनशब्दस्तु न विद्यासम्बन्धं नापि योनिसम्बन्धमभिधत्ते तदनेन समासे षष्ठ्या लुगेव॥ पूर्वोत्तरपदग्रहणं विद्यायोनिसम्बन्धेभ्य इत्यत्रैव ननु 'ऋतः' इत्यत्रापि। तथा चैवोदाहृतम्॥ नित्योऽयं विधिः उत्तरत्र विभाषाग्रहणात्॥

९८२। विभाषा स्वसृपत्योः॥ ६।३।२४॥

दी—। ऋदन्तात् षष्ठ्या अलुग्वा स्वसृपत्योः परयोः।

The षष्ठी after a ऋदन्त word is optionally retained when स्वसृ or पति is the उत्तरपद। Hence with the exposition मातुः स्वसा, we

have the option to drop or not to drop the षष्ठी। If the षष्ठी is retained, we look forward—

मित—। स्वसृशब्दे पतिशब्दे वा उत्तरपदे विद्यायोनिसम्बन्धवाचिनः ऋदन्तात् या षष्ठी तस्या विभाषा अलुक् भवति। मातुः स्वसा इति विग्रहे षष्ठ्या अलुकि—

९८३। मातुःपितुर्भ्यामन्यतरस्याम् ॥ ८।३।८५ ॥

टी—। आभ्यां स्वसुः सस्य षो वा स्यात् समासे। मातुःष्वसा—मातुःस्वसा। पितुःष्वसा—पितुःस्वसा। लुक्पक्षे तु—

In a compound the स of स्वसृ coming after मातुः or पितुः is optionally changed into ष। Thus मातुः etc., mother's sister; पितुः etc., father's sister. If however the षष्ठी is elided, we look further forward—

मित—। 'मातुः' 'पितुः' इति षष्ठ्यन्तानुकरणम्। अनुकरणानामपि प्रातिपदिकत्वमस्ति अर्थवत्त्वात् मातुश्च पितुश्च मातुःपितुरौ। ताभ्याम्॥ 'स्वसा' इति पूर्वसूत्रादनुवर्त्तते षष्ठ्या च विपरिणाम्यते। यद्वा षष्ठ्यर्थे इयं प्रथमा। 'स्वसु षः' इत्यस्ति 'समासे' इति च। तदाह 'आभ्यां स्वसुः' इत्यादि॥ "सात्पदाद्योः" (२१२३—८।३।१११) इति निषेधस्यापवादः॥

९८४। मातृपितृभ्यां स्वसा ॥ ८।३।८४ ॥

टी—। आभ्यां परस्य स्वसुः सस्य षः स्यात् समासे। मातृष्वसा। पितृष्वसा। असमासे तु—मातुः स्वसा, पितुःस्वसा।

In a compound the स of स्वसृ becomes ष when after मातृ or पितृ। Thus मातृ etc. But the स is not changed when not in a compound, thus मातुः etc.

मित—। 'मातृ' 'पितृ' इति समासगतरूपस्यानुकरणम्। तेन नानङ्। मातृ च पितृ मातृपितरौ। ताभ्याम्॥ 'स्वसा' इति षष्ठ्यर्थे प्रथमा॥ "सात्पदाद्योः" (२१२३—८।३।१११) इति निषेधस्यापवादः। स च समासे एव। तेन असमासे नैव

ष्वसा—मातुः ष्वसा, पितुः ष्वसा ॥ ननु 'मातृ' पितृ' इति रूपानुकरणम्। असमासे तद्रूपाभावादेव षत्वप्राप्तिर्नास्ति, तत् कथमिदं प्रत्युदाहरणं भवति? सत्यं, परं प्रत्युदाहरणमेतत् सूत्रद्वयमप्यभिसन्धाय उपस्थाप्यते। पूर्वसूत्रात् वैकल्पिकं षत्वं प्राप्नोति तदसमासेन बाध्यते ॥

---

## अथ समासाश्रयविधयः

९८५। घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ॥ ६।२।४३ ॥

टी—। भाषितपुंस्कात् यो ङी तदन्तस्यानेकाचो ह्रस्वः स्यात् घरूपकल्पप्रत्ययेषु परेषु चेलडादिषु चोत्तरपदेषु। ब्राह्मणितरा। ब्राह्मणितमा। ब्राह्मणिरूपा। ब्राह्मणिकल्पा। ब्राह्मणिचेली। ब्राह्मणिब्रुवा। ब्राह्मणिगोत्रा। इत्यादि। ब्रुवः पचाद्यचि वच्यादेशगुणयोरभावोऽपि निपात्यते। चेलडादीनि वृत्तिविषये कुत्सनवाचीनि। तैः "कुत्सितानि कुत्सनैः" (७३२—२।१।५३) इति समासः। 'ङ्यः' किम्? दत्तातरा। 'भाषितपुंस्कात्' किम्? आमलकीतरा। कुवलीतरा।

The feminine affix ङी coming after a भाषितपुंस्क word of more than one syllable is shortened when any of the affixes घ, रूप, कल्प is attached; also when any of चेलट्, ब्रुव, गोत्र, मत, हत is the उत्तरपद। Thus ब्राह्मणितरा, an eminent Brāhmani; ब्राह्मणितमा, pre-eminently a Brāhmani; ब्राह्मणिरूपा, a good Brāhmani; ब्राह्मणिकल्पा, very much like a Brāhmani; ब्राह्मणिचेली, a wicked Brāhmani; ब्राह्मणिब्रुवा, a so-called Brāhmani; ब्राह्मणिगोत्रा, kin of

a Brāhmani ; ब्राह्मणिमता, believed to be a Brāhmani ; ब्राह्मणिदृष्टा, a wretched Brāhmani. In ब्रुव we have वच् attached to ब्रू as is seen after पचादि roots. But ब्रू does not become वच्, nor does its ऊ become ओ by गुण ; and we get ब्रुव instead of ब्रव । All this is by निपातन in this very rule. चेलट् and the rest, when उत्तरपद in a compound, imply 'deprecation' ( कुत्सा ) and are compounded by the rule "कुत्सितानि—" (732). Why say ङ्यः ? Witness दत्ता-तरा which does not become दत्ततरा । Why say भाषितपुंस्कात् ? Witness आमलकीतरा, a well-developed Amalaki tree : कुवलीतरा, a well-developed plum tree.

मित— । 'ङ्य:' इति ङीशब्दस्य षष्ठ्या एकवचने रूपम् । अस्य च 'अनेकाच:' इति विशेषणम् । केवलस्तु ङी एकाजेव तेन 'ङी' इति ङ्यन्तो गृह्यते ॥ "स्त्रिया: पुंवत्—" ( ८३१—६।३।३४ ) इत्यतो 'भाषितपुंस्कात्' इत्यनुवर्त्तते ॥ 'उत्तरपदे' इत्यधिक्रियते । घरूपकल्पा: प्रत्यया: । उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविधिर्नास्ति ( ६८८ ) इतीह घादय एव गृह्यन्ते न तदन्ता: । तदाह 'प्रत्ययेषु परेषु' न प्रत्ययान्तेषु परेषु इति ॥ चेलट् इति टित् ङीबर्थ: । चेली कुत्सिता । चेली ब्राह्मणी इति कर्म-धारये "कुत्सितानि—" (७३२—२।१।५३) इति ब्राह्मणशब्दस्य पूर्वनिपात: । ब्राह्मणी-चेली इति प्राप्ते "पुंवत् कर्मधारय—" ( ७४६—६।३।४२ ) इति पुंवद्भाव: क्रियताम् अनेन वा ह्रस्व: । परत्वात् पुंवद्भावं बाधित्वा ह्रस्व एव प्रवर्त्तते—ब्राह्मणिचेली ॥ एवं ब्रुवा ब्राह्मणी, गोत्रा ब्राह्मणी, मता ब्राह्मणी, हता ब्राह्मणी इत्यादिष्वपि ॥ 'हति-विषये कुत्सनवाचीनि' इत्यस्य हत्यादिव कुत्सा वाच्या कुत्सा नास्ति इत्यर्थ: । तत् स्वपदविग्रहं परित्यज्य 'कुत्सिता ब्राह्मणी इत्यर्थे' एतावदेव वक्तुमुचितं प्रतिभाति ॥ ] दत्तातरा इत्यत्र ङी नास्ति तेन ह्रस्वो न । "तसिलादिषु—" इति पुंवदपि न "संज्ञा-पूरण्योश्च" ( ८३९—६।३।३८ ) इति निषेधात् ॥ आमलकीशब्दो भाषितपुंस्क एव इति भाष्याशय: । तत् कुवलीतरा इति द्वितीयमुदाहरणमुपन्यस्तम् ॥

९८६ । नद्या: शेषस्यान्यतरस्याम् । ६।३।४४ ॥

दो— । अङ्यन्तनद्या: ङ्यन्तस्य एकाचश्च घादिषु ह्रस्वो वा स्यात् । ब्रह्मबन्धुतरा—ब्रह्मबन्धूतरा । स्त्रितरा—स्त्रीतरा ।

Words technically known as नदी, other than those mentioned in the previous rule, optionally become shortened when घ etc., follow. Thus ब्रह्म etc., a close female relation of a Brāhmana ; स्त्रि etc., very much a woman.

मित—। 'घरूप—' इत्यनुवर्त्तते 'ह्रस्वः' इति च। 'शेषस्य पूर्वसूत्रोक्तादन्यस्य 'नद्याः' नदीसंज्ञकस्य शब्दस्य 'अन्यतरस्याम्' विभाषया 'ह्रस्वः' स्यात् घादिषु परे इत्यर्थः॥ पूर्वसूत्रे ङ्यन्तेषु नदीशब्देषु ये अनेकाचः त एवोक्ताः। तत् अङ्यन्तो नदीशब्दः शिष्यते, ङ्यन्तश्च एकाच्। तदाह 'अङ्यन्त—' इत्यादि॥ 'ब्रह्मबन्धू' इति अङ्यन्तनद्या उदाहरणम्। 'स्त्री' इति ङ्यन्त एकाच् नदीशब्दः॥ 'स्त्री' इति नित्यस्त्रीवाचकत्वात् न भाषितपुंस्कम्। सूत्रेऽस्मिन् 'भाषितपुंस्कात्' इति न सम्बध्यते तत इदमुदाहरणम्॥

दी—। "कृन्नद्या न" (वार्त्तिक)। लक्ष्मीतरा।

A word rendered a नदी by some कृत् affix does not become shortened when घ etc., follow. Thus लक्ष्मीतरा very much like Lakshmi.

मित—। येषां कृत्प्रत्ययेन कृता नदीसंज्ञा न स्त्रीप्रत्ययेन तेषां घादिषु न ह्रस्वः॥ 'लक्ष्मी' इति तु लक्षयति पुमांसमिति विग्रहे 'लक्षेर्मुट् च' (उ० ३।१६०) इत्यौणादिकम् ईप्रत्ययान्तं न ङ्यन्तम्। अङ्यन्तत्वात् वैकल्पिको ह्रस्वः प्राप्तः अनेन प्रतिषिध्यते॥ एवम् श्री तन्त्री इत्यादिषु च॥

९८७। उगितश्च ६।३।४५॥

दी—। उगितः परा या नदी तदन्तस्य घादिषु ह्रस्वो वा स्यात्। विदुषितरा। ह्रस्वाभावपक्षे तु "तसिलादिषु—" (८३६—६।३।३५) इति पुंवत्। विद्वत्तरा। वृत्त्यादिषु विदुषीतरा इत्यप्युदाहृतम्। तन्निर्मूलम्।

A word rendered a नदी by some affix attached to what has dropped उ, ऋ or ऌ in its formation, will optionally shorten

its final when घ etc., follow. Thus विदुषि etc., a very learned woman. Here, in the alternative when there is no shortening, there will be पुंवद्भाव by "तसिलादिषु—" (836); hence विद्वत्तरा also. The Vritti etc., quote a third form विदुषीतरा but there is no authority for it.

मित—। 'उक्' इति उवर्णस्य ऋवर्णस्य लृवर्णस्य च संज्ञा। उक् इत् यस्मात् उगित्। तस्मात्। गम्यमानपरशब्दयोगे पञ्चमी। 'नद्याः' इति षष्ठ्यन्तमनुवर्तते 'अन्यतरस्याम्' इति च। उगितो नद्याः अन्यतरस्यां ह्रस्वो घादिषु इत्यन्वयः॥ 'नदी' इति ईदूतौ वर्णौ इति पक्षमाश्रित्य आह—'या नदी तदन्तस्य' इति, स्त्रियां विहितो यः ई-प्रत्यय ऊ-प्रत्ययश्च तदन्तस्य इत्यर्थः। कस्मात् स विहित इत्याकाङ्क्षायामाह 'उगितः परा या नदी' इति उगिच्छब्दाद्विहित ईकारोकारात्मको यः स्वार्थः प्रत्ययः इत्यर्थः॥ पूर्वसूत्रे तु ईदूदन्त एव नदी न तु ईदूद्वर्णमात्रम्। तस्मिंश्च पक्षे इह 'उगितः' इति पञ्चम्यन्तं 'नद्याः' इत्यस्य विशेषणम्। उगितो नद्या अन्यतरस्यां ह्रस्व इति च सुगमोऽन्वयः। तदेवं सूत्रोपात्तमपि ईदूदन्तपक्षमुपेक्ष्य सुगमञ्च व्याख्यानमनादृत्य यत् ईदूद्वर्णपक्ष आद्रियते कष्टञ्च व्याख्यानं क्रियते, प्रौढिमात्र' किञ्च तत् वैचित्र्यार्थं वा स्यात्॥ वेत्ति इति विद्वान्। "विदेः शतुर्वसुः" (३१०५—७।१।३६) इति वसुप्रत्ययः। स च उगित्। तत्सम्बन्धात् विद्वस् इत्यप्युगित्। स्त्रियां ङीपि विदुषीति 'उगितः परा या नदी तदन्तम्'। तेन तरपि ह्रस्वविकल्पः। ह्रस्वपक्षे विदुषितरा॥ यदा न ह्रस्वः तदा "घरूप—" (९८५) इत्यनेन कृतात् विप्रतिषेधात् पुंवद्भावः निर्बाधः "तसिलादिषु—" (८३६) इति सूत्रोक्तः पुंवद्भावः। तेन विद्वत्तरा॥ 'निर्मूलम्' भाष्यादिषु प्रमाणग्रन्थेषु अदृष्टमित्यर्थः॥ ईदूदन्तो नदी इति पक्षे वसुप्रत्ययसम्बन्धात् यथा विद्वस् इत्युगित् तथा विदुषी इत्यपि। शेषं प्राग्वत्॥

९८८। हृदयस्य हृल्लेखयदण्लासेषु॥ ६।३।५०॥

दी—। हृदयं लिखतीति हृल्लेखः। हृदयस्य प्रियं हृद्यम्। हृदयस्येदं हार्दम्। हृल्लासः। 'लेख' इत्यणन्तस्य ग्रहणम्, घञि तु हृदयलेखः। लेखग्रहणं ज्ञापकम् "उत्तरपदाधिकारे तदन्तविधिर्नास्ति" इति।

हृदय becomes हृद् when लेख and लास are उत्तरपद and when the affixes यत् and अण् are attached. Thus हृल्लेख, one who scratches his chest, has changed हृदय into हृद्। Similarly हृद्य, to heart's liking, with यत् attached ; हार्द, belonging to the heart, when अण् is attached ; हृल्लास palpitation of the heart, when लास follows. Here लेख is supposed to be the form when the कृत् affix अण् is attached with हृदय as उपपद ; hence with घञ् the form is हृदयलेख without the substitution of हृद्। But as अण् is mentioned in the rule separately this will include अणन्त words also—both कृत् and तद्धित—by तदन्तविधि, consequently the mention of लेख with घञ् becomes superfluous. Thus the inference is—In the section on उत्तरपद, affixes mentioned do not include words ending in those affixes.

मित—। हृदयशब्दस्य 'हृद्' इत्ययमादेशो भवति लेख, यत्, अण्, लास, इत्येतेषु परतः॥ अण् इति कृत् तद्धितश्च। 'लेख' इति कृदणो ग्रहणम् अभियुक्तैस्तथैव व्याख्यानात्। तदाह 'हृदयम्' इत्यादि। कर्मण्युपपदे अण्। हार्दम् इति तद्धितोऽण्॥ हृद्यम् इति तद्धितो यत्॥ ननु 'हृद्' इति प्रकृत्यन्तरमस्ति हृदयपर्य्यायः तेनैव सिद्धे किमनेन हृदादेशेन? उच्यते—हृदादेशो 'हृदयलेख' 'इत्यादेर्निवृत्त्यर्थम्। हृदयं लिखति इत्यादिवाक्ये 'हृदयलेखः' इत्यादि मा भूदिति। किं तर्हि हृदयलेख इत्यसाधुरेव? बाढमसाधुर्यदि हृदयं लिखतीति विग्रहः क्रियते। अस्मिंस्तु विग्रहे 'अण्' एव नान्यः प्रत्ययः। यदा पुनर्लेखनं लेखः, लिख्यते अनेन वा करणेन, इति घञ् तदा भवत्येव हृदयस्य लेखः हृदयलेख इति। परमर्थो भिद्यते—अणि कर्त्ता उच्यते घञा तु भावः कर्त्तृव्यतिरिक्तं वा कारकम्॥ भवतु, उक्त एव अण् सूत्रे, तत् तदन्तविधिना एव अणन्तो लेखशब्दो लभ्यते किं तस्य पृथग्ग्रहणम्? अणादेव पृथग्ग्रहणादनुमीयते "उत्तरपदाधिकारे—" इत्यादि॥

९८८। वा शोकष्यञ्रोगेषु॥ ६।३।५१॥

दी—। हृच्छोकः—हृदयशोकः। सौहार्द्यम्—सौहृदय्यम्। हृद्रोगः—हृदयरोगः। हृदयशब्दपर्य्यायो हृच्छब्दोऽस्ति। तेन सिद्धे प्रपञ्चार्थमिदम्।

The substitution of हृद् is optional when शोक, ष्यञ् or रोग follows. Thus हृच्छोकः etc., the heart's grief; सौहार्दम् etc., goodness of heart; हृद्रोगः etc., heart-disease. The purpose of the substitution is served by the independant word हृद् which means the same as हृदय, hence the substitution is only to illustrate diversity of derivation.

मित—। 'हृदयस्य हृद्' इत्यस्मिन्। 'शोक' इति 'रोग' इति चोत्तरपदम्। 'ष्यञ्' इति प्रत्ययः॥ हृदयस्य शोकः हृदयस्य रोग इति विग्रहः॥ शोभनं हृदयमस्य सुहृदयः उदार इत्यर्थः। तस्य भाव इति ब्राह्मणादि-ष्यञि सुहृदय ष्यञ् इति स्थिते हृद्भावे सुहृत् ष्यञ्। "हृद्भगसिन्ध्वन्ते—" (११२३—७।३।१९) इत्युभयपदवृद्धौ सौहार्द्यम् उदारता। अकृते हृद्भावे तु सुहृदय ष्यञ् इति स्थिते "यस्येति च" (२११—६।४।१४८) इति लोपे सौहृदय्यम्॥ एवञ्च अणि सौहार्दमिति॥ इदं "हृदादेश-पक्षे हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्युभयपदवृद्धिः" इति वदतां वृत्तिकृतामनुरोधात्। वस्तुतस्तु एव ष्यञि अणि च यो हृद् हृदयस्य, लाक्षणिकः सः। "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव" (परिभाषा) इति लाक्षणिकस्य हृच्छब्दस्य "हृद्भग—" इत्यत्र ग्रहणं न भविष्यति। तेन उत्तरपदवृद्धेरभावात् अणि सौहृदम् ष्यञि सौहृद्यम् इत्येव, न हि सौहार्दम् इति सौहार्द्यमिति च॥ "सुहृद् दुर्हृदौ—" (८८८—५।४।१५०) इति निपातिते सुहृच्छब्दे यो हृद् सोऽपि लाक्षणिक एव, तस्यापि उत्तरपदवृद्धौ न ग्रहणम्। अथोच्यते सुहृदिति लाक्षणिकं न हृदिति, तदा सुहृदित्यस्य अर्थवत्त्वेऽपि केवलं हृदिति नार्थवत्। किञ्च "हृद्भग—" इत्यत्र "अर्थवद्ग्रहणे नानर्थकस्य" (परिभाषा) इति कृत्वा अनर्थकस्य हृच्छब्दस्य ग्रहणं न भविष्यति। तत् प्राग्वदेव उत्तरपद-वृद्धेरभावः॥ तथा सति हृदयशब्देन समानार्थो यो हृच्छब्दस्तेन समासे सुहृदिति स्थिते अणि ष्यञि च सौहार्दम् सौहार्द्यमिति च॥ तदेव निष्कर्षः—अणि हृद्भावे सौहृदमिति ष्यञि सौहृद्यमिति च। प्रकृत्यन्तरं यो 'हृद्' स तु न अणि न वा ष्यञि हृद्, ततः सौहार्दमिति सौहार्द्यमिति च। एतदेव गूढमुक्तं काव्यालङ्कार-सूत्रवृत्तौ वामनेन "अनणि हृद्भावात्" इति। एवञ्च कृत्वा युवादिगणे ब्राह्मणादिगणे

च सुहृत्सुहृदयशब्दयोरुभयोरपि पाठः सम्भवते। आद्यात् सौहार्दसौहार्द्यौ, द्वितीयात् सौहृदसौहृद्यौ भवतः। अन्यतरग्रहणाभावे शब्दद्वयहानिः प्रसज्यते॥

८८०। पादस्य पदाज्यातिगोपहतेषु॥ ६।३।५२॥

टी—। एषूत्तरपदेषु पादस्य 'पद' इत्यदन्त आदेशः स्यात्। पादाभ्यामजतीति पदाजिः। पदातिः। "अज्यतिभ्यां पादे च" [? "अज्यतिभ्याञ्च" (उ० ४।१३०), "पादे च" (उ० ४।१३१)] इति इण (? इञ्) प्रत्ययः। अजेर्व्यंभावो निपातनात्। पदगः। पदोपहतः।

पाद becomes पद when आजि, आति, ग or उपहत follows as उत्तरपद। The substitute is अदन्त। Thus पदाजि etc. a foot-passenger. The affix is इञ् by the उणादि rule "पादे च"—Also when पाद is the उपपद। This has to be taken along with the previous rule "अज्यतिभ्याञ्च"—इञ् is attached to अज and अत also. अज does not become वी by निपातन in "पादस्य—" (990). Also पदग, travelling on foot; पदो etc., struck with the feet.

मित—। आजि, आति, ग, उपहत इत्येतेषु उत्तरपदेषु पादशब्दस्य 'पद' इत्यदन्त आदेशः स्यात्॥ सूत्रे 'पद' इति लुप्तप्रथमान्तम्। तदाह 'अदन्त आदेशः' इति। तत्र लिङ्गम् उत्तरसूत्रे 'पद्' इत्यादेशान्तरकरणम्। यदि इहापि दान्त आदेशः स्यात् तदा उत्तरत्र "यत्यतदर्थे" इत्येव सूत्रयेत्। किञ्च 'पदगः' 'पदोपहतः' इति न सिध्येत्॥ पद अज इञ् इति पदाजिः। अस्मिन्नेव सूत्रे 'आजि' इति निपातनात् अजेर्वीभावो न॥ इह उणादिषु "अज्यतिभ्यां पादे च" इति सूत्रं नोपलभ्यते। मुद्रितेषु पुस्तकेषु "अज्यतिभ्याञ्च" "पादे च" इति द्वे सूत्रे प्रत्ययश्च इञ् न इण्॥

८८१। पद् यत्यतदर्थे॥ ६।३।५३॥

टी—। पादस्य पद् स्यात् अतदर्थे यति परे। पादौ विध्यन्ति पद्याः शर्कराः। 'अतदर्थे' किम्? पादार्थमुदकं पाद्यम्। "पादार्घाभ्याञ्च" (२०८३—५।४।२५) इति यत्।

पाद becomes पद when यत् not implying तादर्थ्य follows. Thus पद्याः etc.—sugar hurting the feet when trod upon, so big are the crystals. Why say अतदर्थे ? Witness पाद्यम् etc., water for the feet which does not take the substitute because यत् implies तादर्थ्य। The यत् is by the rule "पादार्घा—" ( 2093 ).

मित—। पदिति दान्तोऽयमादेशः। पद्याः शर्कराः इत्यत्र "विध्यत्यधनुषा" (१६३५—४।४।८३ ) इति यत् ॥

दी—। "इके चरतावुपसंख्यानम्" ( वार्त्तिक )। पादाभ्यां चरति पदिकः। पर्पादित्वात् (१५५८) ष्ठन्।

The substitute has to be noted when the affix इक follows in the sense चरति, walks. Thus पदिक, walks on foot ; the affix is ष्ठन् ( इक ) because पाद is of the पर्पादि class.

मित—। 'तेन चरति' इत्यस्मिन्नर्थे य इकः, ष्ठन्प्रत्ययः इत्यर्थः, तस्मिन् परे पादस्य पद इत्ययमादेशः स्यात् ॥ पादाभ्यां चरति इति पाद ष्ठन् इति स्थिते पादस्य पद। ष्ठनः षकारनकारौ इतौ, ठस्य च इकः। तेन पदिक् इति। इह "पर्पादिभ्यः ष्ठन्" (१५५८—४।४।१०) इति ष्ठन्। प्रत्ययस्य षित्त्वात् स्त्रियां पदिकी ॥ वार्त्तिकमिदं "पादः पच्च" इति पर्पादिषु गणसूत्रस्यानुवादः ॥

९९२। हिमकाषिहतिषु च ॥ ६।३।५४ ॥

दी—। पद्धिमम्। पत्काषी। पद्धतिः।

पाद becomes पद when हिम, काषिन् or हति is the उत्तरपद। Thus पद्धिम, cold to the feet ; पत्काषिन्, those who hurt their feet ; पद्धति, trod upon with the feet.

मित—। हिम, काषिन्, हति इत्येतेषु उत्तरपदेषु पादस्य पदित्यादेशो भवति ॥ पादयोर्हिमं शीतमिति विग्रहः ॥ पादौ कषतीति पत्काषी पादचारी। "सुप्य-

ज्ञातौ—" ( २९८८—३।३।७८ ) इति घिनिः ॥ पादाभ्यां हन्यते इति पद्धतिः पन्थाः । करणोपपदे क्तिन् ॥

८८३। ऋचः शे ॥ ६।३।५५ ॥

दी—। ऋचः पादस्य पद् स्याच्छे परे। गायत्रीं पच्छः शंसति। पादं पादमित्यर्थः। 'ऋचः' किम् ? पादशः कार्षापणं ददाति।

पाद of a ऋच् becomes पद् when the affix श follows. Thus पच्छः in गायत्रीम् etc., cites a गायत्री a line of it each time. Why say ऋचः ? Witness पादशः without the substitution, in पादशः etc., gives away one कार्षापण measureof cowries a fourth of it each time.

मित—। 'ऋचः' इति पादापेक्षया षष्ठी। तदाह 'ऋचः पादस्य' इत्यादि ॥ इह 'पाद' इति चतुर्थांशः। स च परिमाणम्, अतः "संख्यैकवचनात्—" ( २११०—५।४।४३ ) इति शस् वीप्सायाम् ॥ कार्षापणमितान् कपर्दकान् ददाति, तत्र दानं प्रतिवारं चतुर्थांशमितमित्यर्थः ॥

८८४। वा घोषमिश्रशब्देषु ॥ ६।३।५६ ॥

दी—। पादस्य पत्। पद्घोषः—पादघोषः। पन्मिश्रः—पादमिश्रः। पच्छब्दः—पादशब्दः।

पाद optionally becomes पद् when घोष, मिश्र, or शब्द follows as उत्तरपद। Thus पद्घोष etc., the noise of foot-steps ; पन्मिश्र etc., mixed with a quarter ; पच्छब्द etc., the noise of foot-steps, or the word पाद।

मित—। घोष, मिश्र, शब्द इत्येतेषु उत्तरपदेषु पादस्य 'पद्' इत्यादेशः स्यात्। दान्त एवादेशः, 'पत्' इति तु हलन्तानां प्रथमैकवचने रूपम् ॥ पद्घोष इत्यत्र षष्ठीसमासः, अवयवाची पादशब्दः ॥ पन्मिश्र इत्यत्र पादश्चतुर्थांशः। "पूर्वसदृश—"

( ६६३—२।१।३१ ) इति समासः ॥ पच्छब्द इति पदीय इव। यथा—पाद इति शब्दः इत्यर्थः। कर्मधारयः ॥

दी—। "निष्के चेति वाच्यम्" (वार्तिक)। पन्निष्कः—पादनिष्कः।

Also when निष्क is the उत्तरपद। Thus पन्निष्क etc., gold measuring one पाद।

मित—। निष्कः सुवर्णम्। तस्मिन्नुत्तरपदे पादस्य पद्॥ इह पादः परिमाणभेदः, चतुर्थांशो वा। पादश्चासौ निष्कश्च इति कर्मधारयः ॥

८८५। उदकस्योदः संज्ञायाम् ६।३।५७ ॥

दी—। उदमेघः।

उदक becomes उद when an उत्तरपद follows, if the compound is a proper name. Thus उदमेघ, the name of some one.

मित—। उदकशब्दस्य 'उद' इत्यादेशः स्यादुत्तरपदे परे समुदायश्चेत् संज्ञा भवति ॥ उदकगर्भो मेघः उदकमेघः। तेन वर्णादिभिः साहश्यात् यदि उदकमेघ इति कस्यचित् संज्ञा क्रियते तदा उदकमेघ इत्यस्य उदमेघ इति रूपं भवति ॥

दी—। "उत्तरपदस्य चेति वक्तव्यम्" (वार्तिक)। क्षीरोदः।

The substitute comes in also when उदक is the उत्तरपद if the whole is a proper name. Thus क्षीरोद, the sea of milk.

मित—। उत्तरपदमिति इह उदकविशेषणम्। उत्तरपदस्य च उदकशब्दस्य उदादेशो भवति संज्ञायाम् ॥ क्षीरमुदकमस्य क्षीरोदः उत्तरसागरस्य संज्ञा ॥ 'संज्ञायां' किम्? उदकशोषितः। प्रसन्नोदकं सरः ॥

८८६। पेषंवासवाहनधिषु च ॥ ६।३।५८ ॥

दी—। उदपेषं पिनष्टि। उदवासः। उदवाहनः। उदधिर्घटः, समुद्रे तु पूर्वेण सिद्धम्।

उदक becomes उद also when पेषम्, वास, वाहन or धि follows as उत्तरपद। Thus उदपेषम् etc., grinds with water; उदवास, stay in water; उदवाहन, the carrier of water, i. e., a cloud; उदधिः etc. a jar in which water is stored (we say घटः because in the case of the sea the compound is available by the previous rule, being a संज्ञा of the sea ).

मित—। संज्ञायामिति निवृत्तम्। पेषम्, वास, वाहन, धि इत्येतेषु उत्तरपदेषु च उदकस्य उद इत्यादेशो भवति॥ उदकेन करणेन पिनष्टि इत्यर्थे उदपेषं पिनष्टि। "स्नेहने पिषः" (३३५०—३।४।३८) इति णमुल्॥ उदके वासः उदवासः। "सहस्रारानोदवासतत्परा"। बहुव्रीहिर्वा॥ उदकस्य वाहन उदवाहनो मेघः। उदकं धीयते यस्मिन् उदधिः जलाधारः। स चेह घटः। समुद्रस्य तु उदधिरिति संज्ञा, तेन पूर्वसूत्रेणैव सिध्यति॥

८८७। एकहलादौ पूरयितव्येऽन्यतरस्याम् ॥६।३।५९॥

दी—। उदकुम्भः—उदककुम्भः। 'एक—' इति किम्? उदकस्थाली। 'पूरयितव्ये' इति किम्? उदकपर्वतः।

उदक optionally become उद if the उत्तरपद begins with a single consonant and means something to fill up. Thus उदकुम्भ etc., jar of water. Why say एक etc.? Witness उदक etc., without the change because the उत्तरपद begins with the conjunct consonant स्थ। Why say पूरयितव्य? Witness उदक etc., a mountain where it rains heavily, without the change because a पर्वत cannot be filled up.

मित—। एकः असहायः हलन्तरेण असंयुक्तः हल् आदिर्यस्य तत् एकहलादि। पूरयितव्यं पूरणार्हम्। उभयमपि उत्तरपदविशेषणम्॥ 'पूरयितव्य' पूरयितव्यवाचि 'एकहलादि' असंयोगादि यत् उत्तरपदं तस्मिन् परतः उदकस्य 'उद' इत्यादेशो

भवति वा इत्यर्थः ॥ ग्रामणी इति पूरयितव्यमिपि संयोगादि, तेन न उदादेशः । परन्तु द्व्यसंयोगादि अपि न पूरयितव्यं तेन न उदादेशः ॥

९९८ । मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ॥६।३।६०॥

दी— । उदमन्थः—उदकमन्थः । उदौदनः—उदकौदनः । इत्यादि ।

उदक optionally becomes उद also if the उत्तरपद is मन्थ, ओदन, सक्तु, बिन्दु, वज्र, भार, हार, वीवध or गाह । Thus उदमन्थ etc., a paste made with water ; उदौदन etc., food mixed with water ; etc.

मित— । मन्थ, ओदन, सक्तु, बिन्दु, वज्र, भार, हार, वीवध, गाह इत्येतेषु च उत्तरपदेषु उदकस्य उदादेशो वा स्यात् इत्यर्थः ॥ द्रवद्रव्यसंस्कृताः सक्तवो मन्थः । उदकेन मन्थः । "अन्नेन व्यञ्जनम्" (६९६—२।१।३४) इति समासः ॥ एवम् उदकेन सक्तुः इत्यपि ॥ उदकस्य वज्रः वज्र इव प्राणहर उदकप्रक्षेप इत्यर्थः ॥ उदकं बिभर्तीति उदभारः वारिवाहकः । कर्मण्यण् ॥ एवम् उदकं हरतीति ॥ भारवहन-साधनम् उभयतो बद्धशिक्यो वंशदण्डो वीवध इत्युच्यते । शिक्ययोर्भारं न्यस्य स्कन्धेन वीवध उह्यते । उदकस्य उदकवहनसाधनम् वीवधः इति विग्रहः ॥ उदकं गाहते उदगाहः । कर्मण्यण् ॥ एतानि उत्तरपदानि एकहलादिष्वपि न पूरयितव्यानि इति पूर्वेण अप्राप्ते विधिः ॥

९९९ । इको ह्रस्वोऽङ्यो गालवस्य ॥ ६।३।६१॥

दी— । इगन्तस्य अङ्यन्तस्य ह्रस्वो वा स्यात् उत्तरपदे । ग्रामणिपुत्रः—ग्रामणीपुत्रः । 'इकः' किम् ? रमापतिः । 'अङ्यः' किम् ? गौरीपतिः । 'गालव'-ग्रहणं पूजार्थम्, 'अन्यतरस्याम्' इत्यनुवृत्तेः ।

The learned Galava says ई, ऊ, ॠ except ङी are shortened optionally when an उत्तरपद follows. Thus ग्रामणि etc., son of the headman of the village. Why say इकः ? Witness रमापति

in which the आ is not shortened. Why say अङ्यः? Witness गौरीपति which does not shorten its ई because the ई is from ङी in the feminine. Galava is named to show respect and not to secure optionality because 'अन्यतरस्याम्' comes in here from the preceding rule and allows the option.

मित—। इ उ ऋ लृ इति इक्। तस्य॥ न ङी: अङी:। तस्य अङ्य:। इदम् 'इकः' इत्यस्य विशेषणम्॥ 'उत्तरपदे' इत्यस्ति 'अन्यतरस्याम्' इत्यनुवर्तते॥ अङ्य: इको ह्रस्वः स्यात् अन्यतरस्याम् उत्तरपदे परतो गालवस्य आचार्यस्य मतेन इत्यर्थः॥ ग्रामं नयतीति क्विपि ग्रामणीः न ङ्यन्तः। तेन ह्रस्वविकल्पः॥ 'पूजार्थम्' इति पूज्य' गालवस्य मतमित्यर्थः॥

दी—। "इयङुवङ्भाविनामव्ययानाञ्च नेति वाच्यम्" (वार्त्तिक)। श्रीमदः। भ्रूभङ्गः। शुक्लीभावः।

The option to shorten does not exist in the case of words that admit इयङ् for इ or उवङ् for उ and of indeclinables. Thus श्री etc., the pride of wealth; भ्रू etc., a frown; शुक्ली etc., turning white.

मित—। इयङुवङोर्भावः भवनमुत्पत्तिरित्यर्थः इयङुवङ्भावः। सः अस्ति एषु इयङुवङ्भाविनः। इनिर्मत्वर्थे। तेषाम्॥ 'न' इत्यत्र 'ह्रस्वः' इति योज्यम्। तेन वैकल्पिकस्य ह्रस्वस्य निषेधः। अतो दीर्घ एव उदाह्रियते॥ "ऊर्यादिच्वि—" (७६२—१।४।६१) इति निपातिकुच्विः प्रत्यये तेन अव्ययत्वम्॥

दी—। "अभ्रूकुंसादीनामिति वक्तव्यम्" (वार्त्तिक)। भ्रुकुंसः—भ्रूकुंसः। भ्रुकुटिः—भ्रूकुटिः। अकारः अनेन विधीयते इति व्याख्यानान्तरम्। भ्रकुंसः। भ्रकुटिः। भ्रुवा कुंसो भाषणं शोभा वा यस्य स स्त्रीवेशधारी नर्त्तकः। भ्रुवः कुटिः कौटिल्यम्।

It should be stated that the option is not cancelled with

regard to भ्रूकुंस and the like. Thus भ्रूकुंस etc., one who speaks with his eyebrows, or one who shows well in his eyebrows, i e. a male dancer in female attire ; भ्रूकुटि &c., curving of the eye-brows. The Varttika is also explained as affixing अ to भ्रू &c., in भ्रूकुंस &c. Thus भ्रकुंस, भ्रकुटि।

मित—। 'अभ्रूकुंसादीनां' भ्रूकुंसादिवर्जितानामित्यर्थः। एतत्तु पूर्ववार्त्तिकस्थस्य 'इयङुवङ्भाविनाम्' इत्यस्य विशेषणम्। भ्रूकुंसादिवर्जितानामियङुवङ्भाविनां ह्रस्वनिषेधः। तेन भ्रूकुंसादीनां पाक्षिको ह्रस्वो भवत्येव॥ यद्वा अभ्रूकुंसादीनामिति प्रसज्यप्रतिषेधः। भ्रूकुंसादीनां न इत्यर्थः। किमेषां न? यत् पूर्ववार्त्तिके उक्तम्। किमुक्तम्? उवङ्भाविनां ह्रस्वनिषेध उक्तः, भ्रूकुंसादयश्च उवङ्भाविनः। एषां ह्रस्वनिषेधो न॥ एवं पर्युदासे प्रसज्यप्रतिषेधेऽपि रूपद्वयं भ्रूकुंसः भ्रुकुंस इति॥ केचित्तु वार्त्तिकेऽस्मिन् अकारस्य विधिं वर्णयन्ति। तेषाम् 'अ' इति लुप्तप्रथमान्तम्। भ्रूकुंसादीनाम् इकः अकार आदेशो भवति, इति च तदा वार्त्तिकार्थः सम्पद्यते। अयञ्च सूत्रोक्तस्य ह्रस्वस्यापवादः। तेन भ्रकुंस इति रूपम्। अतस्त्रैरूप्यम्—"भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्त्तकः" इति॥ इह 'अभ्रूकुंसादीनाम्' इति ह्रस्वपाठः प्रामादिकः॥

१०००। एक तद्धिते च॥ ६।३।६२॥

टी—। एकशब्दस्य ह्रस्वः स्यात् तद्धिते उत्तरपदे (? च)॥ एकस्या आगतम् एकरूप्यम्। एकक्षीरम्।

एका becomes एक when an उत्तरपद follows also when a तद्धित has to be attached. Thus एकरूप्य with the तद्धित affix रूप्य attached in the sense तत आगत:—derived from it. Also एक etc., milk of a single cow.

मित—। 'एक' इति लुप्तषष्ठ्यन्तकम्। लिङ्गविशिष्टपरिभाषया एकाशब्दस्य अयं विधिः। तस्य ह्रस्वः। आकारस्तु न इक् अतः पूर्वसूत्रेण न प्राप्तिः॥ इह

'उत्तरपदे च' इति चकारो लिपिकरप्रमादात् स्खलितः ॥ तदिदमुदाहरति एकरूप्य-मिति। यदा 'एका' इति काचिन्नायुधीं लक्षयति तदा एकस्या आगतम् एकरूप्यम्। "हेतुमनुष्येभ्यः—" (१४६१—४।३।८१) इति रूप्यप्रत्ययः ॥ उत्तरपदे—एकस्याः चौरम् एकचौरम् ॥ इह "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" (७८८, वा) इत्यपि सिद्धाति। परं तत् वार्त्तिककृतो दर्शनं न सूत्रकृतः ॥

१००१। ङ्यापोः संज्ञाछन्दसोर्बहुलम् ॥ ६।३।६३ ॥

दो—। रेवतिपुत्रः। अजचौरम्।

Words ending in ङी and आप् are irregularly shortened in proper names (or—particular class names) and the Vedas when an उत्तरपद follows. Thus रेवति etc., being the name of some one, has रेवती shortened into रेवति। Also अज etc., in the Vedas has अज instead of अजा।

मित—। ङ्यन्तस्य आबन्तस्य च ह्रस्वः स्यात् बहुलं, उत्तरपदे परतः संज्ञायां विषये छन्दसि च इत्यर्थः ॥ रेवतिपुत्र इति संज्ञायां रेवत्या ङ्यन्ताया इको ह्रस्वः। अजायाः चौरमिति छन्दसि ॥

१००२। त्वे च ॥ ६।३।६४ ॥

दो—। त्वप्रत्यये ङ्यापोर्वा ह्रस्वः। अजत्वम्—अजात्वम्। रोहिणित्वम्—रोहिणीत्वम्।

Words ending in ङी or आप् are irregularly shortened in the Vedas when the affix त्व is attached. Thus अजत्वम् etc., रोहिणित्वम् etc.

मित—। 'संज्ञाछन्दसोः' इत्यनुवृत्तम्। संज्ञा तु त्वप्रत्ययान्तेन न सम्भवति। तदेतत् छन्दस्येव ॥

१००३। ष्यङः सम्प्रसारणं पुत्रपत्योस्तत्पुरुषे ॥ ६।१।१३ ॥

दो—। ष्यङन्तस्य पूर्वपदस्य सम्प्रसारणं स्यात् पुत्रपत्यो-रुत्तरपदयोस्तत्पुरुषे।

If in a तत्पुरुष the पूर्वपद ends in ष्यङ् and the उत्तरपद is पुत्र or पति the ष्यङ् will have its य changed into इ ( सम्प्रसारण ) । Thus कुमुदस्येव गन्धोऽस्य gives कुमुदगन्धि । तस्य गोत्रापत्यम् gives कौमुदगन्ध with अण् । The अ final here is replaced by ष्यङ् which minus the elisions, is य । This gives कौमुदगन्ध्य । With चाप् added in the feminine we have कौमुदगन्ध्या । Now कौमुदगन्ध्यायाः पुत्रः will have सम्प्रसारण by this rule. The form then is कौमुदगन्धिपुत्रः । We now look forward.

मित । 'सम्प्रसारणम्' इति यकारादीनामिकारादिरादेशः । 'ष्यङ्' इत्यत्र षकारङकारौ इतौ । 'य' इति शेषः । तदन्तस्य सम्प्रसारणम् ष्यङंशे यकारस्य इकारादेशः पुत्रशब्दे पतिशब्दे वा उत्तरपदे तत्पुरुषे इत्यर्थः ॥ 'तत्पुरुषे इत्यु-च्यते । तस्य च द्वे एव पदे । तत्र 'पुत्रपत्योः' इति सप्तम्यन्तत्वात् उत्तरपदस्थितिविशेषणम् ष्यङ् इति पूर्वपदान्तम् । तदाह 'ष्यङन्तस्य पूर्वपदस्य' इत्यादि । कुमुदस्येव गन्धः अस्य कुमुदगन्धिः । "उपमानाच्च" ( ८०६—५।४।१३७ ) इति इकारः अन्तादेशः । कुमुदगन्धेर्गोत्रापत्यं स्त्री इति कुमुदगन्धि अण् इति स्त्रियां कर्तव्ये कौमुदगन्ध इत्यस्य स्त्रीत्वे विवक्षायां "अणिञोरनार्षयोः—" ( ११९८—४।१।७८ ) इति अणभागस्य ष्यङादेशे कौमुदगन्ध्य इति रूपम् । ततः "यङश्चाप्" ( ५२८—४।१।७४ ) इति स्त्रियां चापि कौमुदगन्ध्या इति जातम् । कौमुदगन्ध्यायाः पुत्र इति विग्रहे कौमुदगन्ध्या पुत्र इति स्थिते अनेन सम्प्रसारणम् । कौमुदगन्ध इ आ पुत्र इति जाते "सम्प्रसारणाच्च" ( ३३०—६।१।१०८ ) इति पूर्वरूपे कौमुदगन्धिपुत्र इति प्राप्ते—

१००४ । सम्प्रसारणस्य ॥ ६।३।१३९ ॥

दी— । सम्प्रसारणस्य दीर्घः स्यादुत्तरपदे । कौमुदगन्ध्यायाः पुत्रः कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । व्यवस्थितविभाषया ह्रस्वो न ॥ "स्त्रीप्रत्यये चानुपसर्जने न" ( परिभाषा ) इति तदादिनियमप्रतिषेधात्, परमकारीषगन्धीपुत्रः । उपसर्जने तु तदादिनियमात् नेह—अतिकारीषगन्ध्यापुत्रः ॥

A सम्प्रसारण becomes lengthened when an उत्तरपद follows. Hence कौमुदगन्धिपुत्र becomes कौमुदगन्धीपुत्र । Similarly कौमुदगन्धीपति । We do not get optionally a short vowel in गन्धी by "इको ह्रस्वः—" (९९९) because the option is restricted, operating in certain cases and not operating in certain others. The सम्प्रसारण is one of the cases where the option does not operate.

How then is it that there is no सम्प्रसारण in अतिकारीषगन्ध्यापुत्र ? This is because the ष्यङन्त word, viz, कारीषगन्ध्या is not the पूर्वपद । The पूर्वपद is अतिकारीषगन्ध्या ; hence no सम्प्रसारण । Well then why परमकारीषगन्धीपुत्र with सम्प्रसारण? In this case the maxim "स्त्रीप्रत्यये—" interferes. We have the general maxim what when a प्रत्यय is spoken of it stands for the whole word got by attaching the प्रत्यय and not for itself only. Hence when we say ष्यङ् takes सम्प्रसारण we mean that the entire ष्यङन्त word takes it in its ष्यङ् portion. Now "स्त्रीप्रत्यये—" modifies this declaring that when a स्त्रीप्रत्यय is not in an उपसर्जन the प्रत्यय will not necessarily mean the प्रत्ययान्त word only, i. e., the विधि then affects the whole word at the end of which the प्रत्यय is seen even though that include more than the अङ्ग of the प्रत्यय । In परमकारीषगन्धीपुत्र the exposition is परमा कारीषगन्ध्या, परमकारीषगन्ध्या, तस्याः पुत्रः । Here कारीषगन्ध्या is not an उपसर्जन । Consequently in its case, the rule "ष्यङः सम्प्रसारणम्—" (1003) thinks of ष्यङ् only no matter where it is. Thus though कारीषगन्ध्या is not the पूर्वपद the सम्प्रसारण comes in yielding परमकारीषगन्धीपुत्रः ।

मित—। 'कौमुदगन्धिपुत्र' इत्यत्र सम्प्रसारणस्य इकारस्य अनेन दीर्घे कौमुदगन्धीपुत्रः । एवं कौमुदगन्धीपतिः । "इको ह्रस्वो—" (९९६—६।३।६१) इति

ह्रस्वविकल्पो न भवति। स हि विकल्पो व्यवस्थितः—इह भवति इह न इति तत्र व्यवस्था अस्ति। तेन एतयोर्न ह्रस्वः। तदाह 'व्यवस्थित—' इत्यादि॥ इह ष्यङन्तस्य पूर्वपदस्य सम्प्रसारणं भवति इत्युक्तम्। ष्यङन्तता च यावतामन्ते ष्यङ् दृश्यते तावतामेव प्रसक्ता। एतद्धि स्वाभाविकम्। तत्र नियमः क्रियते "प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम्" (परिभाषा) इति। अयमर्थः—'प्रत्ययग्रहणे तदन्तस्य' प्रत्ययान्तस्य 'ग्रहणं' भवति 'यस्मात्' अङ्गात् 'सः' प्रत्ययो 'विहितः तदादेः' तस्य अङ्गस्य आदिवर्णादारभ्य। एतेन अङ्गसमेतः प्रत्ययः प्रत्ययान्तम् नाधिकं किञ्चित् इति फलितम्। एष तावत् "तदादिनियमः"। उदाहरणयोः 'कौमुदगन्ध्या' 'कारीषगन्ध्या' इत्येतावत् ष्यङन्तम्॥ यदा त्वेवं परमा कारीषगन्ध्या परमकारीषगन्ध्या। परमकारीषगन्ध्यायाः पुत्रः इति विग्रहे ष्यङन्तं पूर्वपदं नास्ति। 'कारीषगन्ध्या' इत्येतावदेव ष्यङन्तं, पूर्वपदं तु 'परमकारीषगन्ध्या' इति। सम्प्रसारणं तर्हि न प्राप्नोति 'परमकारीषगन्ध्यापुत्रः' इति भवति, इष्यते च 'परमकारीषगन्धीपुत्रः' इति। अत्र समाधिमाह "स्त्रीप्रत्यये—" इत्यादि। अयमर्थः—'अनुपसर्जने' उपसर्जनव्यतिरिक्ते शब्दे स्थितः यः 'स्त्रीप्रत्ययः' तस्मिन् विषये 'न च' नैव तदादिनियमो भवति। तत्र तु यावतः सङ्घातस्य अन्ते प्रत्ययो दृश्यते तावानेव तत्प्रत्ययान्तः। प्रकृते ष्यङ् इति स्त्रियामादेशः। स च इह अण्प्रत्ययस्य, इति स्थानिद्वारेण स्त्रीप्रत्ययः ष्यङ्। अपि तु परमा कारीषगन्ध्या इति विग्रहे अनुपसर्जनं यः कारीषगन्ध्याशब्दः तत्र स्थितोऽयं स्त्रीप्रत्ययः। तेनात्र तदादिनियमो नास्ति। एवं 'तदादिनियमप्रतिषेधात्' परमकारीषगन्ध्यायाः पुत्रः' इत्यत्र समुदाय एव ष्यङन्तं पूर्वपदम्। ततः सम्प्रसारणे परमकारीषगन्धीपुत्रः॥ 'अनुपसर्जने' इत्युक्तम्। अतिक्रान्ता कारीषगन्ध्याम् इति वाक्ये 'कारीषगन्ध्या' इत्युपसर्जनम्। तत्र स्थितः स्त्रीप्रत्ययः ष्यङ्। अतः 'अतिकारीषगन्ध्यायाः पुत्र' इति विग्रहे अस्य च तदादिनियमः सम्प्रसारणञ्च न भवति। तदाह 'तदादिनियमान्नेह—अतिकारीषगन्ध्यापुत्रः' इति॥

## १००५। बन्धुनि बहुव्रीहौ॥ ६।१।१४॥

**टी—। बन्धुशब्दे उत्तरपदे ष्यङः सम्प्रसारणं स्यात् बहुव्रीहौ। कारीषगन्ध्या बन्धुरस्य कारीषगन्धीबन्धुः। 'बहुव्रीहौ'**

इति किम् ? कारीषगन्ध्याया बन्धुः कारीषगन्ध्याबन्धुः । क्लीबनिर्देशस्तु शब्दस्वरूपापेक्षया ।

In a बहुव्रीहि with बन्धु as उत्तरपद the ष्यङन्त word immediately preceding will have सम्प्रसारण । Thus कारीष &c., one of whom कारीषगन्ध्या is a friend. Why say बहुव्रीहौ ? Witness कारीषगन्ध्याबन्धु without सम्प्रसारण in a कर्मधारय । In the exposition we have बन्धु in the masculine because the rule does not want बन्धु to be taken in the neuter ; the neuter form is merely with reference to the form of the word and does not refer to its meaning.

मित— । 'ष्यङः सम्प्रसारणम्' इत्यस्ति । सर्वोपसर्जनो बहुव्रीहिः, तदिह उपसर्जने स्थितः ष्यङ । तेन तदादिनियमोऽस्ति, ष्यङ्ग्रहणे ष्यङन्तमात्रस्य च ग्रहणं तस्यैव च सम्प्रसारणम् । परन्तु अनेकपदो बहुव्रीहिरिति उत्तरपदेनात पूर्वपदं नाक्षिप्यते । अतएव ष्यङन्तस्य पूर्वपदस्य इति नोक्तम् ॥ 'बन्धुनि' इति बन्धु शब्दस्य अर्थो न लक्ष्यते तेन क्लीबनिर्देशः । तदाह 'शब्दस्वरूपापेक्षया' इति । विग्रहे तु अर्थापेक्षा अस्ति अतो 'बन्धुरस्य' इति पुंसि उच्यते ॥ पूर्वपदस्य अनाक्षेपात् त्रिपदे बहुव्रीहावपि परमकारीषगन्धीबन्धुः ॥

दो— । "मातज्मातृकमातृषु वा" (वार्त्तिक) । कारीषगन्धीमातः—कारीषगन्ध्यामातः । कारीषगन्धीमातृक—कारीषगन्ध्यामातृकः । कारीषगन्धीमाता—कारीषगन्ध्यामाता । अस्मादेव निपातनात् मातृशब्दस्य मातजादेशः "नद्यृतश्च" ( ८३३—५।४।१५३ ) इति कब्विकल्पश्च ॥ बहुव्रीहावेवेदम्, नेह—कारीषगन्ध्याया माता कारीषगन्ध्यामाता ॥ चित्त्वसामर्थ्यात् चित्स्वरो बहुव्रीहिस्वरं बाधते ॥

The सम्प्रसारण is optional in a बहुव्रीहि if मातच्, मातृक or मातृ follows. Thus कारीष &c. one whose mother is कारीषगन्ध्या । By

निपातन in this very Varttika, the कप् guided by "नद्यृतश्च" (833) comes in optionally and, when there is no कप्, मातृ optionally changes into मातच्। This is in a बहुव्रीहि only. Thus in a षष्ठी-समास, though there is no कप्, मातृ does not change and there is no सम्प्रसारण। मातच् drops च hence the pitch is that of चित् in preference to that of a बहुव्रीहि।

मित—। मातच्शब्दे मातृकशब्दे, मातृशब्दे च उत्तरपदे ष्यङन्तस्य सम्प्रसारणं भवति वा बहुव्रीहौ इत्यर्थः॥ इह बहुव्रीहौ मातृशब्द एव उत्तरपदम्। ततो "नद्यृतश्च" (८३३) इति नित्योऽपि कप् इहैव निपातनात् विकल्प्यते। सति कपि 'मातृक' इति ष्यङः परं भवति। तदभावे 'मातृ' इति। तस्य च मातृशब्दस्य अत एव निपातनात् मातजादेशो वा॥ त्रिष्वपि ष्यङः सम्प्रसारणं वा। कारीषगन्धीमातः इत्यादि च रूपम्। मातचि चित्स्वरो भवति अन्तोदात्तः न तु पूर्वपदप्रकृतिस्वरः॥

१००६। इष्टकेषीकामालानां चिततूलभारिषु॥ ६।३।६५॥

दी—। इष्टकादीनां तदन्तानां च पूर्वपदानां चितादिषु क्रमादुत्तरपदेषु ह्रस्वः स्यात्। इष्टकचितम्—पक्वेष्टकचितम्। इषीकतूलम्—मुञ्जेषीकतूलम्। मालभारी—उत्पलमालभारी।

इष्टका, इषीका and माला being the पूर्वपद or final in the पूर्वपद, shorten their आ if चित, तूल and भारिन् be the उत्तरपद respectively. Thus इष्टक etc. made of bricks ; पक्व etc. made of burnt bricks ; इषीक etc., cotton from grass ; मुञ्ज etc, cotton from munja grass; माल etc , carrying a garland ; उत्पल etc., carrying a garland of lotuses.

मित—। 'ह्रस्वः' इत्यस्ति। आबन्ता एते शब्दाः संज्ञायां छन्दसि च पूर्वेणैव ह्रस्वं प्रयोजयन्ति। असंज्ञार्थं आचार्यस्य वचनम्॥ 'उत्तरपदे' इत्यनेन इह पूर्वपदमाक्षिप्तम्। इष्टकादयस्तस्य पूर्वपदस्य विशेषणानि। नायं सार्वत्रिको विशेष्यविशेषणभावः।

इह तु इष्यते, तथैव व्याख्यानात् ॥ "पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च" इति परिभाषया ह्रस्वविधिरयम् इष्टकादीनां तदन्तानाञ्च भवति। 'तदुत्तरपदस्य' तदन्तस्य इत्यर्थः ॥ इष्टकाभिचितम्, इषीकायास्तूलम्, मालां बिभर्त्ति इत्यादि विग्रहः ॥

१००७। कारे सत्यागदस्य ॥ ६।३।७० ॥

दी—। मुम् स्यात्। सत्यङ्कारः। अगदङ्कारः।

मुम् is the augment of सत्य and अगद when कार follows as उत्तरपद। Thus सत्यङ्कारः, the pronouncement of an oath अगदङ्कारः, relief of disease.

मित—। कारशब्दो घञन्तः। "अरुर्द्विषत्—" (२६४२—६।३।६७) इत्यतो 'मुम्' अनुवर्त्तते ॥ सत्यस्य शपथस्य कारः उच्चारणं सत्यङ्कारः। हरदत्तस्तु सत्यस्य समयस्य कार इत्याह। तत्र "सत्यादशपथे" (२१६७—५।४।६६) इति डाचः परत्वात् मुमा बाधः ॥ गदो रोगः। अगद आरोग्यम्। तस्य कारः करणम् ॥ सत्यं करोति अगदं करोति इत्येवं विग्रहे तु कर्मण्यणि मुम्। अत एव अगदङ्कारो वैद्यः ॥

दी—। "अस्तोश्चेति वक्तव्यम्" (वार्त्तिक)। अस्तुङ्कारः।

अस्तु takes मुम् when कार is the उत्तरपद। Thus अस्तुङ्कारः।

मित—। 'अस्तु' इति तिङन्तप्रतिरूपकमव्ययं स्वीकारे। तस्मादनुकरणशब्दात् षष्ठी ॥ 'कारे' इत्यस्ति। अस्तु कारः अस्तुङ्कारः स्वीकरणम्। यद्वा अस्तु करोतीति अस्तुङ्कारः अभ्युपगन्ता, देवताविशेषो वा ॥

दी—। "धेनोर्भव्यायाम्" (वार्त्तिक)। धेनुम्भव्या।

धेनु takes मुम् when भव्या is the उत्तरपद। Thus धेनुम्भव्या, a cow that is nearing her term of delivery.

मित—। भविष्यति इति भव्या भविष्यन्ती। "भव्यगेय—" (२८९४—३।४।६८) इति कर्तरि यत्। भव्याशब्दे उत्तरपदे धेनुशब्दस्य मुमागमः स्यात् ॥ भव्या धेनुः धेनुम्भव्या आसन्नप्रसवा गौः। मयूरव्यंसकादित्वात् विशेषणस्य परनिपातः ॥

दो—। "लोकस्य पृणे" (वार्त्तिक)। लोकम्पृणः। 'पृणः' इति मूलविभुजादित्वात् कः।

लोक takes मुम् when पृण is the उत्तरपद। Thus लोकम्पृणः, the joy of the world. Here पृण is formed with the affix क because the word लोकम्पृण is of the मूलविभुजादि class.

मित—। पृणे उत्तरपदे लोकशब्दस्य मुमागमः स्यात्॥ लोकं पृणति इति विग्रहे मूलविभुजादित्वात् कर्मोपपदे क-प्रत्ययः। पृणतीति प्रीणने तुदादिषु—"पृणति द्विजदेवताश्च" इति हलायुधः॥

दो—। "इत्येऽनभ्याशस्य" (वार्त्तिक)। अनभ्याशमित्यः दूरतः परिहर्त्तव्य इत्यर्थः।

अनभ्याश takes मुम् when इत्य is the उत्तरपद। Thus अनभ्याशमित्यः, not to be approached too close, i. e., one that has to be avoided from a distance.

मित—। अभ्याशः समीपम्। न अभ्याशः अनभ्याशः दूरम्। इत्यः गन्तव्यः उपसर्त्तव्य इत्यर्थः। "एतिस्तु—" (३८५७—३।१।१०९) इति क्यप् कर्मणि। अनभ्याशशब्दस्य मुमागमः स्यात् इत्यशब्दे उत्तरपदे॥ अनभ्याशं यथा तथा इत्यः अनभ्याशमित्यः। सुप्सुपा।

दो—। "भ्राष्ट्राग्न्योरिन्धे" (वार्त्तिक)। भ्राष्ट्रमिन्धः। अग्निमिन्धः।

भ्राष्ट्र and अग्नि take मुम्, when इन्ध is the उत्तरपद। Thus भ्राष्ट्र &c., burns the pan; अग्नि etc., lights fire.

मित। भ्राष्ट्रशब्दस्य अग्निशब्दस्य च मुम् स्यात् इन्धशब्दे उत्तरपदे॥ भ्राष्ट्रो भाजनविशेषः। भ्राष्ट्रमिन्धे इति भ्राष्ट्रमिन्धः यो हि पुञ्जामधिश्रयणेन भ्राष्ट्रं तापयति सः कर्मण्यण्। एवमग्निमिन्धे प्रज्वलयतीति अग्निमिन्धः॥

दो—। "गिलेऽगिलस्य" (वार्त्तिक)। तिमिङ्गिलः। 'अगिलस्य' किम्? गिलगिलः।

Words, except गिल, take मुम् when गिल is the उत्तरपद। Thus तिमि etc., that which swallows a whale. Why say अगिलस्य? Witness गिल etc., swallower of the swallower, without मुम्।

मित—। अगिलस्य गिलभिन्नस्य मुम् स्यात् गिले परे॥ तिमिं गिलतीति तिमिङ्गिलो मत्स्यभेदः। गिरतेः कः। मूलविभुजादिः। तिमिगृ क इति स्थिते लत्व इत्वे रपरत्वे तिमिगिर् अ इति जाते "अचि विभाषा" ( २५४१—८।२।२१ ) इति वैकल्पिके लकारे तिमिगिल इति प्राप्ते अनेन मुमि तिमिङ्गिलः॥ गिलतीति गिलः, पचाद्यच्। इहैव निपातनात् गुणाभावः। क-प्रत्ययो वा। तं गिलतीति मूलविभुजादित्वात् कः—गिलगिलः। गिलस्य गिल इति षष्ठीसमासो वा॥

दी—। "गिलगिले च" (वार्त्तिक)। तिमिङ्गिलगिलः।

Words except गिल take मुम् also when गिलगिल is the उत्तरपद। Thus तिमि etc. swallower of the swallower with respect to a whale, i.e., the whale is a swallower, but this is a swallower of the whale even.

मित—। गिलगिलशब्दे उत्तरपदे अगिलस्य पूर्वपदस्य मुम् स्यात्॥ गिलं गिलतीति गिलगिलः। तिमिङ्गिलगिलः इति षष्ठीसमासे मुम्॥ कैयटादयस्तु तिमिङ्गिलं गिलतीति व्युत्पत्तौ व्यर्थं वार्त्तिकमिति मन्यन्ते॥ व्यर्थमेव यदि देवदत्तस्य गुरुकुलमित्यादिष्विव तिमेर्गिलगिलस्य गिल इत्यर्थो भवति। यदा तु गवां दायाद इत्यस्य यथा गोरूपं दायमादत्ते इत्यर्थः तथा इहापि तिमिङ्गिलगिल इत्यस्य तिमिरूपो यो गिलस्तमयं गिलति इत्यर्थ इष्यते तदा सार्थकं वार्त्तिकम्॥

दी—। "उष्णभद्रयोः करणे" (वार्त्तिक)। उष्णङ्करणम्। भद्रङ्करणम्॥

उष्ण and भद्र take मुम् when करण is the उत्तरपद। Thus उष्णम् etc., the means to make warm; भद्रम् etc., that which does good.

मित—। उग्रशब्दस्य भद्रशब्दस्य च मुम् स्यात् करणे उत्तरपदे॥ क्रियते अनेन इति करणम्, भद्रस्य करणम्, इति विग्रहः॥

१०८८। रात्रेः कृति विभाषा॥ ६।३।७२॥

दी—। रात्रिञ्चरः—रात्रिचरः। रात्रिमटः—रात्र्यटः॥ अखिदर्थमिदं सूत्रम्। खिति तु "अरुर्द्विषत्—" (२९४२—६।३।६७) इति नित्यमेव वक्ष्यते। रात्रिम्मन्यः।

रात्रि takes मुम् optionally if a कृदन्त word is the उत्तरपद। Thus रात्रि etc., night-ranger. This rule is only for affixes that do not drop ख। In the case of खित् affixes the मुम् is compulsory by the rule "अरुर्द्विषत्—" (2942); thus रात्रिम्मन्य, one that considers himself to be night.

मित—। कृदन्ते उत्तरपदे रात्रेर्मुम् वा स्यात्॥ ननु "उत्तरपदाधिकारे तदन्तविधिर्नास्ति" इत्युक्तं प्राक् (९८८), तत् कथं 'कृति' इत्यस्य इह 'कृदन्ते' इत्यर्थः? उच्यते—प्रातिपदिकात् कृतो न भवन्ति, तत् रात्रिशब्दात् कृत् न सम्भवति, तेनेह कृदन्ते' इत्यर्थः सम्भवति॥ रात्रौ चरतीति विग्रहे "चरेष्टः" (२९३०—३।२।१६) इति टप्रत्ययः॥ रात्रौ अटतीति पचाद्यचि मुम् वा। सामान्यतः कृति अयं विधिः, खिति कृति तु "अरुर्द्विषत्—" (२९४२) इत्यनेन बाध्यते। विकल्पस्य न भवति। तथा च रात्रिमात्मानं मन्यते इति विग्रहे खशि नित्यमेव मुम्। तेन रात्रिम्मन्यः इत्येव न तु रात्रिमन्य इत्यपि॥

१०७९। सहस्य सः संज्ञायाम्॥ ६।३।७८॥

दी—। उत्तरपदे। सपलाशम्। 'संज्ञायाम्' किम्? सहयुध्वा।

सह becomes स when an उत्तरपद follows and the compound is a proper name. Thus सपलाशम् which is a name of a certain

place having पलाश trees in abundance. Why say संज्ञायाम्? Witness सह etc., one that caused another to fight with him.

मित—। सहशब्दस्य सः स्यात् उत्तरपदे परे समुदायश्चेत् संज्ञा भवति। पलाशैः सह इत्यर्थे सपलाशम् इति संज्ञाविशेषः॥ सह योधितवान् युद्धवान् वा इत्यर्थे "सहे च" (३००६—३।२।९६) इति क्वनिपि सहयुध्वा इत्यत्र सभावो न। तत्पुरुषोऽयम् न बहुव्रीहिः, तेन "वोपसर्जनस्य" (८४९—६।३।८२) इति नेह प्रवर्तते॥

१०१०। ग्रन्थान्ताधिके च॥ ६।३।७९॥

दी—। अनयोः परयोः सहस्य सः स्यादुत्तरपदे। समुहूर्त्तं ज्योतिषमधीते, सद्रोणा खारी।

सह becomes स also when the उत्तरपद implies the end of a subject of study or an excess over the proper measure of something. Thus समुहूर्त्तम् etc., studied Astronomy to the end of the chapter relating to मुहूर्त्त; सद्रोणा etc., a खारी with a द्रोण in excess.

मित—। ग्रन्थान्ताधिके उत्तरपदे इति सम्बन्धः। सहस्य सः स्यात यदि उत्तरपदम् अध्येयस्य ग्रन्थस्य अन्तवचनं भवति यदि वा प्रकृतादधिकं किञ्चिदस्ति॥ 'अनयोः' ग्रन्थान्ते अधिके च इत्यर्थः उत्तरपदविशेषणमेतत्। अनयोः उत्तरपदयोः परयोः इत्यन्वयः। 'उत्तरपदे' इत्येकवचनन्तु अधिकारापेक्षया॥ मुहूर्त्तान्तं समुहूर्त्तम् अन्तवचनेऽव्ययीभावः। मुहूर्त्तमिति मुख्यतः कालवाचि लक्षणया च कालविषयकग्रन्थवाचि। तेन "अव्ययीभावे चाकाले" (९९०—६।३।८१) इति न सिध्यति। अप्राप्ते वचनम॥ द्रोणेन सह इति विग्रहे द्रोण इह खार्यामधिक इति बोध्यः। "वोपसर्जनस्य" (८४९) इति विकल्पे प्राप्ते नित्यार्थं वचनम्॥ 'मुहूर्त्तं' इति ग्रन्थान्तः 'द्रोण' इति अधिकः। तदाह 'अनयोः परयोः' इति। परम् अन्तता आधिक्यञ्च सह-शब्देनैव द्योत्यते, तेन "ग्रन्थान्ते अधिके च वर्त्तमानस्य सहशब्दस्य" इत्यादि वृत्तिकारेणोक्तं व्याख्यानम्॥

१०११। द्वितीये चानुपाख्ये ॥ ६।३।८० ॥

दी—। अनुमेये द्वितीये सहस्य सः स्यात्। सराक्षसीका निशा। राक्षसी साक्षादनुपलभ्यमाना निशयानुमीयते।

सह becomes स when an उत्तरपद follows if the subordinate one has to be inferred not directly perceived. Thus सराक्षसीका etc., night implying the presence of a demoness. The presence of the demoness is not directly perceived but only inferred because it is night.

मित—। सहशब्दः प्रधानेन अप्रधानं योजयति। अप्रधानमिह द्वितीयमित्युक्तम्। उपाख्यायते साक्षादुपलभ्यते इत्युपाख्यम्। कर्मण्यण्प्रत्ययः। आर्षः खौत्वाभावः। यज्यर्थे कप्रत्ययो वा। न उपाख्यमनुपाख्यम् अनुमेयम्॥ राक्षसा सह सराक्षसीका। इह निशा प्रधानम् राक्षसी अप्रधानं द्वितीया। "वोपसर्जनस्य" (८४९) इति विकल्पे प्राप्ते नित्यार्थं वचनम्॥ निशासु राक्षसी चरति इति निशाप्रवृत्तिं दृष्ट्वा राक्षसीप्रचारोऽनुमीयते॥

१०१२। समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु ॥ ६।३।८४ ॥

दी—। समानस्य सः स्यादुत्तरपदे न तु मूर्द्धादिषु। अनु भ्राता सगर्भ्यः। अनु सखा सयूथ्यः। यो नः सनुत्यः। 'तत्र भवः' इत्यर्थे "सगर्भसयूथसनुताद्यन्" (३४६०—४।४।११४)। 'अमूर्द्धादिषु' किम्? समानमूर्द्धा। समानप्रभृतयः। समानोदर्काः।

समान becomes स in the Vedas when an उत्तरपद other than मूर्द्धन्, प्रभृति or उदर्क follows. Thus सगर्भ, the same womb, as in अनु भ्राता सगर्भ्यः, the uterine brother follows; सयूथ, ths same herd, as in अनु सखा सयूथ्यः, the companion of the same herd follows; सनुत्य, similar prayer, as in यो नः सनुत्यः, what comes

unto us from a similar prayer. सगर्भ्य etc. in these examples are derived from सगर्भ etc., with the affix यत् in the same तत्र भवः by the rule "सगर्भ—" (3460). Why say अमूर्द्धादिषु? Witness समानमूर्द्धा, of the same height; समानप्रभृतयः, equals and others; समानोदर्काः, leading to the same end.

मित—। छन्दोविषयं सूत्रम् ॥ सगर्भ्यः, सयूथ्यम्, सनुतम् इत्यादय उदाहरणानि। तानि च सगर्भ्यः, सनुत्यः इत्यादिषु प्रयोगेषु उपलभ्यन्ते ॥ समानो गर्भः सगर्भः। तत्र भवः सगर्भ्यः सहोदरः। "सगर्भ—" (३४६०) इति यत् ॥ एवं समानं यूथं सयूथम्। तत्र भवः सयूथ्यः एकयूथविहारी। प्राग्वत् यत् ॥ नुतं नुतिः। भावे क्तः। समानं नुतं सनुतम्। तत्र भवः इति यति सनुत्यः, तुल्यभक्तिकतया नुत्या लभ्यः। "सनुत्यः प्रसादः" इति पुरुषोत्तमस्योदाहरणम् ॥ उदर्कः परिणतिः। समान उदर्कः एषामिति बहुव्रीहिः ॥

दी—। 'समानस्य' इति योगो विभज्यते। तेन सपक्षः, साधर्म्यम्, सजातीयमित्यादि सिद्धमिति काशिका। अथवा सहशब्दः सदृशवचनोऽस्ति, सदृशः सख्या ससखि इति यथा। तेनायमस्वपदविग्रहो बहुव्रीहिः—समानः पक्षोऽस्य इत्यादि।

Here the Kāsika says समानस्य is separated from its connection in the rule and is to be treated as a rule by itself. With the अनुवृत्ति of सः from "सहस्य सः—" (1009—6. 3. 78) this gives—समान becomes स when an उत्तरपद follows both in the Vedas and classical Sanskrit. Thus सपक्षः etc. are obtained with the exposition समानः पक्षः अस्य etc. We may however, get these examples from बहुव्रीहि compounds of सह in the sense 'similar' and पक्ष etc. Thus when we say समानः पक्षः अस्य we do not mean that समास is compounded, but that समास is given in place of सह

to show that the विग्रह is अस्वपद। सदृ in the sense 'similar' is seen in the अव्ययीभाव compound ससखि (660). The योगविभाग is therefore unneccssary.

मित—। समानः पक्षः अस्य सपक्षः ॥ समानो धर्मोऽस्य सधर्मा। तस्य भावः साधर्म्यम् ॥ समाना जातिः जातिरस्या वा सजातिः। सजाति द्रव्यं सजातीयम्। "आत्मकात्—" (१०८१—५।४।१८) इति छः ॥ अथ कथमेवमादिषु समानस्य सः? तदाह—समानस्येति योगो विभज्यते। "सहस्य सः—" (१००९) इत्यतः सः इत्यनुवर्तते। छन्दसि इति तु न सम्बध्यते। तेन लोके वेदे च 'समानस्य सः स्यात्' इत्यर्थः सम्पद्यते। अतः सिध्यन्त्युदाहरणानि ॥ अयं तु योगविभागो भाष्ये न दृश्यते तत् समाधानान्तरमप्याह—अव्ययीभावेषु सदृशः सख्या इत्यस्वपदविग्रहे सह-शब्दस्य समासो दृश्यते। इहापि सहशब्दस्यैव अस्वपदविग्रहो बहुव्रीहिरस्तु। विग्रहश्च समानः पक्षः अस्य, सदृशः पक्षः अस्य, इत्यादि भवतु। समासे एव अयमर्थः सह-शब्दस्य दृश्यते, न वाक्ये। तेन न्याय्योऽयमस्वपदविग्रहः। सति समासे "वोपसर्जनस्य" (८४९—६।३।८२) इति सहस्य सो वा ॥ 'तेन' सहशब्देन 'अयम्' एव वक्ष्यमाणः 'अस्वपदविग्रहो बहुव्रीहिः' इत्यन्वयः ॥

१०१२। ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयो-वचनबन्धुषु ॥६।३।८५॥

दी—। एषु द्वादशसु उत्तरपदेषु समानस्य सः स्यात्। सज्योतिः। सजनपदः। इत्यादि।

समान becomes स when the उत्तरपद is one of the following twelve—ज्योतिस्, जनपद, रात्रि, नाभि, नामन्, गोत्र, रूप, स्थान, वर्ण, वयस्, वचन, बन्धु। Thus सज्योतिः, equally brilliant; सजनपदः, of the same country; etc.

मित—। ज्योतिस्, जनपद, रात्रि, नाभि, नामन्, गोत्र, रूप, स्थान, वर्ण, वयस्, वचन, बन्धु इत्येतेषु उत्तरपदेषु समानस्य सः स्यात् लोके पूर्वसूत्रात् वेदे च।

१०१४। चरणे ब्रह्मचारिणि ॥ ६।३।८६ ॥

दी—। ब्रह्मचारिणि उत्तरपदे समानस्य सः स्याच्चरणे समानत्वेन गम्यमाने। चरणः शाखा। ब्रह्म वेदः। तदध्ययनार्थं व्रतमपि ब्रह्म। तच्चरतीति ब्रह्मचारी। समानः सः सब्रह्मचारी।

When ब्रह्मचारिन् is the उत्तरपद, समान becomes स if equality in the matter of Vedic study is implied. चरण is a school of Vedic study. ब्रह्मन् is Veda. By transference of epithets the vow to study the Veda is also ब्रह्मन्। Hence ब्रह्मचारी is the practiser of that vow. Equal ब्रह्मचारी, i. e., equal in the matter of ब्रह्मचर्य्य is सब्रह्मचारी।

मित—। 'समानस्य सः' इत्यस्ति। उत्तरपदे इति चाधिकृतम्। तत्र 'चरणे' इति 'समानस्य' इत्यस्य विशेषणम्। चरणे वर्त्तमानो यः समानशब्दः तस्य इत्यर्थः। समता चेत् चरणे इति फलितम्। तदाह 'चरणे समानत्वेन गम्यमाने' इति। 'ब्रह्मचारिणि' इति तु 'उत्तरपदे' इत्यस्य विशेषणम्॥ 'शाखा' वेदशाखा। 'तदध्ययनार्थं' वेदाध्ययनार्थं चरणविशेषाध्ययनार्थमिति भावः॥ 'तत्' ब्रह्म व्रतमित्यर्थः 'चरति' अनुतिष्ठति इति ब्रह्मचारी। "सुप्यजातौ—" (२९८८--३।२।७८) इति णिनिः॥ 'समानः सः' समानो ब्रह्मचारी इति शेषः 'सब्रह्मचारी'। व्रतचरणे यस्य तुल्यत्वमस्ति सः। एकामेव शाखामधीतुं ये व्रतचारिणस्ते सब्रह्मचारिण इत्यर्थः॥ "समानस्य सः सब्रह्मचारी" इत्यपपाठः॥

१०१५। तीर्थे ये॥ ६।३।८७॥

दी—। तीर्थे उत्तरपदे यादौ प्रत्यये विवक्षिते समानस्य सः स्यात्। सतीर्थ्यः, एकगुरुकः। "समानतीर्थे वासी" (१६५८—४।४।१०७) इति यत्प्रत्ययः।

समान becomes स when तीर्थ is the उत्तरपद and some तद्धित

beginning with य, has to be affixed. Thus सतीर्थ्यः, a pupil of the same preceptors. The affix is यत् by the rule "समान—" (1658).

मित—। 'तीर्थे' इति 'उत्तरपदे' इत्यस्य विशेषणम्। 'ये' ये परे इत्यर्थः। परत्वञ्च उत्तरपदापेक्षया। समासे उत्तरपदात् परं किं नाम स्यात् अन्यत् प्रत्ययात् ? तत् 'य' इति प्रत्ययः। परं 'यत्' एव प्रत्यय इह विहितः न 'य' इति। 'यत्' च यादिः प्रत्ययः। तदाह 'यादौ प्रत्यये' इति। 'यति' इत्यनुक्त्वा लाघवार्थमुक्तं 'ये' इति॥ तीर्थं गुरुः। समानम् एकः। समानं तीर्थम् समानतीर्थम्॥ अवश्यं वसति सेवते इति वासी। आवश्यके णिनिः॥ समानतीर्थे वासी इति विग्रहे वैकल्पिकस्तद्धितो यत्-प्रत्ययः। तद्धितस्य विवक्षायां तद्धितोत्पत्तेः प्रागेव समानस्य सः—सतीर्थ्यः अविवक्षायां वाक्यमेव, समासो वा समानतीर्थवासी इति॥

१०१६। विभाषोदरे॥ ६।३।८८॥

दी—। यादौ प्रत्यये विवक्षिते इत्येव। सोदर्य्यः—समानोदर्य्यः।

समान optionally becomes स when उदर is the उत्तरपद and some तद्धित beginning with य has to be affixed. Thus सोदर्य्यः etc. uterine brother, the first with य and the second with यत्।

मित—। 'ये इत्यनुवर्त्तते। तदाह 'यादौ प्रत्यये विवक्षते' इति॥ 'समानम्' एकम्। समानमुदरं समानोदरम्॥ समानोदरे शयितः इति विग्रहे वैकल्पिकि यत्प्रत्यये कर्त्तव्ये (१६५६—४।४।१०८) प्रत्ययोत्पत्तेः प्रागेव समानस्य समादेशो वा। असति सादेशे समानोदर्य्यः एकमातृजातः॥ सादेशे तु सोदरे शयित इति जाते "सोदराद्यः" (१६६०—५।४।१०९) इति यत्प्रत्ययस्य अपवादो य-प्रत्ययः—सोदर्य्यः॥

१०१७। दृग्दृशवतुषु॥ ६।३।८९॥

दी—। सदृक्—सदृशः।

समान becomes स when दृश्, दृश, or वतु follows. Thus सदृश् etc., looks like equal.

मित—। 'विभाषा' इति नानुवर्त्तते। दृश् शब्दे, दृशशब्दे, 'वतौ च परतः समानस्य सः स्यात्॥ समानमिव पश्यन्ति जनाः इति विग्रहे "समानान्ययोः—" ( २९७४, वा ) इति क्विन्कञौ प्रत्ययौ। क्विनि सदृक्, कञि सदृशः॥

दी—। "दृक्षे चेति वक्तव्यम्" ( वार्त्तिक )। सदृक्षः। वतुरुत्तरार्थः।

समान becomes स also when दृक्ष follows. Thus सदृक्षः, looking like equal. वतु cannot be attached to समान; it is mentioned here for the sake of the rule following.

मित—। "क्सोऽपि वाच्यः" ( २९७४, वा ) इति त्यदादिषु समानान्ययोश्च दृशेः क्सप्रत्ययोऽपि विहितः। तत्र 'दृक्ष' इत्युत्तरपदं भवति। तस्मिन् परतः समानस्य सः स्यात्॥ दृश्, दृश, दृक्ष इत्युत्तरपदानि। वतुरिति प्रत्ययः। स च समानशब्दात् न विहितः। तदाह 'वतुरुत्तरार्थः' इति। उत्तरसूत्रे वतुग्रहणस्य प्रयोजनं वक्ष्यति इति तस्यार्थः॥

१०१८। इदंकिमोरीश्की॥ ६।३।९०॥

दी—। दृग्दृशवतुषु इदम ईश किमः की स्यात्। ईदृक्—ईदृशः। कीदृक्—कीदृशः। वतूदाहरणं वक्ष्यते।

इदम् becomes ई and किम् becomes की when दृश्, दृश or वतु follows. Thus ईदृक् etc., like this; कीदृक् etc., like what? वतु will be illustrated later,

मित—। 'ईश्की' इति लुप्तप्रथमाद्विवचनान्तम्। तौ च यथासंख्यं भवतः॥ "त्यदादिषु—" ( ४२९—३।२।६० ) इति दृशेः क्विन्कञौ। क्विनि 'दृश्' इत्युत्तर—पदम्, कञि 'दृश' इति। दृश्शब्दे दृशशब्दे च उत्तरपदे वतुप्रत्यये च परतः इदम् शब्दस्य ईश् किमशब्दस्य च की इत्यादेशः स्यात्॥ 'ईश्' इत्यत्र शकार इत्। 'की'

इति च अनेकाल्। तत् "अनेकाल्शित्—" (४५—१।१।५५) इति सर्वादेशः। इदमिव पश्यन्ति जना इमम् इति विग्रहे इदम् दृश् क्विन् इति स्थिते ईश्भावे ईदृक्। एवम् ईदृशः, कीदृशः, कीदृश् इति॥ 'वक्ष्यते' अनुपदमेव वक्ष्यते इत्यर्थः॥

दी—। "दृक्षे चेति वक्तव्यम्" (वार्त्तिक)। ईदृक्षः। कीदृक्षः॥

इदम् becomes ई and किम् becomes की also when दृक्ष is the उत्तरपद। Thus ईदृक्षः, like this ; कीदृक्षः, like what ?

मित—। क्सप्रत्यये 'दृक्ष' इत्युत्तरपदम्। तस्मिन् परेऽपि इदम ईश् किमश्च की स्यात्॥

दी—। "आ सर्वनाम्नः" (४३०—६।३।८१) "दृक्षे च" (वार्त्तिक)। तादृक्—तादृशः—तावान्—तादृक्षः॥ दीर्घः। मत्वोत्वे। अमूदृक्—अमूदृशः—अमूदृक्षः॥

In the case of a सर्वनाम, the final letter changes into आ when दृक्, दृश or वतु follows, also when दृक्ष follows. After आ is substituted, सवर्णदीर्घ follows. Thus तादृक् &c., like him. In the case of अदस्, first comes आ, next सवर्णदीर्घ giving अदा दृक् etc. Now द becomes म and आ becomes ऊ। Hence finally अमूदृक् etc., like that.

मित—। सर्वनाम्नः दृक्षे दृग्दृशवतुषु च परतः आकारः अन्तादेशः स्यात् इति वार्त्तिकान्वितस्य सूत्रस्यार्थः॥ तमिव पश्यन्ति जना इममिति विग्रहे तद् दृश् क्विन् इति स्थिते तदो दकारस्य आकारः। तथा दृश् क्विन् इति जाते सवर्णदीर्घे तादृक्। एवं तादृशः तादृक्षः॥ "यत्तदेतेभ्यः—" (१८५०—५।२।३९) इति वतुपि तद् वतुप् इति स्थिते आकारादेशे तावान्॥ अमुमिव पश्यन्ति जना इमम् इति विग्रहे अदस् दृश् क्विन् इति स्थिते आकारादेशे अद आ दृश् क्विन् इति जाते सवर्णदीर्घे

अदाद्यम् किम् इति । "अदसोऽसेः—" (४१९—८।२।८०) इति दस्य मत्वे आकारस्य च उत्वे अमूदृक् ॥ एवम् अमूदृशः, अमूदृचः । वतुप् तु अदसो न भवति ॥ इह 'अमूदृशः—अमूदृक्' इति प्रामादिको व्यत्यस्तः पाठः ॥

१०१९ । समासेऽङ्गुलेः सङ्गः ॥ ८।३।८० ॥

दी— । अङ्गुलिशब्दात् सङ्गस्य सस्य मूर्द्धन्यः स्यात् समासे । अङ्गुलिषङ्गः । 'समासे' किम् ? अङ्गुलेः सङ्गः ।

When सङ्ग is compounded with अङ्गुलि leading, its स will becomes ष । Thus अङ्गुलिषङ्गः, touch with fingers. Why समासे ? Witness अङ्गुलेः सङ्गः with स unchanged when not compounded.

मित । 'अङ्गुलेः' इति पञ्चमी । गम्यमानपरशब्दयोगे पञ्चमी । तेन समासे अङ्गुलिशब्दः पूर्वपदे, सङ्गशब्दश्च उत्तरपदे, इत्यायाति ॥ सङ्गः संस्पर्शः । भावे घञ् । तस्य । षष्ठ्यर्थे प्रथमा ॥ अङ्गुलेः सङ्गः इति विग्रहे सुब्लुकि 'अङ्गुलि सङ्ग' इति स्थिते "इण्कोः" ( २११—८।३।५७ ) इतिप्राप्तं षत्वं "सात्पदाद्योः" (२१२३—८।३।१११) इति प्रतिषिद्धम् । तस्यायं प्रतिप्रसवः ॥ असमासे तु 'अङ्गुलेः सङ्गः' इत्यत्र "नुम्-विसर्जनीय—" ( ४२४—८।३।५८ ) इति प्राप्तस्य षत्वस्य "सात्पदाद्योः" इति प्रतिषेध एव ॥

१०२० । भीरोः स्थानम् ॥ ८।३।८१ ॥

दी— । भीरुशब्दात् स्थानस्य सस्य मूर्द्धन्यः स्यात् समासे । भीरुष्ठानम् । असमासे तु भीरोः स्थानम् ।

When स्थान is compounded with भीरु leading, its स becomes ष । Thus भीरुष्ठानम्, resort of the timid. But if uncompounded स is not changed ; thus भीरोः स्थानम् ।

मित— । स्थानमिति षष्ठ्यर्थे प्रथमा इहापि भीरोः इति पञ्चमी । तेन समासे भीरुशब्दः पूर्वपदे, स्थानशब्दश्च उत्तरपदे स्थितः ॥ प्राग्वत् "सात्पदाद्योः"

( २१२३ ) इत्यस्य प्रतिप्रसव:। सति षत्वे 'भौरुष्थानम्' इति स्थिते "ष्टुना ष्टु:" (११३—८।४।४१) इति थकारस्य ठकार: ॥ भीरो: स्थानम् इत्यत्र तु प्रतिषेध एव ॥

१०२१ । ज्योतिरायुष: स्तोम: ॥ ८।३।८३ ॥

दी—। आभ्यां स्तोमस्य सस्य मूर्द्धन्य: समासे। ज्योतिष्टोम:। आयुष्टोम:। 'समासे' किम् ? ज्योतिष: स्तोम:।

When स्तोम is compounded with ज्योतिस् or आयुस् leading, its स is changed into ष। Thus ज्योतिष्टोम: a kind of sacrifice; also आयुष्टोम:। Why say समासे ? Witness the absence of ष in ज्योतिष: &c., which is uncompounded.

मित—। स्तोम: राशि:, ऋचां राशि:। तद्द्वारा यज्ञोऽपि स्तोम:। षष्ठ्यर्थे प्रथमा ॥ 'ज्योतिरायुष:' इति द्वन्द्वे कृते पञ्चमी। ज्योतिस्-शब्द: आयुस्-शब्दश्च पूर्वपदे, उत्तरपदे स्तोमशब्द:। "सात्पदाद्यो:" (२१२३) इत्यस्य प्रतिप्रसव: ॥ "खर्परे शरि—" (१५१, वा) इति विसर्गलोपे रूपम्। पक्षे लोपाभावे ज्योति:ष्टोम:, ज्योतिस्ष्टोम:। "नुमविसर्जनीय—" ( ४३४—८।३।५८ ) इति प्राप्ति: ॥

१०२२ । सुषामादिषु च ॥ ८।३।९८ ॥

दी—। सस्य मूर्द्धन्य:। शोभनं साम यस्य सुषामा। सुषन्धि:।

Words listed with सुषामन् leading have the स changed into ष। Thus सुषामा, one who chants the सामन् well; सुषन्धि:, well-jointed or a safe knot.

मित—। सुषामादय: कृतषत्वा: पठ्यन्ते ॥ 'सुषामा' इति "सात्पदाद्यो:" ( २१२३—८।३।१११ ) इत्यस्य प्रतिप्रसव:। सुषन्धिरिति षत्वम् ॥

१०२३ । एति संज्ञायामगात् ॥ ८।३।९९ ॥

दी—। सस्य मूर्द्धन्य:। हरिषेण:। 'एति' किम् ? हरिसक्थम्। 'संज्ञायाम्' किम् ? पृथुसेन:। 'अगकारात्' किम् ? विष्वक्सेन:। इण्को: इत्येव—सर्वसेन:।

स changes into ष if followed by ए and comes after इण् or कु but not after ग, provided the change makes a संज्ञा। Thus हरिषेण:, a proper name. Why say एति ? Witness हरिसक्थम् which does not change though a संज्ञा because स is the followed by थ not ए। Why say संज्ञायाम् ? Witness पृथुसेन:, a king with a mighty army, which does not change because the word is an ordinary attributive and not a संज्ञा। Why say अगात् ? Witness विष्वक्सेन: which, though a proper name of विष्णु with स followed by ए, does not change because the क in विष्वक् is really ग। For all this the स must have इण् or कु preceding. Witness सर्वसेन which though a संज्ञा and has ए after स, does not change because इण् or कवर्ग does not precede the स।

मित—। 'इण्कोः' 'सस्य षः' इत्यस्ति। 'अगात्' इति 'इण्कोः' इत्यस्य विशेषणम्॥ 'अगात्' गकारवर्जितात् 'इण्कोः' परस्य 'सस्य षः' स्यात् 'संज्ञायां' गम्यमानायाम्। षत्वेन चेत् संज्ञा गम्यते इत्यर्थः॥ "सात्पदाद्योः" (२१२३—८।३।१११) इत्यस्य प्रतिप्रसवः॥ हरिषेण इति संज्ञा॥ हरेः सिंहस्येव सक्थि हरिसक्थम्। टच् समासान्तः। संज्ञैषा अवयवार्थमनाश्रित्यैव प्रवर्तते॥ पृथ्वी विपुला सेना यस्य पृथुसेनो राजा॥ 'विष्वग्' इति गकारान्तमव्ययम्। विष्वक् समन्ततोयायिनी सेना यस्य विष्वक्सेनः। "खरि च" (१२१—८।४।५५) इति सकारे परे गकारस्य ककारः। "पूर्वत्रासिद्धम्" (१२—८।२।१) इति षत्वं प्रति ककारस्य असिद्धत्वात् इह गकारादेव परः सकारः, तेन न षत्वम्॥ सर्वसेन इत्यपि संज्ञा॥ सुषामादिषु गणसूत्रमिदमिति दीक्षितस्याशय उपरिष्टात् स्फुटीभविष्यति॥

१०२४। नक्षत्राद्वा ॥ ८।३।१००॥

दी—। एति सस्य संज्ञायामगकारात् मूर्धन्यो वा। रोहिणीषेणः—रोहिणीसेनः। 'अगकारात्' किम्? शतभिषक्सेनः। आकृतिगणोऽयम्।

स changes optionally into ष if followed by ए, the cause for the change being in a पूर्वपद designating some star, provided the change makes a संज्ञा। Thus रोहिणी etc. which is a proper name. Why say भागात्? Witness शत etc. where शतभिषज् changes its ज into ग and the ग changes into क but is regarded here as ग and bars ष। The सुषामादि list is added to from usage.

मित—। "एति संज्ञायाम्—" इति सर्वमनुवर्त्तते। तस्य च नक्षत्रवाचिनि पूर्वपदे इह विकल्पो विधीयते॥ भिषज् इति जकारः। तस्य कुत्वेन गकारः। तस्य चर्त्वमित्यादि विष्वक्सेन इव द्रष्टव्यम्॥ 'अयं' सुषामादिः 'आकृतिगणः'। एष "सुषामादिषु च" (१०२२) इति प्रागुक्तस्य सूत्रस्योपसंहारः। तेन "एति संज्ञायाम्—" "नक्षत्राद्वा" इति तत्रैव अन्तर्गतं सूत्रद्वयमिति दीक्षितस्याशयः॥

१०२५। अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु॥ ६।३।९९॥

दी—। अन्यशब्दस्य दुगागमः स्यात् आशीरादिषु परेषु। अन्यदाशीः। अन्यदाशा। अन्यदास्था। अन्यदास्थितः। अन्यदुत्सुकः। अन्यदूतिः। अन्यत्कारकः। अन्यद्रागः। अन्यदीयः। 'अषष्ठी' इत्यादि किम्? अन्यस्य अन्येन वा आशीः अन्याशीः।

अन्य receives the augment दुक् when the उत्तरपद is आशिस्, आशा, आस्थित, उत्सुक, ऊति, कारक or राग also when छ is affixed to it, but not if अन्य is षष्ठ्यन्त or तृतीयान्त। Thus अन्यदाशीः with दुक् in the sense अन्या आशीः, अन्यस्मै आशीः &c. Similarly अन्या आस्था etc. give अन्यदास्था etc. अन्यदीयः is in the sense अन्यस्मिन् भवः with छ attached. Why say 'अषष्ठी' etc.? Witness अन्याशीः etc. which have no दुक् after अन्य the sense being अन्यस्य आशीः or अन्येन आशीः etc.

मित—। आशिस्, आशा, आस्था, आस्थित, उत्सुक, ऊति, कारक, राग इत्येतेषु उत्तरपदेषु छप्रत्यये च परतः अन्यशब्दस्य दुगागमः स्यात्। षष्ठ्यन्तस्य तृतीयान्तस्य वा अन्यशब्दस्य समासे तु न इत्यर्थः॥ दुगिति ककारोकारौ इतौ। कित्त्वात् अन्ते आगमः॥ आस्था आदरः। ऊतिः रक्षा॥ अन्या आशीः इत्यादि विग्रहः। अन्यः कारकः कर्ता कर्मकारो वा अन्यत्कारकः॥ अन्यदीय इति तत्र भवं इत्यर्थे छ-प्रत्ययः। अन्यशब्दो गहादिषु द्रष्टव्यः। गहादिराकृतिगणः॥ अन्येन आशीः इति हेतुतृतीयायाः सुप्सुपेति समासः। कारकतृतीयायां तु असामर्थ्यान् समासो न स्यात्। अथवा कृतशब्दाध्याहारेण सामर्थ्यं ततः समासः, अन्यकृता आशीः अन्याशीरिति॥

दी—। कारके छे च नायं निषेधः। अन्यस्य कारकः अन्यत्कारकः। अन्यस्य अयम् अन्यदीयः। गहादेराकृतिगणत्वात् छः॥

The prohibition 'but not if, etc.' does not apply to छ and the word कारक। Thus अन्यत् etc., another's servant, or the doer of a different thing; अन्यदीयः belonging to another, the छ being available because the गहादि list has to be filled in from usage.

मित—। 'अयं निषेधः' षष्ठीतृतीयाविषयको निषेधः 'कारके' कारकशब्दे उत्तरपदे 'छे' छप्रत्यये च परतो 'न'। तत्र षष्ठ्यामपि तृतीयायामपि दुक् इत्यर्थः॥ अत्र च "अन्यस्येदमन्यदीयम्। अन्यस्य कारकोऽन्यत्कारकः" इति भाष्यप्रयोगो लिङ्गम्॥

१०२६। अर्थे विभाषा॥ ६।३।१००॥

दी—। अन्यदर्थः—अन्यार्थः।

दुक् is optional after अन्य when अर्थ is the उत्तरपद। Thus अन्यदर्थः etc., a different sense.

मित—। अर्थशब्दे उत्तरपदे अषष्ठ्यतृतीयास्थस्य अन्यशब्दस्य वा दुक्। 'अषष्ठी' इति किम्? अन्यस्य अर्थः अन्येन वा अर्थः अन्यार्थः॥

१०२७। कोः कत् तत्पुरुषेऽचि ॥ ६।३।१०१ ॥

दी—। अजादावुत्तरपदे। कुत्सितोऽश्वः कदश्वः। कदन्नम्। 'तत्पुरुषे' किम्? कूष्ट्रो राजा।

In a तत्पुरुष, if the उत्तरपद begins with a vowel, कु in the पूर्वपद changes into कत्। Thus कदश्व, an unserviceable horse; कदन्नम् bad food. Why say तत्पुरुषे? Witness कूष्ट्रः without the change in a बहुव्रीहि in कूष्ट्रो राजा, a king with an unserviceable camel corps.

मित—। कु इत्यव्ययं कुत्सितार्थे। तस्य "कुगति—" (७६१—२।२।१८) इति समासे कदादेशः स्यात् अजादि चेदुत्तरपदम् ॥

दी—। "त्रौ च" (वार्त्तिक)। कुत्सितास्त्रयः कत्त्रयः।

Also if त्रि is the उत्तरपद। Thus कत्त्रयः, the wicked three.

मित—। त्रिशब्दे च कोः कत् तत्पुरुषे ॥

१०२८। रथवदयोश्च ॥ ६।३।१०२ ॥

दी—। कद्रथः। कद्वदः।

Also when रथ or वद is the उत्तरपद। Thus कद्रथः a bad chariot; कद्वदः a bad speaker.

मित—। रथशब्दे वदशब्दे च उत्तरपदे कोः कत्तत्पुरुषे ॥ वदतीति वदः वक्ता। पचाद्यच्। कुत्सितो वद इति विग्रहः ॥

१०२९। तृणे च जातौ ॥ ६।३।१०३ ॥

दी—। कत्तृणम्।

Also when तृण is the उत्तरपद provided the compound is a class name. Thus कत्तृणम् a sort of reed.

मित—। रथशब्दे च उत्तरपदे कोः कादेशः स्यात् तत्पुरुषे समुदायश्चेत् तृणजाति-विशेषस्य नाम ॥

१०३० । का पथ्यक्षयोः ॥ ६।३।१०४ ॥

दी—। कापथम् । काक्षः अक्षशब्देन तत्पुरुषः, अक्षि-शब्देन बहुव्रीहिर्वा ।

कु becomes का if the उत्तरपद is पथिन् or अक्ष । Thus कापथम्, a bad road ; काक्षः bad eye, or defective axle. The last is either a तत्पुरुष with अक्ष or बहुव्रीहि with अक्षि ।

मित—। पथिन्शब्दे अक्षशब्दे च परतः कुशब्दस्य कादेशः स्यात् (तत्पुरुषे ?)। कुत्सितः पन्थाः इति विग्रहे "ऋक्पूरब्—" (९४०—५।४।७४) इति अप्रत्ययः समासान्तः। "पथः संख्या—" (८२३ वा०) इति नपुंसकम् ॥ अक्षः रथाङ्गम्। कुत्सितः अक्षः इति तत्पुरुषः। इन्द्रियार्थे तु अक्षशब्दः क्लीबे तेन समासे काक्षमिति स्यात् ॥ बहुव्रीहिपक्षे "बहुव्रीहौ—" (८५२—५।४।११३) इति षच्। परन्तु द्वियोऽयं पक्षः। 'तत्पुरुषे' इति पूर्वं परस्यानुवर्तते, अत्र तन्न सम्बध्यते इत्यसमञ्जसम्। 'पथिन्' इति यद्वत्तत रूपम् 'अक्ष' इति तत्तत्काक्षशान्तमित्यपि न समीचीनम् ॥

१०३१ । ईषदर्थे ॥ ६।३।१०५ ॥

दी—। ईषज्जलं काजलम् । अजादावपि परत्वात् कादेशः—काम्लः ।

कु becomes का also when it means 'slight', incomplete' &c. Thus काजलम्, a little water. In the case of an उत्तरपद beginning with a vowel and कु meaning ईषत्, there is conflict between rule 1027 and this rule. But this rule, coming later, sets aside rule 1027. Thus काम्लः, slightly acid, with का instead of कत् ।

मित—। ईषदर्थे वर्तमानस्य कुशब्दस्य कादेशः स्यात् तत्पुरुषे ॥ ईषदम्ल

इति विग्रहे अजाद्युत्तरपदे "कोः कत्—" (१०२७) इति प्राप्तम् अनेन च 'का' इति। परत्वात् कादेश एव भवति। काक्ष इति अक्षशब्द आक्षशब्दो वा ॥ ईषदर्थे कुत्सिताद्भिन्नम्। दुष्परिणतं कुत्सितम्, सुपरिणामाभिमुखमपरिणतम् ईषत् इति विवेकः ॥

१०३२। विभाषा पुरुषे ॥ ६।३।१०६ ॥

दी—। कापुरुषः—कुपुरुषः॥ अप्राप्तविभाषेयम्। ईषदर्थे हि पूर्वविप्रतिषेधान्नित्यमेव—ईषत् पुरुषः कापुरुषः॥

कु optionally becomes का if पुरुष is the उत्तरपद in a तत्पुरुष। Thus कापुरुषः &c., a deformed man. This case is not covered by "ईषदर्थे" (1031) when कु means कुत्सित (not ईषत्)। Hence the option is for an unprovided for case. If कु means ईषत् the का is compulsory setting aside the option allowed by this rule; thus कापुरुषः, incomplete man.

मित—। कोशब्दस्य विभाषा कादेशो भवति पुरुषशब्दे उत्तरपदे॥ सामान्येन विधानं कुत्सितार्थे च ईषदर्थे च। तत्र कुत्सितार्थे अप्राप्तः ईषदर्थे पूर्वेण प्राप्तः कादेशः। यः अप्राप्तः कुत्सितार्थे कादेशः तस्य इयं विभाषा। तदाह 'अप्राप्तविभाषेयम्' इति। तेन कुत्सितः पुरुषः कापुरुषः कुपुरुषो वा॥ यस्तु ईषदर्थे पूर्वेण प्राप्तः कादेशः नेयं तस्य विभाषा। स परानपि विभाषामिमां बाधते। सोऽयं स्वाभाविकस्य परविप्रतिषेधस्य बाधक इह पूर्वविप्रतिषेधः। तेन ईषत् पुरुष इति विग्रहे नित्ये कादेशे कापुरुष इत्येव॥

१०३३। कवञ्चोष्णे ॥ ६।३।१०७ ॥

दी—। उष्णशब्दे उत्तरपदे कवं का च वा स्यात्। कवोष्णम्—कोष्णम्—कदुष्णम्।

कु becomes का or कव optionally when उष्ण is the उत्तरपद। Thus कवोष्णम् &c., tepid.

मित — । 'विभाषा' इत्यनुवर्तते । स्वभावादीपदर्थे आदेशः । तत्र चकारेण 'वा' इत्यस्य समुच्चयः । विभाषया वाकवाभ्यां मुक्ते अजादावुत्तरपदे कत् भवति । तेन त्रीण्यपि रूपाणि ।

१०३४ । पृषोदरादीनि यथोपदिष्टम् ॥ ६।३।१०९ ॥

**कौ — । पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि स्युः । पृषदुदरं पृषोदरम् । तलोपः ॥ वारिवाहको बलाहकः । पूर्वपदस्य बः, उत्तरपदादेश लत्वम् ॥**

**भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् ।**
**गूढोत्मा वर्णविकृतेर्वर्णनाशात् पृषोदरम् ॥**

Words like पृषोदर, the belly of a stag, in the form they are pronounced by the older sages, are to be deemed as regular. Thus पृषोदर for पृषदुदर with the elision of त ; बलाहक for वारिवाहक, water-carrier, with ब substituted for वारि and ल for the first letter of the उत्तरपद । Similarly हंस has a letter added, सिंह has letters transposed, गूढोत्मा has a letter substituted and पृषोदर a letter elided.

मित — । पृषोदरम् आदिः प्रकार एषां पृषोदरादीनि पृषोदरसदृशानि इत्यर्थः, तान्यप्यव्यभिचारवन्ति इति शेषः । यथा उपदिष्टम् इति भिन्ने पदे । उपदिष्टम् उच्चारितम्, शिष्टैः अभियुक्तैः ऋषिभिरित्यर्थः । एवं हि भाष्यम् ॥ प्राचीनास्तु उपदिष्टमिति भावे क्तः । यथोपदिष्टमिति यथार्थेऽव्ययीभावः इत्याहुः । तन्मते शिष्टोच्चारणमनतिक्रम्य साधुता भवति । तेन शिष्टोच्चारणातिक्रमात् पृषदुदरम्, वारिवाहक इत्यादीनामसाधुता प्राप्नोति । तत्र भाष्योक्तमेव न्याय्यम् । उपदिष्टमित्येकवचनन्तु जातिपरम् ॥ प्रत्येकाभिप्रायेण वा । यत् यत् यथा उच्चारितं तत्तत् तथा इति । 'तथैव' इत्येवशब्दः अवधारणार्थे न तु अन्ययोगव्यवच्छेदे ॥ पृषतः कृतवृत्तिविशेषस्य

'उदरं पृषोदरम्। इह पृषदुदरम् इत्यस्य तलोपे सति वर्णनाशः॥ वारिवाहक इत्यत्र वारिशब्दस्य 'व' वाहकस्य 'वाहक' इति वर्णविकृतिः॥ सूत्रमिदमशास्त्रविहितस्य साधुतामाह न तु यथाप्राप्तस्य असाधुतामपि। तेन वारिवाहकादयोऽपि भवन्ति॥ हन्ति गच्छति साधु गच्छतीति पञ्चाद्यचि हन इति वर्णागमे सकारागमे हंसः॥ हिनस्तीति पञ्चाद्यचि हिंस इत्यत्र हकारसकारयोर्विपर्यये सिंहः। गूढः आत्मा यस्य गूढात्मा इत्यत्र आकारस्य ओकाररूपे विकारे गूढोत्मा। यद्वा एकादेशात् प्रागेव आत्मा इत्यस्य उत्मा इति विकारे गूढोत्मा इति॥

**टी—। "दिक्शब्देभ्यस्तीरस्य तारभावो वा" (वार्त्तिक)। दक्षिणतारम्—दक्षिणतीरम्। उत्तरतारम्—उत्तरतीरम्।**

तीर optionally becomes तार coming as an उत्तरपद after a दिक्शब्द in the पूर्वपद। Thus दक्षिण etc., the south bank. उत्तर &c., the north bank.

मित—। 'दिक्शब्देभ्यः' इति पञ्चमीनिर्देशात् दिक्शब्दानां पूर्वपदत्वम्। उत्तरपदे यस्तीरशब्दः तस्य तारभावो वा दिक्शब्दे पूर्वपदे॥

**टी—। "दुरो दाशनाशदभध्येषूत्वमुत्तरपदादेः ष्टुत्वञ्च" (वार्त्तिक)। दुःखेन दाश्यते दूडाशः। दुःखेन नाश्यते दूणाशः। दुःखेन दभ्यते दूडभः। खल् त्रिष्वपि। दभेर्नलोपो निपात्यते। दुःखेन ध्यायतीति दूढ्यः। "आतश्च—" (२८९८—३।१।१३६) इति कः॥ भ्रुवन्तोऽस्यां सीदन्तीति ब्रुसी। भ्रुवच्छब्दस्य 'ब्रु' आदेशः। सदेरधिकरणे डट्। आकृतिगणोऽयम्॥**

The final of दुर् becomes ऊ when दाश, नाश, दभ, or ध्य is the उत्तरपद and then the first letter of the उत्तरपद changes into the corresponding letter of the टवर्ग। Thus दूडाशः, given with

difficulty; दूणाशः, killed with difficulty; दूडभः, challenged with difficulty. These three have खल्। दूडभ elides the nasal by निपातन in this very Varttika. Similarly दूढ्यः, meditates with difficulty. Here the affix is क by the rule "आतश्चोप—" (2898). One more example of पृषोदरादि words is वृसी, seat on which one sits while speaking one's first words, i. e., a seat of Kusa grass offered to guests on arrival. Here वृवत् becomes वृ। The root सद् takes here डट् in the sense of अधिकरण। This गण is determined from usage.

मित—। दुरः इति षष्ठी। दुरः उत्वं भवति, अन्त्यस्य अलो भवति। तेन दु ऊ दू इति जातम्॥ कदा एवं भवति? दाश, नाश, दभ, ध्य इत्येतेषु परतः, एतेषु उत्तरपदेषु इत्यर्थः। किञ्च उत्तरपदस्य य आदिर्वर्णः तस्य ष्टुत्वं टवर्गादेशो भवति। ततो दूदाश इत्यस्य दूडाश, दूनाश इत्यस्य दूणाश, दूदभ इत्यस्य दूडभ, दूध्य इत्यस्य दूढ्य इति रूपम्॥ व्युत्पत्तिश्च दुःखेन दाश्यते दीयते, दुःखेन नाश्यते हन्यते दुःखेन दभ्यते प्रतिस्पर्धते हिंस्यते वा इति कर्मणि खलि। अन्ये तु इहैव निपातनात् अनुनासिकलोपे दूडभ न तु दूडम्भ इति॥ वृवन्तः अस्यां सीदन्ति इति वृवच्छब्दे उपपदे सीदतेः डट् अधिकरणे। डित्वात् टिलोपे स्त्रियां ङीपि वृसी कुशासनम्। आगमनकाले अतिथिष्वभ्यागते झटिति कुशासनं दीयते स च वृवन्नेव तत्रोपविशति तदाह 'प्र वन्तोऽस्याम्' इत्यादि॥ अयं पृषोदरादिः 'आकृत्या गच्छते' प्रयोगदर्शनादनुमीयते॥

१०२५। संहितायाम्॥६।३।११४॥

दी—। अधिकारोऽयम्।

Henceforth what is said relates to संहिता (euphonic combination).

मित—। वर्णानामतिशयितः सन्निधिः संहिता इत्यु च्यते। अनन्तरोक्तानि सूत्राणि संहितायां विषये मन्तव्यानि इत्यर्थः॥

१०३६। कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नछिन्नछिद्रस्रुवस्वस्तिकस्य॥ ६।३।११५॥

दी—। कर्णशब्दे परे लक्षणवाचकस्य दीर्घः। द्विगुणाकर्णः। 'लक्षणस्य' किम्? शोभनकर्णः। 'अविष्टादीनाम्' किम्? विष्टकर्णः। अष्टकर्णः। पञ्चकर्ण। मणिकर्णः। भिन्नकर्णः। छिन्नकर्णः। छिद्रकर्णः। स्रुवकर्णः। स्वस्तिककर्णः।

When कर्ण is the उत्तरपद, the preceding word, if indicating a distinctive mark has its final lengthened when it is a short vowel. Thus द्विगुणा etc., having its ears doubled. Why say लक्षणस्य? Witness शोभन etc., having fine ears. Why say अविष्टादीनाम्? Witness विष्ट etc., having ears smeared with paint (?); अष्ट etc., having eight marks on the ears; पञ्च etc., having five marks etc.; मणि etc., having the figure of a gem pained on the ears; भिन्न etc., having split ears; छिन्न etc., having mutilated ears; छिद्र etc. having ears pierced; स्रुव etc., having the representation of a स्रुव painted on the ears; स्वस्तिक etc., having the representation of a स्वस्तिक painted on the ears.

मित—। उत्तरपदाधिकारोऽस्ति। परे उत्तरपदे इत्यर्थः। लक्षणं चिह्नम्। यत् पशूनामङ्गे स्वामिपरिज्ञानार्थं क्रियते तत्। 'दीर्घः' इति "द्रूलोपे—" (१०७—६।३।१११) इत्यतोऽनुवर्तते॥ द्विगुणौ कर्णौ अस्य द्विगुणाकर्णः यस्य कर्णे कर्णाकारश्चिह्नितः सः (?) यस्य वा द्विधा भिन्नौ कर्णौ॥ शोभनत्वं न स्वामिनः परिज्ञायकं तेन न दीर्घः॥ विष्टौ व्याप्तौ रञ्जनद्रव्येण कर्णौ यस्य विष्टकर्णः (?)॥ अष्टौ अष्टसंख्यकौ अष्टधा भिन्नौ वा कर्णौ अस्य अष्टकर्णः॥ एवं पञ्चकर्णादयः॥

१०२७। नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ॥ ६।३।११६ ॥

टी—। क्विबन्तेषु परेषु पूर्वपदस्य दीर्घः। उपानत्। नीवृत्। प्रावृट्। मर्मावित्। नीरुक्। अभीरुक्। ऋतीषट्। परीतत्। 'क्वौ' इति किम्? परिणहनम्। "विभाषापुरुषे" (१०३२) इत्यतो मण्डूकप्लुत्या 'विभाषा' अनुवर्त्तते। सा च व्यवस्थिता। तेन गतिकारकयोरेव। नेह—पटुरुक्, तिग्मरुक्।

The final of the पूर्वपद, if a vowel, is lengthened when the roots नह, वृत, वृष, व्यध, रुच, सह, तन follow with क्विप् attached. Thus उपानत्, shoes; नीवृत्, a country; प्रावृट्, the rains; मर्मावित्, that which rends the vitals; नीरुक्, bright; अभीरुक्, dazzling; ऋतीषट्, tolerant of censure; परीतत्, spreading all round. Why say क्वौ? Witness परिणहनम् without lengthening of इ in परि। विभाषा comes in here at a bound like a frog from the rule "विभाषा—" (1032) and the option is restricted, lengthening being allowed when the पूर्वपद is a गति or a कारक and not allowed in other cases. Hence पटुरुक्, तिग्मरुक् etc., are unchanged because पटु, तिग्म etc., are neither गति nor कारक।

मित—। 'उत्तरपदे' इत्यस्ति 'दीर्घः' इति च। पूर्वपदस्याक्षिप्तमुत्तरपदेन। क्वौ परे ये नह्यादयो धातवः तेषु, क्विबन्तेषु तेषु इत्यर्थः, उत्तरपदेषु पूर्वपदस्य दीर्घः स्यात्॥ उपनह्यति पादौ बध्नाति इत्युपानत्। "नहो धः" (४४०—८।२।३४) इति धः। जश्त्वं, चर्त्वविकल्पः॥ नितरां वर्त्तते इति नीवृत्॥ प्रवर्षतीति प्रावृट्। जश्त्वे, चर्त्वविकल्पः॥ मर्म विध्यतीति मर्मावित्। "ग्रहिज्या—" (२४१२—६।१।१६) इति सम्प्रसारणम्॥ नितरां रोचते इति नीरुक्॥ आभिमुख्येन रोचते इत्यभीरुक्॥ ऋतिमपमानं सहते इति ऋतीषट् छान्दसं षत्वम्।

'द्रो ढः' ( २२४—८।३।१३ ) इति ढः, जश्त्वं, चर्त्वविकल्पः ॥ परि समन्तात् तनुते इति परीतत्। गमादित्वान्नलोपः ॥ परिणनहनम् इत्यत्र मुद्रितेषु पुस्तकेषु मूर्धन्यभावो दृश्यते स च प्रमादजः ॥ 'सा च व्यवस्थिता' इत्यस्य अयमर्थः—इह न हि एकस्मिन्नेवोदाहरणे दीर्घो भवति न च भवति किन्तु केषुचित् भवति केषुचित् न। गतिकारकयोर्दीर्घो भवति इतरस्य न। तथा च उपानत्, नीहत्, प्रावृट्, नीरुक्, अभीरुक्, परीतत् इत्येतेषु गतेर्दीर्घः। मर्माविध्, ऋतीषट् इत्येतयोः कारकस्य। पटु, सिक्थ इति न गतिर्नापि कारकम्, तेन न दीर्घः ॥

१०३८। वनगिर्य्योः संज्ञायां कोटरकिंशुलुकादीनाम् ॥

६।३।११७ ॥

दी—। कोटरादीनां वने परे किंशुलुकादीनां गिरौ परे च दीर्घः स्यात् संज्ञायाम्।

कोटर etc., have दीर्घ when वन follows and किंशुलुक etc. have it when गिरि follows as the उत्तरपद if the compound is a संज्ञा।

मित—। वनगिर्य्योः उत्तरपदयोः इत्यर्थः ॥ कोटरश्च किंशुलुकश्च कोटरकिंशुलुकौ। तौ च तयोरादयश्च कोटरकिंशुलुकादयः, तदन्ता इत्यर्थः। तेषाम्। कोटरकिंशुलुकौ आदी येषामिति तु न। परसूत्रे कोटरादयो निर्दिष्टा एव न पुनः कोटरशब्दमादितः कृत्वा ॥ कोटरादयो वनशब्देन किंशुलुकादयो गिरिशब्देन यथासंख्यं नेयाः ॥ कोटराणां वृक्षविशेषाणां वनम् इति विग्रहे कोटरावन इति स्थिते—

१०३९। वनं पुरगामिश्रकासिध्रकाशारिकाकोटराग्रेभ्यः ॥

८।४।४ ॥

दी—। वनशब्दस्य उत्तरपदस्य एभ्य एव णत्वं नान्येभ्यः। इह कोटरान्ताः पञ्च दीर्घविधौ कोटरादयो बोध्याः। तेषां कृतदीर्घाणां णत्वविधौ निर्देशो नियमार्थः। अग्रेशब्दस्य तु विध्यर्थः। पुरगावणम्। मिश्रकावणम्। सिध्रकावणम्॥

शारिकावणम् । कोटरावणम् । 'एभ्य एव' इति किम् ? असिपत्रवनम् ॥ वनस्याग्रे अग्रेवणम् । राजदन्तादिषु निपातनात् सप्तम्या अलुक् । प्रातिपदिकार्थे प्रथमा ॥ किंशुलुकागिरिः ॥

वन in the उत्तरपद will have its न changed into ण when it comes after पुरगा, मिश्रका, सिध्रका, शारिका, कोटरा and अग्रे and not in any other case. The five words here ending with कोटरा are referred to by कोटरादि in the rule "वनगिर्योः—" (1031) enjoining दीर्घ of the final. In the rule "वनं पुरगा—" the words occur with the final already lengthened. But the lengthening is in the matter of a संज्ञा only. Hence the णत्व after these five is in the case of a संज्ञा only. Now, the णत्व in a संज्ञा is already secured by the rule "पूर्वपदात्—" (857—8. 4. 3). Hence the present rule is restrictive, i. e. it means that वन final in a संज्ञा will change न into ण only when after the five पुरगा etc. In the case of अग्रे, since अग्रेवण is no संज्ञा, the rule is permissive. Thus पुरगा etc. These are all संज्ञा of certain forests. Why say 'एभ्य एव ? Witness असि etc. without ण though the word is a संज्ञा and the cause for the change exists in the पूर्वपद । अग्रेवणम् means just beyond the forest. The सप्तमी is retained through निपातन in the राजदन्तादि list and, although the exposition has the sense of the locative prominent in it, that sense is now the sense of the प्रातिपदिक resulting from the समास । Hence we have प्रातिपदिकार्थे प्रथमा in अग्रेवणम् । किंशुलुका etc. the hill of किंशुलुक trees (?).

मिता—। वने वनस्य प्रत्यये।. प्रत्ययार्थे प्रथमा। 'पूर्वपदात्' इत्यनुवर्तते।

पुरगादयः पूर्वपदस्य विशेषणानि । तेन पुरगादिभ्यः पूर्वपदेभ्यः वनस्य णत्वं स्यात् इत्यर्थः ॥ किञ्च पुरगादयः "वनगिर्योः—(१०३८) इति संज्ञायामेव, दीर्घान्ताः । अतो दीर्घेभ्य एतेभ्यो यदिह णत्वमुच्यते तत् संज्ञायां णत्वम् । संज्ञायाञ्च "पूर्वपदात् संज्ञायामगः" (८५७—८।४।३) इति सिद्धमेव णत्वम् । एवं सिद्धे सति अयमारम्भो नियमार्थः—पुरगादिभ्य एव णत्वं नान्येभ्यः—इति । पुरगावणप्रभृतयो वनविशेषाणां संज्ञाः । असिपत्रवनम् इति नरकविशेषस्य संज्ञा ॥ अयं वणमिति न संज्ञा, तदिह अप्राप्तं णत्वं विधीयते । सप्तम्यर्थप्रधानोऽयं समासः । स चार्थः सति समासे प्रातिपदिकार्थः संवृत्तः । तेन प्रातिपदिकार्थे प्रथमा ॥

## १०४० । वले ॥ ६।३।११८ ॥

दी— । वलप्रत्यये परे दीर्घः स्यात् संज्ञायाम् । कृषीवलः ।

The final of the stem, if a vowel, is lengthened when वलच is affixed to indicate a संज्ञा । Thus कृषीवलः, a farmer.

मित— । संज्ञायां किम् ? पुत्रवलः ॥

## १०४१ । मतौ बह्वचोऽनजिरादीनाम् ॥ ६।३।११९ ॥

दी— । अमरावती । 'अनजिरादीनाम्' किम् ? अजिरवती । बह्वचः किम् ? व्रीहिमती । 'संज्ञायाम्' इत्येव, नेह— वलयवती ।

Of a stem of more than two vowels, the final, if a vowel, is lengthened when मतुप् is attached, the whole being a संज्ञा ; but not if the stem is of the अजिरादि class. Thus अमरावती । Why say बह्वचः ? Witness व्रीहिमती which is a संज्ञा, but व्रीहि, having only two vowels, does not lengthen the final. The word must be a संज्ञा । Witness वलयवती, provided with a barcelet, which has a stem of more than two vowels, but not being a संज्ञा the stem does not lengthen its final.

मित—। बह्वचः प्रातिपदिकस्य दीर्घः स्यात् मतौ परे संज्ञायां विषये, अजिरादीनां तु न ॥ मस्य वत्वेऽपि एकदेशविकृतस्य अनन्यत्वात् मतुबेव सः ॥

१०४२। शरादीनाञ्च ॥ ६।३।१२० ॥

दी—। शरावती।

Words of the शरादि class lengthen their final when मतुप् is attached in the case of a संज्ञा। Thus शरावती। अजिरवती, व्रीहिमती, शरावती etc. are names of rivers. The first is infested by frogs (अजिर) the second flows through paddy fields, the third passes through reeds (शर)।

मित—। शरादीनां प्रतिपादिकानां दीर्घः स्यात् मतौ परे संज्ञायां विषये। शरवणान्तर्गामिनी नदी शरावती ॥ पूर्वसूत्रोक्ता अजिरवत्यादयोऽपि नदीनामानि एव स्युः। अजिरो भेकः। भेकबहुला नदी अजिरवती। व्रीहिखण्डान्तर्वाहिनी नदी व्रीहिमती। इत्यादि ॥ शरादिराकृतिगणः ॥

१०४३। इको वहेऽपीलोः ॥ ६।३।१२१ ॥

दी—। इगन्तस्य दीर्घः स्याद्वहे। ऋषीवहम्। कपीवहम्। 'इकः' किम्? पिण्डवहम्। 'अपीलोः' किम्? पीलुवहम्।

A पूर्वपद ending in इ, उ, or ऋ lengthens its final when वह is the उत्तरपद but not if the पूर्वपद is पीलु। Thus ऋषी etc. Why say इकः? Witness पिण्ड etc. Why say अपीलोः? Witness पीलु etc. carrying पीलु trees.

मित—। वहतीति वहः। पचाद्यच्। इगन्तस्य पूर्वपदस्य दीर्घः स्यात् वहशब्दे उत्तरपदे पीलुशब्दस्य तु न दीर्घः ॥ ऋषीणां वह इत्यादि षष्ठीसमासः। पीलु वृक्षविशेषः। 'यत्र पीलुवनान्यु त" इति भारते।

दी—। "अपील्वादीनामिति वाच्यम्" (वार्त्तिक)। दारुवहम्।

We should say 'not of words of the पील्वादि class'. Thus दारुवहम् does not lengthen the उ of दारु।

मित—। आदिशब्दः प्रकारे। पील्वादीनां पीलुप्रकाराणां न दीर्घः॥

१०४४। उपसर्गस्य घञ्यमनुष्ये बहुलम्॥ ६।३।१२२॥

दी—। उपसर्गस्य बहुलं दीर्घः स्यात् घञन्ते परे न तु मनुष्ये। परीपाकः—परिपाकः। 'अमनुष्ये' किम्? निषादः।

The final of an उपसर्ग, if a vowel, is lengthened when the root following takes घञ् and the word does not refer to a human being; but there is no uniformity in the matter. Thus परीपाक etc. Why say अमनुष्ये? Witness निषाद, a low-class hunter, which does not lengthen नि।

मित—। निषीदत्यस्मिन् पापं निषादो लुब्धकजातिभेदः। "हलश्च" (३३००—३।३।१२१) इत्यधिकरणे घञ्। अत्र न दीर्घः॥ बहुलग्रहणात् अनुग्रहे प्रसाद इति घञि न दीर्घः, हर्म्ये प्रासाद इति न ह्रस्वः। साद्दृश्ये भेदे वा प्रकार इति घञि न दीर्घः, प्राचीरे प्राकार इति न ह्रस्वः। इत्येवं मन्यते। अतएव "सादकारयोः कृत्रिमे" इति वार्त्तिकमिह परिहरति॥

१०४५। इकः काशे॥ ६।३।१२३॥

दी—। इगन्तस्य उपसर्गस्य दीर्घः स्यात् काशे। वीकाशः। नीकाशः। 'इकः' किम्? प्रकाशः।

An उपसर्ग ending in इ or उ lengthens its final when काश follows as उत्तरपद। Thus वीकाश etc., that which shines well. Why say इकः? Witness प्रकाश, that which shines.

मित—। विशेषेण काशते वीकाशः। नितरां काशते नीकाशः। प्रकर्षेण काशते प्रकाशः। सर्वत्र पचाद्यच्॥ "मुदा विकाशं मुनिमभ्युपेयुषी" इति तु भावे घञ्। बाहुलकात् दीर्घाभावः॥

१०४६। अष्टनः संज्ञायाम्॥ ६।३।१२५॥

दी—। उत्तरपदे दीर्घः। अष्टापदम्। 'संज्ञायाम्' किम्? अष्टपुत्रः।

When an उत्तरपद follows, अष्टन् lengthens its final after the elision of न if the compound is a संज्ञा। Thus अष्टापद gold. Why say संज्ञायाम्? Witness अष्टपुत्र, having eight sons.

मित—। संज्ञायां विषये अष्टन्शब्दस्य पूर्वपदभूतस्य दीर्घः स्यात् उत्तरपदे परे। अष्ट पदानि स्थानानि यस्य अष्टापदम्। सुवर्णस्य संज्ञा॥

१०४७। चितेः कपि॥ ६।३।१२७॥

दी—। एकचितीकः। द्विचितीकः।

The word चिति lengthens its final when कप् is attached. Thus एक etc., having one heap of bricks etc.

मित—। एका चितिः चयो राशिः मृदां वा इष्टकानां वा यस्य इत्यादि विग्रहः। "शेषाद्विभाषा" (८८१—५।४।१५४) इति कप्॥

१०४८। नरे संज्ञायाम्॥ ६।३।१२९॥

दी—। विश्वानरः।

The final of the पूर्वपद, if a vowel, lengthens when नर is the उत्तरपद। Thus विश्वानरः, one who deems all men his own.

मित—। 'विश्वस्य' इति पूर्वसूत्रादनुवर्तते। नरे उत्तरपदे विश्वस्य पूर्वपदभूतस्य दीर्घः स्यात् संज्ञायां विषये॥ विश्वे नरा यस्य विश्वानरः कस्यचिन्नाम॥

१०४९। मित्रे चर्षौ ॥ ६।३।१३० ॥

दी—। विश्वामित्र:। 'ऋषौ' किम्? विश्वमित्रो माणवक:।

Also when मित्र is the उत्तरपद the compound being a संज्ञा of of some ऋषि। Thus विश्वामित्र, a celebrated sage. Why say ऋषौ? Witness विश्वमित्र in विश्व etc., the little fellow has all for his friend.

मित—। 'विश्वस्य' इत्यस्ति। मित्रे चोत्तरपदे ऋषौ अभिधेये विश्वशब्दस्य दीर्घ:॥ विश्वं मित्रमस्य विश्वामित्र: कौशिकस्य नाम ॥

दी—। "शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्य:" (वार्त्तिक)। श्वादन्त: इत्यादि।

The word श्वन् lengthens its final after the elision of न when दन्त etc., are the उत्तरपद। Thus श्वादन्त etc., a dog's tooth etc.

मित—। श्वन् शब्दस्य दीर्घ: स्यात् दन्तादिषु उत्तरपदेषु ॥ शुना दन्त: श्वादन्त:। शुनो दन्त इव दन्ता: अस्य इति बहुव्रीहिर्वा ॥ श्वाकुन्दं कुन्दसदृशस्य पुष्पविशेषस्य नाम (?) ॥ श्वा च वराहश्च श्वावराहम्। द्वन्द्व: "येषाञ्च विरोध:—" (९१३—२।४।९) इति एकवद्भाव: ॥ नागेशस्तु प्रयोगत एषां साधुत्वं मन्यते ॥

१०५०। प्रनिरन्त:शरेक्षुप्लक्षाम्रकार्ष्यखदिरपीयूक्षाभ्योऽसंज्ञायामपि ॥ ८।४।५ ॥

दी—। एभ्यो वनस्य णत्वं स्यात्। प्रवणम् ॥ कार्ष्यवणम्। इह षात्परत्वात् णत्वम्।

The न of वन in the उत्तरपद becomes ण also when the compound is not a संज्ञा if प्र, निर्, अन्तर्, शर, इक्षु, प्लक्ष, आम्र, कार्ष्य, खदिर,

पीयूक्षा are the पूर्वपद। Thus प्रवणम्, deep forest; कार्ष्य etc. forest of Karshya (?). In the last the cause for ण is ष, hence कार्श्य with a palatal is a mis-reading.

मित—। पूर्वसूत्रात् 'वनम्' इत्यनुवर्तते। 'पूर्वपदात्' इत्यनेन चाचिसमुत्तरपदमित्युक्तं प्राक्। तेन 'वनम्' इत्युत्तरपदम्, पञ्चम्यन्ताः प्रादयः पूर्वपदानि। 'असंज्ञायामपि' इत्यपिशब्दबलेन सामान्यतः संज्ञायामसंज्ञायाञ्च विधिः॥ प्रकृष्टं वनं प्रवणम्, निर्गतं निर्मूलं वा वनं निर्वणम्। प्रादिसमासौ॥ वने इत्यर्थे अन्तर्वणम् अव्ययीभावः॥ शरवणादयः षष्ठीसमासाः॥ इह असंज्ञायां समानपदे विहितं णत्वं पूर्वपदस्थान्निमित्तान्न प्राप्नोति इति प्रनिरादिभ्यः अप्राप्ते, क्वचिच्च "विभाषौषधि—" (१०५१) इति विकल्पे प्राप्ते विधिः। संज्ञायाञ्च "वनं पुरगा—" (१०४९—८।४।४) इत्यत्र पुरगादिभ्य एव वननकारस्य णत्वं विहितं प्रनिरादिभ्यो न प्राप्नोति इत्यप्राप्ते एव विधिः॥ इह 'कार्ष्यवणम्' इत्यत्र यदि षकारो णत्वस्य निमित्तं माश्रीयते तदा षकारेण व्यवहितो रेफ इति रेफाश्रयं णत्वमपि न भवति। तदाह 'षात्परत्वात् णत्वम्' इति॥

१०५१। विभाषौषधिवनस्पतिभ्यः॥ ८।४।६॥

दी—। एभ्यो वनस्य णत्वं वा स्यात्। दूर्वावणम्—दूर्वावनम्। शिरीषवणम्—शिरीषवनम्।

The न of वन optionally changes into ण when herb-names or names of trees are in the पूर्वपद। Thus दूर्वा etc. (herbs); शिरीष etc. (trees).

मित—। ओषधयः फलपाकान्ताः। 'वनस्पतिः' वृक्षमात्रम्। ओषधिवाचिभ्यः पूर्वपदेभ्यः वृक्षवाचिभ्यश्च वननकारस्य णत्वं वा स्यात्। दूर्वेति ओषधिः, शिरीष इति वृक्षः॥

दी—। "द्व्यच् त्र्यज्भ्यामेव" (वार्त्तिक)। नेह—देवदारुवनम्।

This applies only to a पूर्वपद of two or three vowels. Thus देवदारुवनम् does not take णत्व because देवदारु has four vowels in it.

मित—। पूर्वपदं यदि द्व्यच् त्र्यच् वा भवति तदैव अस्य सूत्रस्य प्रवृत्ति: नान्यथा ॥

दी—। "इरिकादिभ्य:प्रतिषेधो वक्तव्य:" (वार्त्तिक)। इरिकावनम्। मिरिकावनम्।

The न of वन does not change if the पूर्वपद is one of the इरिकादि class. Thus इरिका etc.

मित—। इरिकादय: ओषधिविशेषा:। इरिकादिभ्य: परस्य वन-नकारस्य णत्वं न भवति॥ इरिकादिराकृतिगण:॥

१०५२। वाहनमाहितात्॥ ८।४।८॥

दी—। आरोप्य यदुह्यते तद्वाचिस्थात् निमित्तात् परस्य वाहन-नकारस्य णत्वं स्यात्। इक्षुवाहणम्। 'आहितात्' किम्? इन्द्रवाहनम्। इन्द्रस्वामिकं वाहनमित्यर्थ:। वहेर्ल्युटि वृद्धिरिहैव सूत्रे निपातनात्।

The न of वाहन becomes ण when the cause for the change is in a पूर्वपद designating what is placed on back and carried. Thus इक्षु etc., draft animal carrying sugar-canes. Why say आहितात्? Witness इन्द्रवाहनम् without ण the sense being Indra's mount, and not implying that इन्द्र is actually on its back. In वाहन, there is वृद्धि in वह with ल्युट् by निपातन in this very rule.

मित—। आहितं पृष्ठे कृतम्॥ उह्यते अनेन इति वाहनम्। करणे ल्युट्। अत्रैव निपातनात् वृद्धि:। षष्ठ्यर्थे प्रथमा॥ आहितवाचके पूर्वपदे यदा निमित्तं तदा

वाहनशब्दस्य उत्तरपदभूतस्य नकारस्य णकारः स्यात् ॥ इक्षूणां वाहनम् इक्षुवाहणम् । गवा महिषेण वा उह्यमानेषु णत्वम् ॥ इन्द्रस्वामिकं वाहनम्, न हि तदानीमाहित-सन्निरिन्द्रः इति न णत्वम् ।

१०५३ । पानं देशे ॥ ८।४।९ ॥

दी—। पूर्वपदस्थात् निमित्तात् परस्य पानस्य नस्य णत्वं स्यात् देशे गम्ये । क्षीरं पानं येषां ते क्षीरपाणा उशीनराः । सुरापाणाः प्राच्याः । पीयते इति पानम्, कर्मणि ल्युट् ।

When the cause for the change is in the पूर्वपद the न of पान becomes ण if there is reference to some country. Thus क्षीरपाण with a ण in क्षीरपाणाः etc., the sense being—people of the country known as उशीनर are milk-drinkers ; also सुरापाण in सुरापाणाः etc., meaning—people of eastern countries are wine-imbibers. पान in these compounds is derived with ल्युट् in the कर्मवाच्य and means that which is drunk, i. e., the drink.

मित—। पीयते इति पानम् । बाहुलकात् कर्मणि ल्युट् । षष्ठ्यर्थे प्रथमा ॥ 'देशे' इत्यस्य देशवासिषु इत्यर्थ इति नागेशः ॥

१०५४ । वा भावकरणयोः ॥ ८।४।१० ॥

दी—। 'पानस्य' इत्येव । क्षीरपाणम्—क्षीरपानम् ।

The न of पान with ल्युट् in the भाव or करणवाच्य optionally changes into ण the cause for the change being in a पूर्वपद । Thus क्षीर etc., meaning either 'drinking of milk' ( भावे ), or a milk-bowl ( करणे ) ।

मित—। भावे करणे वा व्युत्पन्नो यः पानशब्दः तस्य पूर्वपदस्थात् निमित्तात्

परस्य नस्य ण: स्यात् ॥ पीयते इति पानं पानक्रिया। ल्युट् भावे॥ पीयते ऽनेन इति पानं पानपात्रम्। ल्युट् करणे॥ उभयत्र चीरस्य पानम् इति विग्रह:। भावे करणे च एकमेवोदाहरणम् ॥

दी—। "गिरिनद्यादीनां वा" (वार्त्तिक)। गिरिनदी—गिरिणदी। चक्रनितम्बा—चक्रणितम्बा।

गिरिनदी &c., optionally change the न into ण। Thus गिरि &c. चक्र &c.

मित—। गिरिनदीप्रभृतीनां नस्य णो वा॥ गिरेर्नदी गिरिनदी गिरिणदी वा। चक्रमिव नितम्बो यस्याः सा चक्रनितम्बा चक्रणितम्बा वा॥

१०५५। प्रातिपदिकान्तनुम्विभक्तिषु च ॥ ८।४।११ ॥

दी—। पूर्वपदस्थान्निमित्तात् परस्य एषु स्थितस्य नस्य णो वा स्यात्। प्रातिपदिकान्ते—माषवापिणौ। नुमि—व्रीहिवापाणि। विभक्तौ—माषवापेण। पक्षे माषवापिनौ इत्यादि॥

If the cause for the change is in a पूर्वपद, the न is optionally change into ण if it is at the end of the प्रातिपदिक in the उत्तरपद, or in a नुम्, or again in a विभक्ति। Thus माषवापिणौ, the 1st case dual of माषवापिन्, has ण because वापिन् is a प्रातिपदिक in the उत्तर पद and it has न at its end; माषवापाणि, the 1st case plural of माषवाप in the neuter, has ण because the न is in नुम्; माषवापेण, the 3rd case singular of the same, has ण because the न is in a विभक्ति। Also optionally माषवापिनौ, माषवापानि and माषवापेन।

मित—। 'पूर्वपदात्' इति वर्त्तते। तेन च उत्तरपदमाक्षिप्यते। तत्र सामर्थ्यात् 'प्रातिपदिकान्त' इत्यनेनैव सम्बध्यते न नुमा न वा विभक्त्या, असम्भवात्॥ समासस्य उत्तरपदे यत् प्रातिपदिकं तदन्ते यो नः तस्य, समासात् परो यो नुम् तत्र स्थितस्य च नकारस्य, समासादुत्पन्नायां विभक्तौ यो नस्तस्यापि णो वा स्यात्॥ माष: पुन:पुनरुप्यते

माभ्यामिति माषवापिणी माषवापिनी वा। "बहुलमाभीक्ष्ण्ये" ( २९९१—३।२।८१ ) इति णिनिः। इह 'वापिन्' इति नान्तं प्रातिपदिकमुत्तरपदम्। सुबुत्पत्तेः प्रागेव समासः। तेन 'वापिन्' इत्यस्य पदत्वाभावेऽपि उत्तरपदसंज्ञा, उत्तरपदं हि समासस्य चरमावयवे रूढम्। स चावयवः पदं वा प्रातिपदिकं वा उत्तरपदमित्युच्यते॥ व्रीह्यः वप्यन्ते एषु व्रीहिवापाणि व्रीहिवापानि वा। अधिकरणे घञ्। इह उत्तरपदे 'वाप' इति प्रातिपदिकम्, ततो बहिर्नकारः। तेन 'प्रातिपदिकान्ते' इति न प्राप्नोति। अतो 'नुम्' इति पृथग्ग्रहणम्॥ एवं माषवापेण इत्यत्रापि प्रातिपदिकाद्बहिर्विभक्तौ स्थितो नकारः। तस्य चानेन णत्वम्॥

टी—। उत्तरपदं यत् प्रातिपदिकं तदन्तस्यैव णत्वम्। नेह—गर्गाणां भगिनी गर्गभगिनी। अतएव नुम्ग्रहणं कृतम्। अङ्गस्य नुम्विधानात् तद्भक्तो हि नुम्, न तु उत्तरपदस्य॥ किञ्च 'प्रहिण्वन्' इत्यादौ हिवेर्नुमो णत्वार्थमपि नुम्ग्रहणम्। 'प्रेन्वनम्' इत्यादौ तु क्षुभ्नादित्वान्न (? न्नः)।

Here the न at the end of a प्रातिपदिक changes only when the प्रातिपदिक is the उत्तरपद in the compound that is being formed. Thus if we compound with the exposition गर्गाणां भगिनी, the उत्तरपद being भगिनी, which does not end in न, there is no change. Hence it is that नुम् is separately mentioned in the rule. नुम् is enjoined of the entire stem to which the विभक्ति is attached; it is therefore a part of the whole stem and not of the उत्तरपद। Besides the separate mention of नुम् is necessary for the change in the नुम् that attaches itself to the root हिवि as is seen in प्रहिण्वन् &c, The नुम् in the root इवि does not change because प्रेन्वनम् &c. that are derived from it are of the क्षुभ्नादि class.

मित—। 'उत्तरपदं यत्' इत्यादि 'पूर्वपदात्' इत्यस्य अनुवर्त्तनात् लभ्यते इति प्रदर्शितं प्राक्। फलमस्य—गर्गाणां भगिनी इति विग्रहे गर्गभगिनी इत्यत्र णत्वाभावः। इह भगिनी इत्युत्तरपदं न तु तस्य अन्ते नकारः॥ 'अतएव' प्रातिपदिकस्य उत्तरपदत्वादेव नुमि अप्राप्तं यत् णत्वं तदर्थं 'नुमग्रहणं कृतं' नुम् पृथगुच्यते इत्यर्थः॥ तत्प्राप्तिमेव दर्शयति 'अङ्गस्य' इत्यादिना। 'व्रीहिवापाणि' इत्यस्य व्रीहिवापशब्दात् जस्। जसः शिः। 'व्रीहिवाप इ' इति स्थिते नुमि 'व्रीहिवापन् इ' इति जातम्। इह 'व्रीहिवाप' इत्येव अङ्गम्, न तु 'वाप' इति। नुम् च अङ्गस्य आगमः। अतः "आगमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते" (परिभाषा) इति व्रीहिवापग्रहणे नुम् गृह्यते वापमात्रग्रहणे तु न गृह्यते उत्तरपदे वापन् इति न लभ्यते। तेन 'प्रातिपदिकान्ते' इति नुमो णत्वं न प्रयोजयति॥ नुम्ग्रहणस्य प्रयोजनान्तरमप्याह—क्षिब्धिति। क्षिवि प्रीणने इकारेत्। तेन नुमि शतरि प्रक्षिण्वन् इति नुमि णत्वं दृश्यते। तदर्थमपि नुम्ग्रहणं कर्त्तव्यम्॥ यद्येवम् इवि व्याप्तौ इत्यस्यापि नुमः सति निमित्ते णत्वं स्यात्। 'प्रेन्वनम्' इति च णत्वाभावो दृश्यते। कथं नाम तत्? क्षुभ्नादिषु प्रेन्वनमित्येवमादयो द्रष्टव्याः॥ इह 'क्षुभ्नादित्वान्न' इति निर्विसर्गकः पाठो लिपिकरप्रमादजः। यद्वा क्षुभ्नादित्वात् न णकारः इति कथञ्चित् समर्थनीयः॥

टी—। "युवादेर्न" (वार्त्तिक)। रम्ययुना। परिपक्वानि।

If words of the युवादि class be in the उत्तरपद, the न at the end, or in a नुम्, or again in a विभक्ति does not change into ण। Thus रम्ययूना without ण though न is at the end of the उत्तरपद। Similarly परिपक्वानि does not change the न in its नुम् because पक्व is of the युवादि class.

मित—। युवादेः सम्बन्धे "प्रातिपदिकान्त—" (१०५५) इति विधिर्न स्यात्॥ 'रम्ययूना' इति प्रादिकान्तनकारस्य णत्वभावः। 'परिपक्वानि' इति नुमि स्थितस्य॥

टी—। "एकाजुत्तरपदे णः" (३०७—८।४।१२)। नित्यमित्युक्तम्। वृत्रहणौ। हरिं मानयतीति हरिमाणी। नुमि—क्षीरपाणि। विभक्तौ—क्षीरपेण, रम्यविणा।

It has been explained under the rule "एकाच्—" ( 307 ) that the ण at the end of a प्रातिपदिक etc. is compulsory if the उत्तरपद has only one vowel in it. Thus वृत्रहणौ, the उत्तरपद being हन्, an एकाच् ending in न। Similarly हरिमाणौ, worshipper of हरि, the उत्तरपद being मान् also having न final. Again चीरपाणि has ण in नुम् the उत्तरपद being प with only one vowel ; चीरपेण has ण in the विभक्ति। वि is पक्षी ; रम्यविः a fine bird ; the instrumental singular of this is रम्यविणा with ण, the उत्तरपद having only one vowel.

मित—। "एकाजुत्तर—" (३०७) इति 'प्रातिपदिकान्त—" इत्यस्य विकल्पस्य बाधकः॥ वृत्रहन् इति क्विपि एकाजुत्तरपदम्॥ हरिमान् इति च क्विपि एकाजुत्तरपदम्। स्त्रियां ङीपि हरिमाणौ। मानयतीति मानी इति प्रागेव यदि ङीप क्रियते यदा हरेर्मानी इति विग्रहे हरिमानी इति तु न णत्वम्। नापि नकारः प्रातिपदिकान्तः न च उत्तरपदमेकाच्॥ चीरं पिबतीति कप्रत्यये चीरप इत्येकाजुत्तरपदम्॥ रम्यो विः पक्षी। तेन रम्यविणा॥

१०५६। कुमति च॥ ८।४।१३॥

दो—। कवर्गवत्युत्तरपदे प्राग्वत्। हरिकामिणौ। हरिकामाणि। हरिकामेण।

If the उत्तरपद has कवर्ग in it the न at the end of a प्रातिपदिक etc. becomes always ण। Thus हरिकामिणौ with ण at the end of a प्रातिपदिक, हरिकामाणि in नुम्, हरिकामेण in the विभक्ति।

मित—। 'प्राग्वत्' इति प्रातिपदिकान्तनुम्विभक्तिषु नित्यं णत्वम् इत्यर्थः। "एकाजुत्तर—" इति वार्त्तिकं लक्षयति॥ हरिं कामयते इति ताच्छील्ये णिनौ हरिकामिणौ। 'कामिन्' इत्युत्तरपदम्। तदन्तस्य नस्य णः॥ हरिं कामयन्ते इति ण-प्रत्यये हरिकामाणि। स्त्रियः पुरुषाश्च इति सामान्ये नपुंसकम्। नुमि स्थितस्य णत्वम्॥ हरिकामेण इति विभक्तिस्थस्य॥

१०५७। पदव्यवायेऽपि ॥ ८।४।३८॥

दी—। पदेन व्यवधानेऽपि णत्वं न स्यात्। माषकुम्भवापेन। चतुरङ्गयोगेन।

The change does not take place when between the न and the cause for the change a whole पद intervenes. Thus माष etc. does not change into ण because between न and ष there is कुम्भ which is a पद। Similarly चतुरङ्ग etc. has no ण because अङ्ग is a पद between न and र।

मित—। नकारस्य णत्वनिमित्तस्य च मध्ये यत्र पदेन केनचित् व्यवधानमस्ति तत्र णत्वं न भवति॥ वपनं वापः। भावे घञ्। माषाणां कुम्भः माषकुम्भः। तस्य वापः। तेन। "प्रातिपदिकान्त—" (१०५५) इति वैकल्पिकं णत्वं प्राप्तम्। तस्य च प्रतिषेधः॥ यद्वा—कुम्भस्य वापः कुम्भवापः। माषाणां कुम्भवापः। तेन। "कुमति च" (१०५६) इति नित्यप्राप्तिः। तस्याश्च प्रतिषेधः॥ चत्वारि अङ्गानि अस्य चतुरङ्गः। क्रीडाविशेषः, सेना वा। तेन योगः। तेन। "कुमति च" इत्यस्य प्रतिषेधः॥ ननु माषकुम्भः चतुरङ्गः इत्यादिषु 'कुम्भ' 'अङ्ग' इत्यादीनां "उत्तरपदत्वे चापदादिविधौ" (वार्त्तिक) इति पदत्वं नास्ति। तत् कथं पदेन व्यवधानम्? नैवम्। अपदादिविधौ इति पर्युदासः। तेन उत्तरपदस्य यदा आदिभिन्नस्य वर्णस्य किञ्चिद्विधीयते तदैव पदत्वप्रतिषेधः। नेह 'कुम्भ' 'अङ्ग' इत्यादीनां विधिः, तदस्त्येव पदत्वम् णत्वप्रतिषेधश्च भवति॥

दी—। "अतद्धित इति वाच्यम्" (वार्त्तिक)। आर्द्रगोमयेण। शुष्कगोमयेण।

The prohibition does not operate if the intervening पद is a पद because some तद्धित is attached to it. Thus आर्द्र etc. has ण in spite of the prohibition because गो is a पद in connection with the तद्धित affix मयट्।

मित— । तद्धिते यत् पदं तेन व्यवधाने तु न प्रतिषेध: ॥ गो पुरीषं गोमयम् । मयट्प्रत्ययः । तस्मिन् परे गोशब्दस्य पदसंज्ञा । आर्द्रं गोमयम् तेन ॥

१०५८ । कुस्तुम्बुरूणि जातिः ॥ ६।१।१४३ ॥

दी— । अत्र सुट् निपात्यते । कुस्तुम्बुरुर्धान्याकम् । क्लीवत्वमतन्त्रम् । जातिः किम् ? कुतुम्बुरूणि, कुत्सितानि तिन्दुकीफलानि इत्यर्थः ।

The class-name कुस्तुम्बुरु is obtained with a स before त by निपातन in this rule. कुस्तुम्बुरु is धान्याक, coriander. The gender is immaterial. Why say जातिः ? Witness कुतुम्बुरु without सुट् meaning 'bad तिन्दुकी seeds'.

मित— । कुस्तुम्बुरूणि इत्यत्र क्लीवत्वं अनाग्रहः । तदाह अतन्त्रम् इति । तन्त्रं शास्त्रं विधिरित्यर्थः । क्लीवत्वं न विधीयते इति भावः ॥ एवं बहुत्वमपि । अतएव 'कुस्तुम्बुरुर्धान्याकम्' इति पुंसि एकवचनेन निर्देशः ॥ 'अत्र' अस्मिन् कुस्तुम्बुरुशब्दे 'सुट् निपात्यते इहैव सूत्रे निपात्यते इत्यर्थः ॥ कुतुम्बुरूणि इत्यत्र "कुगति—" ( ७६१—२।२।१८ ) इति समासः । तुम्बुरुशब्दस्य जातित्वेऽपि कुतुम्बुरुशब्दो न जातिपरः तेन न सुट् ॥

१०५९ । अपरस्पराः क्रियासातत्ये ॥ ६।१।१४४ ॥

दी— । सुट् निपात्यते । अपरस्पराः सार्था गच्छन्ति । सततमविच्छेदेन गच्छन्ति इत्यर्थः । 'क्रिया—' इति किम् ? अपरपरा गच्छन्ति । अपरे च परे च सकृदेव गच्छन्ति ।

The word अपरस्पर has a सुट् by निपातन in this rule when implying ceaselessness of action. Thus अपरस्पराः etc., there and yonder are caravans passing, i. e., passing always without cessa-

tion. Why say क्रिया etc.? Witness अपरपराः etc. meaning—others and yet others are passing, i. e., passing simultaneously once only.

मित—। अपरस्पराः इत्यत्र सुट् निपात्यते क्रियासातत्ये गम्यमाने ॥ अपरे च परे च इति विग्रहे "द्वन्द्वे च" (२२४—१।१।३१) इति सर्वनामसंज्ञानिषेधः। अपरपरा इति रूपम्। क्रियासातत्ये तु अपरस्परा इति ॥

१०६०। गोष्पदं सेवितासेवितप्रमाणेषु ॥ ६।१।१८८ ॥

टी—। सुट् सस्य षत्वञ्च निपात्यते। गावः पद्यन्ते अस्मिन् देशे स गोभिः सेवितो गोष्पदः। असेविते—अगोष्पदान्यरण्यानि। प्रमाणे—गोष्पदमात्रं क्षेत्रम्। 'सेवित—' इत्यादि किम्? गोः पदं गोपदम्।

In the word गोष्पद we have सुट् and the change of स into ष by निपातन in this rule meaning what is frequented, or what is incapable of being frequented, or again the dimensions of an object. Thus a piece of land is गोष्पद meaning thereby that cows are seen on it. Forests are अगोष्पद implying that it is not possible for cows to graze there. A field is a गोष्पद in the sense that it is small in measure.

मित—। 'सेवित' इति कर्मणि क्तः ॥ 'असेवित' इति भावे क्तः। सेवितं सेवा। अविद्यमानं सेवितमस्मिन् असेवितः यत्र गवां प्रचारो न सम्भवति सः ॥ सेविते असेविते प्रमाणे च योऽर्थे गोष्पदशब्दो निपात्यते। अर्थविशेषे निपातनं न हि अविशेषे ॥ गावः पद्यन्ते अस्मिन् इति अधिकरणे घः। घञि प्राप्ते निपातनादेव घः। यद्वा "गोचरसञ्चर—" (३२६८—३।३।११९) इत्यत्र चकारस्य अनुक्तसमुच्चयार्थत्वात् घः। अथवा घञेवेह प्रत्ययः, संज्ञापूर्वको विधिरनित्य इति वृद्ध्यभावः। पदादित्वाद्-प्राप्तं षत्वं निपात्यते ॥ गावो न पद्यन्ते एषु इति तु सन्देहः इह गोप्रचारः प्रतिषिद्ध

त्तम असम्भव इति। आदौ अगोष्पदानि शरच्चेत्रापि इत्येतत् न गोष्पदानि इति नञ्-समासेनैव सिध्यति न हि तदर्थमसेवितग्रहणं कार्य्यम्। अन्यार्थमसेवितग्रहणं क्रियते तदाह 'अगोष्पदान्तरण्यानि' इति॥ गौ: पद पदचीपस्थानं गोष्पदं यदि तेन प्रमाणं गम्यते। अन्यथा गोपदम्। गोष्पदं मात्रा प्रमाणमस्य गोष्पदमात्रम् अल्पप्रमाणमित्यर्थ:। मात्राशब्दस्य प्रयोगं विनापि सुटा षत्वं न चेह प्रमाणं गंस्यते। तथा च 'गोष्पदं चेत्रम्' इत्येव नागेशस्य पाठः॥

१०६१। आस्पदं प्रतिष्ठायाम् ॥ ६।१।१४६ ॥

दी—। आत्मयापनाय स्थाने सुट् निपात्यते। आस्पदम्। 'प्रतिष्ठायाम्' इति किम्? आ पदात् आपदम्।

The word आस्पद takes सुट् by निपातन here in the sense 'footing for maintenance of self'. Why say प्रतिष्ठायाम्? Witness the अव्ययीभाव compound आपदम् without सुट् meaning reaching down to the foot.

मित—। प्रतितिष्ठत्यस्यामिति प्रतिष्ठा स्वनिवासस्थानम्। अङ् अधिकरणे। तस्यां द्योत्यायामास्पदमिति निपात्यते॥ आ समन्तात् पद्यते अस्मिन् आस्पदम् आत्मयापनाय स्थानम्। आत्मनः शरीरस्य यापनं धारणमात्मयापनं शरीररक्षणम्। प्राप्तवत् घः घञ् वा अधिकरणे क्लीबत्वमपि निपातनादेव॥

१०६२। आश्चर्य्यमनित्ये ॥ ६।१।१४७ ॥

दी—। अद्भुते सुट्। आश्चर्य्यं यदि स भुञ्जीत। 'अनित्ये' किम्? आचर्य्यं कर्म शोभनम्।

The word आश्चर्य takes सुट् by निपातन here if it means 'wonderful' or some 'rare phenomenon.' Thus आश्चर्य्यम् etc, I should be surprised if he ate. Why say अनित्ये? Witness आचर्य्यम् etc. etc. only good acts have to be done.

मित—। अनित्यं कादाचित्कम् अतद्विनीकरणम् अद्भुतम् अद्भुतमित्यब्युत्पन्नम्। आङ्पूर्वात् चरतेर्यति सुटा आश्चर्यमिति भवति अद्भुतमिति चेत् तस्यार्थः॥ यो न भुङ्क्ते तस्य भोजनमाश्चर्यम्। "शेषे लुडयदो" (२८०८—३।३।१५१) इति चित्रीकरणे लिङ्॥ अनित्यव्यतिरिक्ते अर्थे यति आचर्यमिति भवति; "चरेराङि चागुरौ" (३८४८, वा) इत्याङ्पूर्वाच्चरतेर्यत्॥

१०६३। वर्चस्केऽवस्करः॥ ६।१।१४८॥

दी—। कुत्सितं वर्चो वर्चस्कमन्नमलम्। तस्मिन् सुट्। अवकीर्यते इत्यवस्करः। 'वर्चस्के' किम्? अवकरः।

The word अवस्कर takes सुट् when meaning what is left of rice sticking to the boiling pot. वर्चस्क is 'the dregs of rice' derived from वर्चस् with कन् in the sense कुत्सित। अवस्कर has the derivative meaning 'what is scattered.' Why say वर्चस्के? Witness अवकर which has the same derivation has no सुट्। The difference is, अवकर is any thing that is scattered, while अवस्कर means the dregs of rice which are also scattered while cleaning the utensils.

मित—। वर्चः तेजः लक्षणया तेजस्करं वस्तु अन्नादिकमित्यर्थः। कुत्सितं वर्चः वर्चस्कम्। कन् कुत्सिते। "भाण्डेषु यदन्नं काष्ठादिना अपकृष्य काकादिभ्यो विकीर्यते भूमावक्षिप्यते। किरतेरप् कर्मणि॥ अन्नमलव्यतिरिक्ते अर्थे न सुट्, अवकर इति रूपम्॥

१०६४। अपस्करो रथाङ्गम्॥ ६।१।१४९॥

दी—। अपकरः अन्यः।

The word अपस्कर takes सुट् if meaning 'carriage-wheel.' In other senses we have अपकर without सुट्।

मित—। रथाङ्गं चक्रम्। अपरिकरति वहति अनेन अपस्करो रथचक्रम्। अपरिकरतेः करण घः॥

१०६५। विष्किरः शकुनौ वा॥ ६।१।१५०॥

दो—। पक्षे विकिरः। वा वचनेनैव सुड्विकल्पे सिद्धे विकिरग्रहणं तस्यापि शकुनेरन्यत्र प्रयोगो मा भूत् इति वृत्तिः। तन्न, भाष्यविरोधात्।

The word विष्किर optionally takes सुट् when meaning a bird. The alternative form is विकिर। Hare the Vritti says—The pariicle वा is enough to make the सुट् optional in the case of a bird; yet विकिर is directly mentioned in the rule to show that विकिर also is not used except to mean a bird. This goes against the भाष्य and is therefore inadmissible.

मित—। विकिरति विक्षिपति इति विष्किरः विकिरो वा। किरतेः कः। "परिनिविभ्यः—" ( २२७५—८।३।७० ) इति षत्वम्। तत्र भाष्यः शकुनावेव। इतरस्तु शकुनौ अन्यत्रापि॥ वृत्तिकार आह "विष्किरः शकुनौ वा" इत्येतावतैव सुड्विकल्पो लभ्यते। तथापि सूत्रे विकिरशब्दो गृह्यीत इत्यादि। एतत्तु "विष्किरः शकुनौ विकिरो वा" इति सूत्रपाठे एव सङ्गच्छते। भाष्ये पुनः "विष्किरः शकुनौ विकिरो वा" इति वार्त्तिकरूपेणोपस्थापितं प्रत्याख्यातञ्च। एवं भाष्यविरोधात् वृत्तेः पाठो नादर्त्तव्यः तन्मूलकं विकिरशब्दस्य शकुनेरन्यत्र प्रयोगो मा भूत् इत्यनुमानञ्च हेयमेव॥ "विष्किरः शकुनौ वा" इत्येव भाष्यसम्मतः सूत्रपाठः प्रतिभाति। अर्थश्च—'शकुनौ अभिधेये 'विष्करो वा' सुट् भवति वा, अन्यत्र सुडभावः विकिर इति रूपम्॥

१०६६। प्रतिष्कशश्च कशेः॥ ६।१।१५२॥

दो—। 'कश गतिशासनयोः' इत्यस्य प्रतिपूर्वस्य पचाद्यचि

सुट् निपात्यते षत्वञ्च। सहाय: पुरोयायी वा प्रतिष्कश इत्युच्यते। 'कशे:' किम्? प्रतिगत: कशां प्रतिकश: अश्व:। यद्यपि कशेरेव कशा तथापि 'कशे:' इति धातोर्ग्रहणमुपसर्गस्य प्रतेर्ग्रहणार्थम्। तेन धात्वन्तरोपसर्गान्न।

The word प्रतिष्कश, when derived directly from the root कश to move or to check, with प्रति as an उपसर्ग and the affix अच् takes सुट् and the change into ष। प्रतिष्कश is a companion or one that moves in advance. Why say कशे:? Witness प्रतिकश:, a horse, with the derivation प्रतिगत: etc. coming in the way of the whip. But in this derivation कशा comes from the root कश, then why not सुट् and षत्व here too? The fact is the root कश is mentioned to imply that प्रति should be an उपसर्ग to it; no सुट् if it is an उपसर्ग to some other root in the derivation. The exposition प्रतिगत: etc. makes प्रति an उपसर्ग to the root गम and not to कश; hence no सुट्।

मित—। कशे: कशधातो: प्राप्त: प्रतिष्कशशब्द इह सूत्रे निपातनात् सिद्ध इत्यर्थ:॥ प्रतिकशति प्रतिगच्छति इति प्रतिष्कश: सहाय: पुरोयायी वा। पचाद्यच्। अस्यां व्युत्पत्तौ साक्षात् कशधातोरेव प्राप्त: प्रतिष्कश इति। अत इह सूत्रे निपातनात् सुट् षत्वञ्च॥ ननु कशति अश्वं प्रति गच्छति इति कशा पचाद्यचि स्त्रियाम्। प्रतिगत: कशां प्रतिकश: अश्व: इत्यत्र कशेरेव सिद्धे शब्दे कथं न सुट् षत्वञ्च? उच्यते—सूत्रे 'कशे:' कशधातोर्थं: 'प्रतिष्कश:' इति वचनात् 'प्रति' इति कशेरेव उपसर्गो विज्ञायते। तेन यदा स 'धात्वन्तरस्य उपसर्गो' भवति नास्ति तदा सुट्। इह तु 'प्रतिगत:' इत्युक्ते गमेरेव उपसर्ग: प्रति:, न कशे:। तेन न सुट्॥

१०६७। प्रस्कण्वहरिश्चन्द्रावृषी॥ ६।१।१५३॥

दी—। हरिश्चन्द्रग्रहणममन्त्रार्थम्। 'ऋषि' इति किम्? प्रकण्वो देश:। हरिचन्द्रो माणवक:।

The words प्रस्कण्व and हरिश्चन्द्र take सुट् when referring to sages. हरिश्चन्द्र is allowable in Mantras even when not referring to a sage. This rule sanctions its use outside Mantras. Why say ऋषौ ? Witness प्रकण्वः etc., a land of unrighteousness; हरिचन्द्रः etc., the urchin is named Harichandra.

मित—। प्रस्कण्वशब्दे हरिश्चन्द्रशब्दे च सुट् निपात्यते ऋषौ अभिधेये। ऋषिः प्रस्कण्वः, राजर्षिर्हरिश्चन्द्रः ॥ प्रभूतं कण्वं पापमस्मिन् प्रकण्वो देशः, प्रगतं कण्वमस्मादिति वा ॥ "ऋश्चान्द्रोत्तर—" ( ३५२७—६।१।१५१ ) इति ऋषिभिन्नेऽपि हरिश्चन्द्रः सिद्धो मन्त्रे। इह अमन्त्रेऽपि यथा साधुः स्यात् तदर्थं वचनम् ॥

१०६८। मस्करमस्करिणौ वेणुपरिव्राजकयोः ॥ ६।१।१५४ ॥

दी—। मकरशब्दः अव्युत्पन्नः। तस्य सुट् इनिश्च निपात्यते। 'वेणु—' इति किम्? मकरो ग्राहः। मकरी समुद्रः।

मस्कर with सुट् in the sense of वेणु, a reed, and मस्करिन् with सुट् and इनि in the sense परिव्राजक, a mendicant, are derived by निपातन in this rule. मकर is a primitive word; it takes सुट् and इनि by निपातन। Why say वेणु etc.? Witness मकर meaning 'alligator' and मकरी meaning 'sea' without सुट्।

मित—। 'मस्कर' इति शब्दरूपं निपात्यते वेणौ वाच्ये 'मस्करिन्' इति च परिव्राजके ॥ वेणोरन्यत्र मकरो ग्राहः ॥ मकराः सन्त्यस्मिन् इति मत्वर्थीये इनौ मकरी मस्करी वा। आद्यः समुद्रवाची द्वितीयस्तु इह परिव्राजके निपात्यते ॥ एवं हि मतान्ते' वृत्तिकारः प्राह। भाष्ये तु मा कुरुत कर्माणि इति भाषणशीले अभिधेये माङि उपपदे कृञस्ताच्छील्ये इनिः माङो ह्रस्वः कृञः सुट् च निपात्यते इति मस्करिन्शब्दस्य व्युत्पत्तिरुक्ता, वृत्तावपि दृश्यते। एवञ्च मकरी इति प्रयु-

दाहरणं चिन्त्यम् ॥ मस्कर-शब्दात्तु न, मस्करी। तथा सति मस्करिन्‌यहणं व्यर्थं भवति ॥

१०६९। कास्तीराजस्तुन्दे नगरे ॥ ६।१।१५५ ॥

टी—। ईषत्तीरमस्यास्तीति कास्तीरं नाम नगरम्। अजस्येव तुन्दमस्य इति अजस्तुन्दं नाम नगरम्। 'नगरे' किम्? कातीरम्। अजतुन्दम् ॥

The words कास्तीर and अजस्तुन्द are names of two cities and got by निपातन in this rule. कास्तीर is a city with a short length of sea-beach. अजस्तुन्द is another with its middle like that of a goat. Why say नगरे? Witness कातीर and अजतुन्द without स in a different sense.

मित—। "ईषदर्थे" (१०२१—६।३।१०५) इति कुशब्दस्य कादेशे कातीरादय: ॥

१०७०। कारस्करो वृक्ष: ॥ ६।१।१५६ ॥

टी—। कारं करोतीति कारस्करो वृक्ष:। अन्यत्र कारकर:। केचित्तु कस्कादिष्विदं पठन्ति न सूत्रेषु।

The word कारस्कर has सुट् by निपातन in this rule in the sense 'tree'. Thus कारस्कर, that which brings in revenue, i. e., a tree But कारकर is any thing that adds to the revenue, except trees. Some place this in the कस्कादि list and not among the Sutras.

मित—। एर एव कार:। कारं करोतीति विग्रहे कारस्कर: कारकरश्च। "दिवाविभा—" (२८३५—३।२।२१) इति ट:। वृ़क्षेऽर्थो राजस्यस्मगुपदाते इति वृ़क्षो-

ऽपि कारं करोति। तत्र तु सुटा कारस्कर इति इह निपात्यते ॥ केचित् इत्यश्रद्धा सूचयति। कस्कादीनां सकारो विसर्गजात इह तु न तथा इत्यश्रद्धा ॥

१०७१। पारस्करप्रभृतीनि च संज्ञायाम् ॥ ६।१।१५७ ॥

टी—। एतानि ससुट्कानि निपात्यन्ते नाम्नि। पारस्करः। किष्किन्धा।

Words listed with पारस्कर leading, are obtained by निपातन when they are used as proper names. Thus पारस्कर, name of a country or town ; किष्किन्धा, name of a mountain.

मित—। संज्ञायां विषये पारस्करादीनि शब्दरूपाणि ससुट् कानि साधूनि भवन्ति इत्येव निपातनात् ॥ पारं करोतीति पारस्करो देशविशेषः। "कृञो हेतु—" ( २९३४—३।२।२० ) इति हेतौ टः ॥ किम् निन्दायामव्ययम्। वीप्सायां द्वित्वे किंकिम् कुत्सितं सर्वम्। किं किं दधाति इति घञि प्राप्ते निपातनात् कः। ततः उपपदस्य पूर्वार्द्धस्य मलोपः, परार्द्धस्य च सुट् षत्वञ्च निपातनात्। स्त्रियां किष्किन्धा पर्वत-विशेषस्य गुहा ॥

टी—। "तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च" ( गणसूत्र )। तात् पूर्वं चर्त्वेन दकारो बोध्यः॥ तद्बृहतो-र्दकारतकारौ लुप्येते, करपत्योस्तु सुट्। 'चोरदेवतयोः' इति समुदायोपाधिः। तस्करः। बृहस्पतिः।

When कर and पति are the उत्तरपद respectively, तद् and बृहत् drop their final letter and the उत्तरपद takes सुट्। Here सुट् तलोप is really सुट् दलोपः which becomes सुट् तलोपश्च। The meaning then is तद् drops द and बृहत् drops त while कर and पति take सुट्।

'चौरदेवतयोः' is the sense of the entire compound respectively, i. e., तद् drops द, कर becomes स्कर and the compound तस्कर which thus results means a thief ; बृहत् drops त, पति becomes स्पति and the resultant compound बृहस्पति refers to a god.

मित—। दतलोपः इत्यस्य चर्लें तुतलोपः इति रूपम्। तदृबृहतोः तुतलोपः इति यथासंख्यं नेयम्। तेन तदः दलोपः बृहतः तलोपः॥ तदृबृहतोः करपत्योः इत्यपि यथासंख्यमेव। तेन तदो दलोपः करे परे, बृहतस्तलोपः पत्यौ परे इत्यर्थः॥ चौरदेवतयोः अर्थयोः। स चार्थः पूर्वोत्तरपदसमुदायस्य। यथासंख्यञ्च। सुडिति उभयत्र उत्तरपदस्य॥ तदेवमयमर्थः। तदो दलोपः करे उत्तरपदे करस्य च सुट् चोरश्चेत् समासार्थः। बृहतस्तलोपः पत्यौ उत्तरपदे पत्युश्च सुट् देवता चेत् समासार्थः॥ तत् सर्वजनविदितं निन्दितं कर्म चौर्य्यमिति शेषः करोतीति तस्करः। ताच्छील्ये "कृञो हेतु—" (२६३४) इति टः॥ बृहती वाक् [ तथा च श्रुतिः "वाग्वैबृहती" ]। बृहत्याः पतिः इति विग्रहे "कुक्कुट्यादीनामण्डादिषु" (७२६, वा) इति पुंवद्भावे 'बृहत् पति' इति जाते अनेन बृहस्पतिः॥

दी—। "प्रायस्य चित्तिचित्तयोः" (गणसूत्र)। प्रायश्चित्तिः। प्रायश्चित्तम्॥ वनस्पतिः। इत्यादि। आकृतिगणोऽयम्।

चित्ति and चित्त take सुट् when in the उत्तरपद after प्राय। Thus प्रायश्चित्ति etc., vow for penance. वनस्पति etc., also are in this list which is not a closed one but is added to from usage.

मित—। 'प्रायस्य—' इति सूत्रांशमात्रम्। सूत्रं तु 'प्रायस्य चित्तिचित्तयोः सुडस्कारो वा' इति। अयमर्थः—चित्तिचित्तयोरुत्तरपदयोः सुट् प्रायस्य पूर्वपदस्य अस्कारो वा। सुडित्यागमः अस् इत्यादेशः। ताभ्यां योगे उभयत्र षष्ठी। चिती संज्ञाने। भावे क्तिन् क्तो वा। चित्तिः निश्चयः, चित्तञ्च। प्रायः तपः। प्रायस्य चित्तिः चित्तं वा इति विग्रहे प्रायश्चित्तिः प्रायश्चित्तम्॥ वनस्य पतिः वनस्पतिः इत्यपि

पारस्कारादिषु द्रष्टव्यः। आकृत्या प्रयोगेषु पारस्करादयो गण्यन्ते इत्याह 'आकृतिगणोऽयम्' इति ॥

इति श्रीसारदारञ्जनविद्याविनोदकृतायां
सिद्धान्तकौमुदीव्याख्यायां मितभाषिण्यां समासप्रकरणम्।

समाप्तश्च द्वितीयो भागः ॥

व्याख्याने कौमुदीये हरिहरचरणे यातु भागो द्वितीयः
प्रीयन्तां तातपादा विदधतु च धृतिं शेषसम्पूर्त्तये नः।
आर्य्याः कार्य्यं प्रसन्ना नियतशुभकरीराशिषः संदृणन्तु
प्रत्यूहा यान्तु दूरे दिनकरकिरणैर्धाविता वान्धकाराः ॥

---

# OPINIONS

ON

## BHATTOJI'S SIDDHANTA-KAUMUDI

"......European students...will be grateful for your new work which will remove doubts and difficulties and enable them to grasp the full meaning of Bhattoji's Remarks......"—*Dr. E. Hultzsch, Halle.*

"..... Of great value.. I should like to say how much I admire the purity and excellence of the English style......I found your exposition very clear...'—*E. J. Thomas Esqr. University Library, Cambridge.*

"......I have gone carefully through your Tika and am delighted with it. It is full of useful matter and written in the style of old writers......It will give one deep insight into the science of Grammar..." —*Mahamahopadhyaya Pandit Kamahayanath Tarka-vagisa.*

"......The tika is very well done I was delighted to read it"—*Pandit Ganes Sastri Godbole, Poona.*

"I like exceedingly the plan...your commentary is so lucid...Older commentators...never try to explain the text in the way modern scholars learning without the aid of a regular Pandit would like it to be explained... Your Commentary would serve the needs of both the old and the new school."—*Gajendragadar, M.A. Ph. D, Elphinstone College, Bombay.*

Published by **K. RAY.** 7, Bhawani Dutt Lane.

---

Printed by C. C. Santra at the **LALIT PRESS**
*81, Simla Street, Calcutta.*

CENTRAL ARCHAEOLOGICAL LIBRARY,
NEW DELHI

Borrower's Record.

Catalogue No. Sa 4V/Dik/Ray.- 447.

Author—Dikshita, Bhattoji.

Title—Siddhanta-Kaumudi.
Vol.II,Pt.2.

| Borrower No. | Date of Issue | Date of Return |
|---|---|---|
| Sri O.V. Alagesan | 4/1/64 | 5/8/6 |
| Dy. Minister Rly Board 85-C G. Press | 28-6-60 | 2-8-60 |
| | | |
| | | |
| | | |
| | | |

P.T.O.